अदृश्यं वा प्रकाशं वा लोकविद्वेषमागतान् ॥ १० ॥
राजा रहसि दूष्यं हि दर्शनायोपमन्त्रयेत् ।
गूढशस्त्रा विशेयुस्तत्पश्चादासन्नुज्झिता नराः ॥ ११ ॥
विश्वस्तांस्तान्विचिन्वीयुर्द्वाःस्थाः कक्षान्तरं गतान् ।
ते शस्त्रग्राहका ब्रूयुः प्रयुक्ताः स्म इति स्फुटं ॥ १२ ॥
इति दूष्यांस्तु सन्दूष्य प्रजानामभिवृद्धये ।
विनयन् प्रिय उत्कर्षं राजशल्यं समुद्धरेत् ॥ १३ ॥
यथा बीजाङ्कुरः सूक्ष्मः परिपुष्टोऽभिरक्षितः ।
काले फलाय भवति साधु तद्वदियं प्रजा ॥ १४ ॥
उद्वेजयति तीक्ष्णेन मृदुना परिभूयते ।
तस्माद्यथार्हतो दण्डं नयेत्पक्षमनाश्रितः ॥ १५ ॥
इति कामन्दकीये नीतिसारे कण्टकशोधनं
नाम षष्ठः सर्गः ॥ ६ ॥

सप्तमसर्गप्रारम्भः ॥

प्रजार्थश्रेयसे राजा कुर्वीतात्मजरक्षणं ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ॥ १ ॥
राजपुत्रा मदोन्मत्ता गजा इव निरङ्कुशाः ।
भ्रातरं वा विनिघ्नन्ति, पितरं वाऽभिमानिनः ॥ २ ॥
राजपुत्रैर्मदोपेतैः प्रार्थ्यमानमितस्ततः ।
दुःखेन रक्ष्यते राज्यं व्याघ्राघ्रातमिवामिषं ॥ ३ ॥

रक्ष्यमाणा यदि च्छिद्रं कथञ्चित्प्राप्नुवन्ति ते ।
सिंहशावा इव घ्नन्ति रक्षितारमसंशयं ॥ ४ ॥
विनयोपग्रहान् भृत्यैः कुर्वीत नृपतिः सुतान् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥ ५ ॥
विनीतमौरसं पुत्रं यौवराज्येऽभिषेचयेत् ।
दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनं ॥ ६ ॥
राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि ॥ ७ ॥
व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैः ।
तथा च क्लेशयेदेनं यथा स्यात्पितृगोचरः ॥ ८ ॥
याने शय्यासने पाने भोज्ये वस्त्रे विभूषणे ।
सर्वत्रैवाप्रमत्तः स्याद्वर्ज्जीत विषदूषितं ॥ ९ ॥
विषघ्नैरुदकैः स्नातो विषघ्नमणिभूषितः ।
परीक्षितं समश्नीयाज्जाङ्गुलाविद्भिषग्वृतः ॥ १० ॥
भृङ्गराजः शुकश्चैव शारिका चेति पक्षिणः ।
क्रोशन्ति भृशमुद्विग्ना विषपन्नगदर्शनात् ॥ ११ ॥
चकोरस्य विरज्येते नयने विषदर्शनात् ।
सुव्यक्तं माद्यति क्रौञ्चो म्रियते कोकिलः किल ॥ १२ ।
नित्यं जीवस्य च ग्लानिर्जायते विषदर्शनात् ।
एषामन्यतमेनापि समश्नीयात्परीक्षितं ॥ १३ ॥
मयूरपृषतोत्सर्गे न भवन्ति भुजङ्गमाः ।

तस्मान्मयूरपृषतौ भवने नित्यमुत्सृजेत् ॥ १४ ॥
भोज्यमन्नं परीक्षार्थं प्रदद्यात्पूर्वमग्नये ।
वयोभ्यश्च ततो दद्यात्तत्र लिङ्गानि लक्षयेत् ॥ १५ ॥
धूमार्च्चिर्नीलिता वह्नेः शब्दस्फोटश्च जायते ।
अन्नेन विषदिग्धेन वयसां मरणम्भवेत् ॥ १६ ॥
अस्विन्नता मादकत्वमाशु शैत्यं विवर्णता ।
अन्नस्य विषदिग्धस्य तथोष्मा स्निग्धमेचकः ॥ १७ ॥
व्यञ्जनस्याशु शुष्कत्वं क्वथने श्यामफेनता ।
गन्धस्पर्शरसाश्चैव नश्यन्ति विषदूषणात् ॥ १८ ॥
छायाऽतिरिक्ता हीना वा स्याद्रसे विषदूषिते ।
दृश्यते राजिरूर्द्ध्वा च फेनमण्डलमेव च ॥ १९ ॥
रसस्य नीला पयसश्च ताम्रा
मद्यस्य तोयस्य च कोकिलाभा ।
श्यामा सरन्ध्रा विषदूषितस्य
मध्ये भवत्यूर्द्ध्वगता च लेखा ॥ २० ॥
आर्द्रस्य सर्व्वस्य भवेत्तु सद्यः
प्रम्लानभावो विषदूषितस्य ।
पाक्वं विना क्वाथविनीतभावः
सश्यामता चेति वदन्ति तज्ज्ञाः ॥ २१ ॥
शुष्कस्य सर्व्वस्य विषोपदेहा-
द्विशीर्णता वाऽप्युचिवर्णता च ।

खरं मृदु स्यान्मृदुनः खरत्वं
वदन्ति के चाल्पकजन्तुघातं ॥ २२ ॥
प्रावारास्तरणानाञ्च श्याममण्डलकीर्णता ।
तन्तूनां पक्ष्मणां लोम्नां स्याद्भ्रंशश्च विषाश्रयात् ॥२३॥
लोहानाञ्च मणीनाञ्च मलपङ्कोपदिग्धता ।
प्रभावस्नेहगुरुतावर्णस्पर्शबधस्तथा ॥ २४ ॥
मुखस्य श्यामवर्णत्वं त्वग्भेदो जृम्भणं मुहुः ।
स्खलनं वेपथुः स्वेद आवेगो दिग्विलोकनं ॥ २५ ॥
स्वकर्म्मणि स्वभूमौ स्यादनवस्थानमेव च ।
लिङ्गान्येतानि निपुणो लक्षयेद्विषदायिनां ॥ २६ ॥
औषधानि च सर्वाणि पानं पानीयमेव च ।
तत्कल्पकैः समास्वाद्य प्राश्नीयाद्भोजनानि च ॥ २७ ॥
प्रसाधनादि यत्किञ्चित् तत्सर्वं परिचारिकाः ।
उपनिन्युर्नरेन्द्राय सुपरीक्षितमुद्रितं ॥ २८ ॥
परस्मादागतं यच्च तत्सर्वञ्च परीक्षयेत् ।
सदा स्वेभ्यः परेभ्यश्च रक्ष्यो राजाऽभिरक्षिभिः॥२९॥
यानं वाहनमारोहेज्ज्ञातं ज्ञातोपपादितं ।
अविज्ञातेन मार्गेण सङ्कटेन च न ब्रजेत् ॥ ३०॥
वीक्षिताद्दष्टकर्म्माणमाप्तं वंशक्रमागतं ।
संविभक्तञ्च कुर्वीत जनमासन्नवर्त्तिनं ॥ ३१ ॥
अधार्म्मिकांश्च क्रूरांश्च दृष्टदोषान्निराकृतान् ।

परेभ्योऽभ्यागतांश्चैव दूरादेतान् विवर्ज्जयेत् ॥ ३२ ॥
महावातसमुद्भूतामपरीक्षितनाविकां ।
अन्यनौप्रतिवद्धां वा नोपेयान्नावमातुरां ॥ ३३ ॥
परितापिषु वासरेषु पश्यं-
स्तटलेखास्थितमात्मसैन्यचक्रं ।
शुचि शोधितनक्रमीनजालं
अवगाहेत जलं सुहृत्समेतः ॥ ३४ ॥
गहनानि विवर्ज्जयन् विशुद्धं
वहिरुद्यानवनं समभ्युपेयात् ।
विहरन्मधुरं वयोऽनुरूपं
न च मायेद्विषयोपभोगरागात् ॥ ३५ ॥
सुविनीतसुवेगपृष्ठयानः
सुखगम्यामुचिताश्च लक्ष्यसिद्धै ।
सुपरीक्षितरक्षितान्तसीमां
लघुकोष्ठस्तु मृगाटवीमुपेयात् ॥ ३६ ॥
कारयेद्वनशोधनमादौ
मातुरन्तिकमपि प्रविविक्षुः ।
आप्तशस्त्र्यनुगतः प्रविशेच्च
सङ्कटेषु गहनेषु न तिष्ठेत् ॥ ३७ ॥
पांशूत्कराकर्षिणि वाति वाते
संसक्तधाराजलदे च मेघे ।

अत्यातपे चापि तथाऽन्धकारे
स्वस्थस्तु सन्न क्वचिदभ्युपेयात् ॥ ३८ ॥
निर्गमे च प्रवेशे च राजमार्गं समन्ततः ।
प्रोत्सारितजनं गच्छेत् सम्यगाविष्कृतोन्नतिः ॥ ३९ ॥
यात्रोत्सवसमाजेषु जलसम्बाधशालिनः ।
प्रदेशान्नावगाहेत नातिवेलञ्च सम्पतेत् ॥ ४० ॥
निषेवितो वर्षधरैः कञ्चुकोष्णीषधारिभिः ।
अन्तःपुरे च विचरेत्कुब्जकैरातवामनैः ॥ ४१ ॥
नीचैरन्तःपुरामात्याः शुचयश्चित्तवेदिनः ।
शस्त्राग्निविषवर्जं हि नर्म्मयेयुर्महीपतिं ॥ ४२ ॥
अन्तर्वंशिकसैन्यञ्च सन्नद्धं साधुसम्मतं ।
रक्षेदायुतकुशलमन्तःपुरगतं नृपं ॥ ४३ ॥
आशीतिकाश्च पुरुषाः पञ्चाशत्काश्च योषितः ।
बुध्येरन्नवरोधानां शौचमागारिकाश्च ये ॥ ४४ ॥
रूपाजीवाःस्त्रियः स्नाताः परिवर्त्तितवाससः ।
राजानमुपतिष्ठेयुर्विशुद्धस्रग्विभूषणाः ॥ ४५ ॥
कुहकोड्डीटिलैश्चैव मुण्डैश्चाभ्यन्तरो जनः ।
संसर्गं न क्वचिद्गच्छेद्वासैर्दासीजनैः सह ॥ ४६ ॥
निर्गच्छेत्प्रविशेच्चापि सर्वश्चाभ्यन्तरो जनः ।
विज्ञातद्रव्यसञ्चारी कारणेनोपलक्षितः ॥ ४७ ॥
न चानुजीविनं पश्येदकल्यं पृथिवीपतिः ।

अन्यत्रात्ययिकाद्रोगात् सर्वस्यैवातुरो गुरुः ॥ ४८ ॥
स्नातोऽनुलिप्तसुरभिः स्रग्वी रुचिरभूषणः ।
स्नातां विशुद्धवसनां गच्छेद्देवीं सुभूषणां ॥ ४९ ॥
न हि देवीगृहं गच्छेदात्मीयात्सन्निवेशनात् ।
अत्यर्थवल्लभोऽपीह विश्वासं स्त्रीषु न व्रजेत् ॥ ५० ॥
देवीगृहंगतं भ्राता भद्रसेनममारयत् ।
मातुः शय्यान्तरे लीनः कारूषञ्चौरसः सुतः ॥ ५१ ॥
लाजान् विषेण संयोज्य मधुनेति विलोभित ।
देवी तु काशीराजेन्द्रं निजघान रहोगतं ॥ ५२ ॥
विषदिग्धेन सौवीरं मेखलामणिना नृपं ।
नूपुरेण च वैरन्त्यं जारूषं दर्पणेन च ॥ ५३ ॥
वेण्यां शस्त्रं समाधाय तथा चापि विदूरथं ।
अहिवृत्तं परिहरेच्छत्रौ चापि प्रयोजयेत् ॥ ५४ ॥
यस्य दाराः सुगुप्ताः स्युः पुरुषैराप्तकारिभिः ।
सर्वभोगान्वितं तस्य हस्ते लोकद्वयं स्थितं ॥ ५५ ॥
धर्म्ममिच्छन्नरपतिः सर्वान्दाराननुक्रमात् ।
गच्छेदनुनिशं नित्यं वाजीकरणबृंहितः ॥ ५६ ॥
विचार्य्य कार्य्यावयवान् दिनक्षये
विसृज्य लोकं प्रमदाहृतक्रियः ।
आशस्त्रबन्धेन हि साधु पाणिना
स्वपेदसक्तः परमाप्तरक्षितः ॥ ५७ ॥

नयेन जाग्रत्यनिशं नरेश्वरे
सुखं स्वपन्तीह निराधयः प्रजाः ।
प्रमत्तचित्ते स्वपितीह सम्भयात्
प्रजागरेणास्य जगत्प्रबुध्यते ॥ ५८ ॥
इति स्म पूर्वं मुनयो बभाषिरे
नृपस्य राज्यस्य च साधु लक्षणं ।
तदेतदेवं परिपालयन्नयान्-
नरेश्वरः पालककल्पतां व्रजेत् ॥ ५९ ॥
इति कामन्दकीये नीतिसारे पुत्ररक्षणमात्मरक्षणञ्च
नाम सप्तमः सर्गः ॥ ७ ॥

## अष्टमसर्गप्रारम्भः ।

उपेतः कोषदण्डाभ्यां सामात्यः सह मन्त्रिभिः ।
दुर्गस्थश्चिन्तयेत्साधु मण्डलं मण्डलाधिपः ॥ १ ॥
रथी विराजते राजा विशुद्धे मण्डले चरन् ।
अशुद्धे मण्डले सर्पन् शीर्य्यते रथचक्रवत् ॥ २ ॥
रोचते सर्वभूतेभ्यः शशीवाखण्डमण्डलः ।
सम्पूर्णमण्डलस्तस्माद्विजिगीषुः सदा भवेत् ॥ ३ ॥
अमात्यराष्ट्रदुर्गाणि कोषो दण्डश्च पञ्चमः ।
एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥ ४ ॥
एताः पञ्च तथा मित्रं सप्तमः पृथिवीपतिः ।

सप्तप्रकृतिकं राज्यमित्युवाच वृहस्पतिः ॥ ५ ॥
सम्पन्नस्तु प्रकृतिभिर्म्महोत्साहः कृतश्रमः ।
जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः ॥ ६ ॥
कौलीनं वृद्धसेवित्वमुत्साहः स्थूललक्षिता ।
चित्तज्ञता बुद्धिमत्त्वं प्रागल्भ्यं सत्यवादिता ॥ ७ ॥
अदीर्घसूत्रताऽक्षौद्रं प्रश्रयः स्वप्रधानता ।
देशकालज्ञता दार्ढ्यं सर्व्वक्लेशसहिष्णुता ॥ ८ ॥
सर्वविज्ञानिता दाक्ष्यं सदा संवृतमन्त्रता ।
अविसंवादिता शौर्य्यं भक्तिज्ञत्वं कृतज्ञता ॥ ९ ॥
शरणागतवात्सल्यममर्षित्वमचापलं ।
स्वकर्म्मदृष्टशास्त्रत्वं कृतित्वं दीर्घदर्शिता ॥ १० ॥
जितश्रमित्वं धर्म्मित्वमक्रूरपरिवारता ।
प्रकृतिस्फीतता चेति विजिगीषुगुणाः स्मृताः ॥ ११ ॥
सर्व्वैर्गुणैर्विहीनोऽपि स राजा यः प्रतापवान् ।
प्रतापयुक्ता ह्यस्यन्ति परान् सिंहा मृगानिव ॥ १२ ॥
प्रतापसिद्धो नृपतिः प्राप्नोति महतीं श्रियं ।
तस्मादुत्थानयोगेन प्रतापं जनयेत्परं ॥ १३ ॥
एकार्थाभिनिवेशित्वमविलक्षणमुच्यते ।
दारुणस्तु स्मृतः शत्रुर्विजिगीषुगुणान्वितः ॥ १४ ॥
लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।
मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः ॥ १५ ॥

अरिर्मित्रमरेर्मित्रं मित्रमित्रमतःपरं ।
तथारिमित्रमित्रञ्च विजिगीषोः पुरःस्थिताः ॥१६॥
पार्ष्णिग्राहः स्मृतः पश्चादाक्रन्दस्तदनन्तरं ।
आसारावनयोश्चैव विजिगीषोस्तु मण्डलं ॥ १७ ॥
अरेस्तु विजिगीषोस्तु मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ॥ १८ ॥
मण्डलत्वे हि चैतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां व्यस्तानाञ्च बधे प्रभुः ॥ १९ ॥
मूलप्रकृतयस्त्वेताश्चतस्रः परिकीर्त्तिताः ।
आहेव मन्त्रकुशलश्चतुष्कं मण्डलं मयः ॥ २० ॥
विजिगीपुररिर्मित्रं पार्ष्णिग्राहोऽथ मध्यमः ।
उदासीनः पुलोमेन्द्रौ षट्कं मण्डलमूचतुः ॥ २१ ॥
उदासीनो मध्यमश्च विजिगीषोस्तु मण्डलं ।
उशना मण्डलमिदं प्राह द्वादशराजकं ॥ २२ ॥
द्वादशानां नरेन्द्राणामरिमित्रे पृथक् पृथक् ।
षड्विंशत्कमिदं प्राहुस्ते व ते च पुनर्म्मयः ॥ २३ ॥
द्वादशानां नरेन्द्राणां पञ्च पञ्च पृथक् पृथक् ।
अमात्याद्याश्च प्रकृतीरामनन्तीह मानवाः ॥ २४ ॥
मौला द्वादश यास्त्वेता ह्यमात्याद्यास्तथा च याः ।
सप्ततिश्चाधिका ह्येताः सर्वं प्रकृतिमण्डलं ॥ २५ ॥
संयुतस्त्वरिमित्राभ्यामुभयारिस्तथा सुहृत् ।

मैाला द्वादश राजान इत्यष्टादशकं गुरुः ॥ २६ ॥
अष्टादशानामित्येषाममात्याद्याः पृथक् पृथक् ।
अष्टोत्तरशतं त्वेतन्मण्डलं कवयो विदुः ॥ २७ ॥
अष्टादशानामेतेषां मित्रं शत्रुः पृथक् पृथक् ।
चतुःपञ्चाशत्कमिति विशालाक्षः प्रभाषते ॥ २८ ॥
चतुःपञ्चाशत्तां राज्ञाममात्याद्याः पृथक् पृथक् ।
चतुर्विंशतिसंयुक्तं मण्डलं त्रिशतं स्मृतं ॥ २९ ॥
सप्तप्रकृतिकं युक्तं विजिगीषोररेश्च यत् ।
चतुर्दशकमेवैतन्मण्डलं परिचक्षते ॥ ३० ॥
मण्डलत्रिकमित्याहुर्विजिगीष्वरिमध्यमाः ।
मित्रयुक्ताः पृथक् चैतेः षट्कमित्यपरे जगुः ॥ ३१ ॥
अमात्याद्याः प्रकृतय एकैकस्यैव भूपतेः ।
मण्डलं मण्डलविदः षट्त्रिंशत्कं प्रचक्षते ॥ ३२ ॥
सप्तप्रकृतिकाः सर्वे विजिगीष्वरिमध्यमाः ।
एकविंशत्कमित्याहुः परे च नयवादिनः ॥ ३३ ॥
चत्वारः पार्थिवा मैालाः पृथङ् मित्रैः सहाष्टकं ।
अमात्यादिभिरेतैश्च जगत्यक्षरसम्मितं ॥ ३४ ॥
विजिगीषोः पुरस्ताच्च ये पश्चाच्च प्रकीर्त्तिताः ।
दशकं मण्डलमिदं मण्डलज्ञाः प्रचक्षते ॥ ३५ ॥
दशानां भूमिपालानाममात्याद्याः पृथक् पृथक् ।
मण्डलं मण्डलविदः षष्टिसयुक्तं प्रचक्षते ॥ ३६ ॥

अरिमित्रे पुरो नेतुः पश्चिमे चेति पञ्चकं ।
अमात्याद्याः पृथक् तेषां त्रिंशत्कं परिचक्षते ॥ ३७ ॥
अरेरप्येवमेवेति दृष्टं दृष्टिमतां वरैः ॥
पञ्चकं मण्डलं योऽयं त्रिंशत्याञ्च मनीषिभिः ॥ ३८ ॥
द्वे एव प्रकृती न्याय्ये इत्युवाच पराशरः ।
अभियोक्ता प्रधानः स्यात्तथा न्याय्योऽभियुज्यते ॥ ३९ ॥
परस्पराभियोगेन विजिगीषोररेस्तथा ।
अरित्वे विजिगीषुत्वे एका प्रकृतिरिष्यते ॥ ४० ॥
इति प्रकारं बहुधा मण्डलं परिचक्षते ।
सर्वलोकप्रतीतं तु स्फुटं द्वादशराजकं ॥ ४१ ॥
अष्टशाखं चतुर्मूलं षष्टिपत्रं द्वये *स्थितं ।
षट्पुष्पं त्रिफलं वृक्षं यो जानाति स नीतिवित् ॥ ४२ ॥
पार्ष्णिग्राहस्तथाऽऽसारः शत्रुमित्रे प्रकीर्तिते ।
आक्रन्दोऽथ तदासारो विजिगीषोरुदाहृते ॥ ४३ ॥
पुरो यायाद्विगृह्यैव मित्राभ्यां पश्चिमावरौ ।
पश्चिमाविव पूर्वाभ्यामरिं तन्मित्रमेव च ॥ ४४ ॥
अरिमित्रस्य मित्रन्तु कृतकृत्येन भूयसा ।
संस्तभ्योभयमित्रेण पश्चाद्गच्छेन्नरेश्वरः ॥ ४५ ॥
आक्रन्देनात्मना चैव पार्ष्णिग्राहं प्रपीडयेत् ।
आक्रन्देन तदासारमाक्रन्दासारभाजिना ॥ ४६ ॥

---

* दैवे पुरुषकारे च स्थितमिति टी॥

मित्रेणैवात्मना चैव कुर्व्वीतोद्धरणं रिपोः ।
मित्रेण हि समित्रेण रिपुमित्रं प्रपीडयेत् ॥ ४७ ॥
अरिमित्रस्य मित्रस्य पीडनं पृथिवीपतिः ।
कुर्व्वीताभयमित्रेण मित्रमित्रेण चैव हि ॥ ४८ ॥
अनेन क्रमयोगेन विजिगीषुः सदोत्थितः ।
पीडयेदहितं शत्रुं मित्राणामन्तरन्तरां ॥ ४९ ॥
पीड्यमानो ह्युभयतः सदोद्युक्तैर्मनीषिभिः ।
रिपुरुच्छेदमायाति तद्वशे चावतिष्ठते ॥ ५० ॥
सर्व्वोपायेन कुर्व्वीत सामान्यं मित्रमात्मसात् ।
भवन्ति मित्रादुच्छिन्नाः सुखच्छेद्या हि शत्रवः ॥५१॥
कारणेनैव जायन्ते मित्राणि रिपवस्तथा ।
रिपवो येन जायन्ते कारणं तत्परित्यजेत् ॥ ५२ ॥
प्राधान्येन हि सर्व्वत्र सर्व्वाः संसञ्जयेत्प्रजाः ।
तासां संसञ्जनाद्राजा सर्व्वाङ्गी श्रियमश्नुते ॥ ५३ ॥
दूरेचरान्माण्डलिकान् स्थानदुर्गनिवासिनः ।
मित्रीकुर्व्वीत तत्प्राणाः साधयन्तीह मण्डलं ॥ ५४ ॥
चलेनदोर्ज्जितबलो मध्यमो विजिगीषया ।
एकीभूयारिणा तिष्ठेदशक्तः सन्धिमानमेत् ॥ ५५ ॥
सहजः कार्य्यजश्चैव द्विविधः शत्रुरुच्यते ।
सहजः स्वकुलोत्पन्न इतरः कार्य्यजः स्मृतः ॥ ५६॥
उच्छेदापचयौ काले पीडनं कर्षणन्तथा ।

इति विद्याविदः प्राहुः शत्रौ वृत्तं चतुर्विधं ॥ ५७ ॥
रेचनं कोपदण्डाभ्यां महामात्रवधस्तथा ।
एतत्कर्षणमित्याहुराचार्य्याः पीडनं परं ॥ ५८ ॥
समाश्रयविहीनो वा दुर्बलं वा समाश्रितः ।
शक्योऽरिः सम्पदा युक्त उच्छेत्तुं भूम्यनन्तरः ॥ ५९ ॥
कर्षणं पीडनं काले कुर्वीताश्रयमानिनः ।
समाश्रयं दुर्गमाहुर्मित्रं वा साधुसम्मतं ॥ ६० ॥
विभीषणस्य सोदर्य्यस्तथा सूर्य्यसुतस्य च ।
सर्वतन्त्रापहारित्वात्तथोच्छेद्यो निजो रिपुः ॥ ६१ ॥
छिद्रं कर्म्म च वित्तञ्च विजानाति निजो रिपुः ।
दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः ॥ ६२ ॥
वर्त्तते पक्षपातेन मित्रं यदुभयात्मकं ।
वज्रीव हि त्रिशिरसं तदुच्छिन्द्यात्कृतत्वरः ॥ ६३ ॥
बलिना विगृहीतस्य द्विषतः कृच्छ्रवर्त्तिनः ।
कुर्वीतापचयं शत्रोरात्मोच्छित्तिविशङ्कया ॥ ६४ ॥
यस्मिन्नुच्छिद्यमाने तु रिपुरन्यः प्रवर्त्तते ।
न तस्योच्छित्तिमन्विच्छेत्कुर्वीतैनं स्वगोचरं ॥ ६५ ॥
वंशागतो रिपुर्यस्तु विचलेद्दुरवग्रहः ।
तस्य संशमनायाशु तत्कुलीनं समुन्नयेत् ॥ ६६ ॥
विषं विषेण व्यथते वज्रं वज्रेण भिद्यते ।
गजेन्द्रो दृष्टसारेण गजेन्द्रेणैव वध्यते ॥ ६७ ॥

मत्स्यो मत्स्यं समादत्ते ज्ञातिर्ज्ञातिमसंशयं ।
रावणोच्छित्तये रामो विभीषणमपूजयत् ॥ ६८ ॥
यस्मिन्मण्डलसङ्क्षोभः कृते भवति कर्म्मणि ।
न तत्कुर्य्यात्तु मेधावी प्रकृतीरनुरञ्जयेत् ॥ ६९ ॥
साम्ना दानेन मानेन प्रकृतीरनुरञ्जयेत् ।
आत्मीया भेददण्डाभ्यां परकीयाश्च दारयेत् ॥ ७० ॥
आकीर्णं मण्डलं सर्वं मित्रैररिभिरेव च ।
सर्वः स्वार्थपरो लोकः कुतो मध्यस्थता क्वचित् ॥ ७१ ॥
भोगप्राप्तं विकुर्वाणं मित्रमप्युपपीडयेत् ।
अत्यन्तं विकृतं हन्यात्स पापीयान् रिपुर्म्मतः ॥ ७२ ॥
अमित्राण्यपि कुर्वीत मित्राण्युपचयावहान् ।
अहिते वर्त्तमानानि मित्राण्यपि परित्यजेत् ॥ ७३ ॥
स बन्धुर्योऽनुबध्नाति हितेऽर्थे वा हितादरः ।
अनुरक्तं विरक्तं वा तन्मित्रमुपकारि यत् ॥ ७४ ॥
मित्रं विचार्य्य बहुशो ज्ञातदोषं परित्यजेत् ।
त्यजन्नभूतदोषं हि धर्म्मार्थावुपहन्ति हि ॥ ७५ ॥
स्वयं दोषगुणान्वेषी भवेत्सर्वत्र सर्वदा ।
स्वयं ज्ञातेषु दोषेषु शस्यते दण्डपातनं ॥ ७६ ॥
न त्वविज्ञाय तत्त्वेन कोपङ्कुर्य्यात् कदाचन ।
भुजङ्गमिव मन्यन्ते निर्दोषक्रोधनं जनाः ॥ ७७ ॥
मित्राणामन्तरं विद्यान्मध्यज्यायःकनीयसां ।

मध्यज्यायः कनीयांसि कर्म्माणि च पृथक् पृथक् ॥ ७८ ॥
न हि मिथ्याऽभियुञ्जीत शृणुयाच्चापि तद्विधं ।
मित्रभेदन्तु ये कुर्य्युस्तान् सर्वांस्तु परित्यजेत् ॥ ७९ ॥
*प्रायोगिकं मात्सरिकं माध्यस्थं पाक्षपातिकं ।
सोपन्यासञ्च जानीयाद्वचः संशयितं तथा ॥ ८० ॥
प्रकाशपक्षग्रहणं न कुर्य्यात्सुहृदां स्वयं ।
अन्योन्यमत्सरञ्चेषां स्वयमेवाशु धारयेत् ॥ ८१ ॥
कार्य्यस्य हि गरीयस्त्वान्नीचानामपि कालवित् ।
सतोऽपि दोषान्प्रच्छाद्य गुणानप्यसतो वदेत् ॥ ८२ ॥
प्रायो मित्राणि कुर्वीत सर्वावस्थानि †भूपतिः ।
बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥ ८३ ॥
न तत्र तिष्ठति भ्राता न पिताऽन्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥ ८४ ॥
अमित्राण्यवलो मित्रैर्न्नि गृह्णीयाद्दृढव्रतैः ।
इति मण्डलवृत्तं हि मण्डलज्ञाः प्रचक्षते ॥ ८५ ॥
मित्रोदासीनरिपव एतन्मात्रं हि मण्डलं ।
सम्यक् शोधनमेतेषामिति मण्डलशोधनं ॥ ८६ ॥
इति स्म राजा नयवर्त्मना व्रजन् ।
समुद्यमी मण्डलशुद्धिमाचरन् ॥
विराजते साधु विशुद्धमण्डलः ।

---

* भेदाद्युपाय भवमिति टी ॥ † षडमध्यमावस्थोऽपि टी ॥

शरच्छ्रीव प्रतिनन्दयन्प्रजाः ॥ ८७ ॥
इति कामन्दकीये नीतिसारे मण्डलयोनिमण्डलचरितञ्चाष्टमः सर्गः ॥ ८ ॥

नवमसर्गप्रारम्भः ॥

बलीयसाऽभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत्कुर्वाणः कालयापनां ॥ १ ॥
कपाल उपहारश्च सन्तानः सङ्गतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ २ ॥
अदृष्टनर आदिष्ट आत्मामिष उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परिभूषणः ॥ ३ ॥
स्कन्धोपनेयः सन्धिश्च षोडशः परिकीर्त्तितः ।
इति षोडशकं प्राहुः सन्धिं सन्धिविचक्षणाः ॥ ४ ॥
कपालसन्धिर्विज्ञेयः केवलं समसन्धितः ।
सम्प्रदानाद्भवति य उपहारः स उच्यते ॥ ५ ॥
सन्तानसन्धिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिः सङ्गतसन्धिस्तु मैत्रीपूर्व उदाहृतः ॥ ६ ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
सम्पत्तौ च विपत्तौ च कारणैर्यो न भिद्यते ॥ ७ ॥
सङ्गतः सन्धिरेवैष प्रकृष्टत्वात्सुवर्णवत् ।
सोऽपरैः सन्धिकुशलैः काञ्चनः परिकीर्त्तितः ॥ ८ ॥

*भयामेकार्थसंसिद्धिं समुद्दिश्य क्रियेत यः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ९ ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति ।
इति यः क्रियते सन्धिः प्रतीकारः स उच्यते ॥ १० ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयञ्चापि प्रतीकारो रामसुग्रीवयोरिव ॥ ११ ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्राभिगच्छतः ।
स संहितप्रयाणस्तु सन्धिः संयोग उच्यते ॥ १२ ॥
आवयोर्योधमुख्याभ्यां मदर्थः साध्य इत्यपि ।
यस्मिन्पणः प्रक्रियते स सन्धिः पुरुषान्तरः ॥ १३ ॥
त्वयैकेन मदीयार्थः सम्प्रसाध्यस्त्वसाविति ।
यत्र शत्रुः पणं कुर्य्यात्सोऽदृष्टपुरुषः स्मृतः ॥ १४ ॥
यत्र भूम्येकदेशेन पणेन रिपुवर्जितः ।
सन्धीयते सन्धिविद्भिरादिष्टः सन्धिरुच्यते ॥ १५ ॥
स्वसैन्येन तु सन्धानमात्मामिष इति स्मृतः ।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १६ ॥
कोषांशेनार्थ†कुप्येन सर्वकोषेण वा पुनः ।
शेषप्रकृतिरक्षार्थं परिक्रय उदाहृतः ॥ १७ ॥
भुवां सारवतीनान्तु दानादुच्छिन्न उच्यते ।
सर्वभूम्युत्थितफलादानेन परिभूषणः ॥ १८ ॥

---

* आत्मकार्य्यस्य सिद्धिं तु इति हितोपदेशः। † अर्थकोषेणेति वा।

परिच्छिन्नं फलं यत्र स्कन्धः स्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः सन्धिं सन्धिविदो जनाः॥ १९॥
परस्परोपकारश्च मैत्रः सम्बन्धजस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारस्ते च सन्धयः ॥ २० ॥
एक एवोपहारस्तु सन्धिरेतन्मतं हि नः ।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥ २१ ॥
अभियोक्ता बली यस्मादलब्ध्वा न निवर्त्तते ।
उपहाराद्दते तस्मात्सन्धिरन्यो न विद्यते ॥ २२ ॥
बालो वृद्धो दीर्घरोगस्तथा ज्ञातिवहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ २३ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिशक्तिमान् ।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ २४ ॥
दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ २५ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्म्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ २६ ॥
एतैः सन्धिं न कुर्वीत विगृह्णीयाच्च केवलं ।
एते विगृह्यमाना हि क्षिप्रं यान्ति रिपोर्वशं ॥ २७ ॥
बालस्य ह्यप्रभावत्वान्न लोको योद्धुमिच्छति ।
योद्धुं स्वयमशक्तस्य परार्थे को हि युध्यते* ॥ २८ ॥

* युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिश इति हितोपदेशः ।

उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशय ॥ २६ ॥
सुखोच्छेद्यस्तु भवति सर्वज्ञातिबहिष्कृतः ।
त एवैनं विनिघ्नन्ति ज्ञातयः *स्वार्थसत्कृताः ॥ ३० ॥
भीरुर्युद्धपरित्यागात्स्वयमेवावसीदति ।
†धीरोऽप्यवीरपुरुषैः सङ्ग्रामे तैर्विमुच्यते ॥ ३१ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।
लुब्धानुजीवितैरेव दानभिन्नैर्निहन्यते ॥ ३२ ॥
सन्त्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेऽप्यतिसक्तिमान् ॥ ३३ ॥
अनेकचित्तमन्त्रस्तु द्वेष्यो भवति मन्त्रिणां ।
अनवस्थितचित्तत्वात्कार्य्ये तैः स उपेक्ष्यते ॥ ३४ ॥
सदा धर्म्मबलीयस्त्वाद्देवब्राह्मणनिन्दकाः ।
विशीर्य्यन्ते स्वयञ्चैव दैवोपहतकास्तथा ॥ ३५ ॥
सम्पत्तेश्च विपत्तेश्च दैवमेव हि कारणं ।
इति दैवपरो ध्यायन्नात्मना न विचेष्टते ॥ ३६ ॥
दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनसक्तस्य योद्धुं शक्तिर्न जायते ॥ ३७ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते‡ ।

* ज्ञातयश्चात्मसात् कृता इति चिं। † वीर इति पाठान्तरः॥ चिं।
‡ बध्यत इत्यन्यः पाठः॥ चिं।

ग्राहोऽल्पीयानपि जले गजेन्द्रमपकर्षति ॥ ३८ ॥
बहुमित्रस्तु सन्त्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवाशु विनश्यति* ॥ ३९ ॥
अकालयुतसैन्यस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥४० ॥
सत्यधर्मव्यपेतेन न सन्दध्यात् कथञ्चन ।
स सन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियां॥४१॥
सत्यार्य्यधार्म्मिकानार्य्यभ्रातृसङ्घातवान्बली ।
अनेकविजयी* चेति सन्धेयाः सप्त कीर्त्तिताः ॥४२॥
सत्यश्च पालयन् सत्यसन्धितो नैति विक्रियां ।
प्राणबाधेष्वपि व्यक्तमार्य्यो नो यात्यनार्य्यतां ॥४३ ॥
धार्म्मिकस्याभियुक्तस्य सर्व्व एव हि युध्यते ।
प्रजानुरागधर्म्माभ्यां दुःखच्छेद्यो हि धार्म्मिकः॥ ४४ ॥
सन्धिः कार्य्योऽप्यनार्य्येण सम्प्राप्योत्सादयेद्धि सः* ।
रेणुकायाः सुत इव मूलेष्वपि न तिष्ठति ॥ ४५ ॥
सङ्घातवान्यथा वेणुर्न्निविडः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ ४६ ॥
समाक्रान्तस्य बलिना सर्व्वयत्नवतोऽपि हि ।
हरिणस्येव सिंहेन शरणं नेह विद्यते ॥ ४७ ॥

---

* विपद्यत इति पुं। * अनेकयुद्धविजयीति पुं।
* विनाशे समुपस्थित इति पुं।

ईषदायच्छमानो हि सिंहो मत्तमिव द्विपं ।
हिनस्ति बलवांस्तस्मात्सन्धेयः शिवमिच्छता ॥ ४८॥
बलिना सह योऽद्ययमिति नास्ति निदर्शनं ।
प्रतिवातन्न हि घनः कदाचिदुपसर्पति ॥ ४९ ॥
बलीयसि प्रणमतां काले विक्रमतामपि ।
सम्पदो नापसर्पन्ति प्रतीपमिव निम्नगाः ॥ ५० ॥
जमदग्नेः सुतस्येव सर्व्वः सर्व्वत्र सर्व्वदा ।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ५१ ॥
अनेकयुद्धविजयी सन्धानं यस्य गच्छति ।
तत्प्रतापेन तस्याशु वशं गच्छन्ति शत्रवः ॥ ५२ ॥
न जातु गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान् ।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुराऽवधीत् ॥ ५३ ॥
विकारं याति पुत्रो हि राज्यान्नीचः पिता तथा ।
तल्लोकवृत्तान्नृपतेरन्यद्वृत्तं प्रचक्षते ॥ ५४ ॥
अभियुक्तो बलवता तिष्ठन्दुर्गे प्रयत्नवान् ।
तद्बलीयस्तराह्वानं कुर्व्वीतात्मविमुक्तये ॥ ५५ ॥
स्वोत्साहशक्तिमुद्वीक्ष्य विगृह्णीयान्महत्तरं ।
केशरीव द्विपमिति भारद्वाजः प्रभाषते ॥ ५६ ॥
एकोऽपि सिंहः साहस्रं यूथं मथ्नाति दन्तिनः ।
तस्मात्सिंह इवोदग्रमात्मानं वीक्ष्य सम्पतेत् ॥ ५७ ॥
ज्यायांसं हि ससैन्यस्य बलाद्विक्रम्य निघ्नतः ।

प्रतापसिद्धा सर्वत्र भवन्ति रिपवोऽपरे ॥ ५८ ॥
सन्धिमिच्छेत्समेनापि सन्दिग्धो विजयो युधि ।
न हि संशयितं कुर्य्यादित्युवाच वृहस्पतिः ॥ ५९ ॥
तत्सम्प्रवृद्धेरतिवृद्धिकामः
समेन सन्धानमिहोपगच्छेत् ।
अपक्वयोर्वा घटयोरवश्य-
मन्योन्यभेदो समसन्निपातः ॥ ६० ॥
नाशो भवति युद्धेन कदाचिदुभयोरपि ।
सुन्दोपसुन्दावन्योऽन्यं समवीर्य्यौ हतौ न किं ॥ ६१ ॥
विहीनोऽपि सुसन्धोऽपि व्यसने रिपुरागतः ।
पतन्दुनोति हिमवत्तोयविन्दुरिव क्षितौ ॥ ६२ ॥
न सन्धिमिच्छेद्धीनेश्च तत्र हेतुरसंशयः ।
तस्य विश्रम्भमालभ्य प्रहरेत्तं गतस्पृहः ॥ ६३ ॥
बलीयसाभिसन्धाय तं प्रविश्य प्रतापवान् ।
तथा साध्वनुगन्तव्यो यथा विश्रम्भमाप्नुयात् ॥ ६४ ॥
विश्रम्भी नित्यमुद्युक्तो निगूढाकारचेष्टितः ।
प्रियाण्येवाभिभाषेत यत्कार्य्यं कार्य्यमेव तत् ॥ ६५ ॥
विश्रम्भात् प्रियतामेति विश्रम्भात्कार्य्यमृच्छति ।
विश्रम्भेण हि देवेन्द्रो दितेर्गर्भमघातयत् ॥ ६६ ॥
युवराजेन सन्धाय प्रधानपुरुषेण वा ।
ततः प्रकोपं जनयेदभियोक्तुः स्थिरात्मनः ॥ ६७ ॥

अथोत्सर्गेण महता लेखैश्चाप्यात्मसंहितैः ।
प्रधानपुरुषस्येह प्रकुर्वीतात्मदूषणं ॥ ६८ ॥
दूषिते हि महामात्रे रिपुरप्योऽपि धीमता ।
स्वपक्षे यस्य विश्वास इत्यं भूतश्च निष्क्रियः ॥६९॥
अरेरमात्यान्सन्धाय तदवस्थं समुन्नयेत् ।
भिषग्भेदेन वा शत्रुं रसदानेन साधयेत् ॥ ७० ॥
अरेः सर्वप्रयत्नेन पश्चात्कोपं प्रकल्पयेत् ।
पश्चात्कोपमथातिष्ठन्ननुस्मृत्य प्रसाधयेत् ॥ ७१ ॥
उद्देशकृतसंवासैश्चरैर्नैमित्तिकैररेः ।
उपोढव्यसनादेशं कारयेत्साधुलक्षणैः ॥ ७२ ॥
क्षयव्ययायासवधादिदोषं व्यपेक्ष्यावेक्षितसाधुकृत्यः ।
कामातुपीडामपिकाञ्चिदिच्छे-
न्नविग्रहं तत्प्रभवा हि दोषाः ॥ ७३ ॥
आत्मा बलं वा सुहृदो धनानि
वृथा भवन्तीह निमेषमात्रात् ।
मुहुर्मुहुश्चाकुलितानि तानि
तस्मान्न विद्वानतिविग्रही स्यात् ॥ ७४ ॥
सुहृज्जनं तथा राज्यमात्मानं कीर्तिमेव च ।
युधि सन्देहदोलास्थं को हि कुर्य्यादबालिशः ॥ ७५॥
साम्ना प्रदानेन विभेदनेन
सन्तापयेत्साध्वभियुज्यमानः ।

सन्धित्सुरेवास्य च सैन्यचक्रं
सीमान्तमायान्तमपेतसन्धिं ॥ ७६ ॥
सुगुप्तिमाधाय सुसंहतेन
बलेन धीरो विचरन्नरातिं ।
सन्तापयेद्येन सुसम्प्रतप्त-
स्तप्तेन सन्तापमुपैति तप्तः ॥ ७७ ॥
इति स्म सन्धिं खलु सन्धिचिन्तमा
बभाषिरे पूर्वतरा महर्षयः ।
तदेतदेवं विजयन्नरेश्वरः
समीक्ष्य कार्य्यं गुरु चेति तद्विधाः ॥ ७८ ॥
इति कामन्दकीये नीतिसारे सन्धिविकल्पोनाम
नवमः सर्गः ॥ ९ ॥

दशमसर्गप्रारम्भः ॥

अमर्षोपगृहीतानां मन्युसन्तप्तचेतसां ।
परस्परापकारेण पुंसां भवति विग्रहः ॥ १ ॥
आत्मनोऽभ्युदयाकाङ्क्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेत्त हि विग्रहं ॥ २ ॥
राज्यस्त्रीस्थानदेशानां यानस्य च धनस्य च ।
अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ३ ॥
ज्ञानार्थधर्म्मशक्तीनां विघातो दैवमेव च ।

मित्रार्थञ्चापमानञ्च तथा बन्धुविनाशनं ॥ ४ ॥
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणं ।
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ॥ ५ ॥
राज्यस्त्रीस्थानदेशानां दानेन च मदेन च ।
विग्रहस्य तु युक्तिज्ञैरिति प्रशमनं स्मृतं ॥ ६ ॥
एतदेव तु विज्ञेयं स्वार्थधर्म्मविघातजे ।
विषयध्वंसजे शत्रोर्विषयप्रतिपीडनं ॥ ७ ॥
यानापहारसम्भूते ज्ञानशक्तिविघातजे ।
समस्तदर्थश्चाङ्गेन क्षान्त्या चोपेक्षणेन च ॥ ८ ॥
अधर्म्मद्रोहसंयुक्ते मित्रजात उपेक्षणं ।
आत्मवान्मित्रवर्गे तु प्राणानपि परित्यजेत् ॥ ९ ॥
अपमानात्तु सम्भूतं मानेन प्रशमं नयेत् ।
सामपूर्व्व उपायो वा प्रणामो वाभिमानजे ॥ १० ॥
विग्रहं नाशयेद्धीरो बन्धुनाशसमुद्भवं ।
येन पीडा न जायेत तादृशं सुविचक्षणः ॥ ११ ॥
कुर्य्यादर्थपरित्यागमेकार्थाभिनिवेशजे ।
धनापचारजाते तन्निरोधं न समाचरेत् ॥ १२ ॥
कदाचिद्विग्रहे पुंसां सर्व्वनाशस्तु जायते ।
महाजनसमुत्पन्नं भेदेन प्रशमंनयेत् ॥ १३ ॥
भूतानुग्रहविच्छेदजाते तत्र *वदेत्प्रियं ।

* प्रियं वचः ।

दैवमेव तु दैवोत्थे शमनं साधुसम्मतं ॥ १४ ॥
मण्डलक्षोभसम्भूतमुपायैः प्रशमं नयेत् ।
सापत्नं वास्तुजं स्त्रीजं वाग्जातमपराधजं ॥ १५ ॥
वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतं ।
जातं भूम्युपरोधेन तथा शक्तिविघातजं ॥ १६ ॥
भूम्यनन्तरजातं तु मण्डलक्षोभजन्तथा ।
चतुर्विधं वैरजातं बहुदन्तीसुतोऽब्रवीत् ॥ १७ ॥
कुलापराधजे वैरे मन्यन्ते द्वे च मानवाः ।
किञ्चित्फलं निष्फलञ्च सन्दिग्धफलमेव च ॥ १८ ॥
तदात्वे दोषजननमायत्याञ्चैव निष्फलं ।
अपरिज्ञातवीर्य्येण दुष्टेन स्तम्भितोऽपि वा ॥ १९ ॥
परार्थं स्त्रीनिमित्तञ्च दीर्घकालं द्विजोत्तमैः ।
अकाले दैवयुक्तेन बलोद्धृतसखेन च ॥ २० ॥
तदात्वे फलसंयुक्तमायत्यां फलवर्जितं ।
आयत्यां फलसंयुक्तं तदात्वे निष्फलं तथा ॥ २१ ॥
इतीमं षोडशविधं न कुर्य्यादेव विग्रहं ।
तदात्वायतिसंशुद्धमारभेत विचक्षणः ॥ २२ ॥
तदात्वायतिशुद्धानि सर्व्वकर्म्माणि चिन्तयेत् ।
तदात्वायतिसंशुद्धमातिष्ठन्नैव वाच्यतां ॥ २३ ॥
साधु लोकद्वयग्राहि विद्वान्कर्म्म समाचरेत् ।
न त्यजेदमुं लोकं नार्थलेशोपलोभितः ॥ २४ ॥

परलोकविरुद्धानि कुर्व्वाणं दूरतस्त्यजेत् ।
इत्यागमप्रमाणत्वात्साधुकल्याणमाचरेत् ॥ २५ ॥
यदामन्येत मतिमान् हृष्टपुष्टं स्वकं बलं ।
परस्य विपरीतञ्च तदा विग्रहमाचरेत् ॥ २६ ॥
स्फीतं चाप्यनुरक्तञ्च यदा प्रकृतिमण्डलं ।
परस्य विपरीतञ्च तदा विग्रहमाचरेत् ॥ २७ ॥
भूमिर्म्मित्रं हिरण्यञ्च विग्रहस्य फलं त्रयं ।
यदैतन्नियतं भावि तदा विग्रहमाचरेत् ॥ २८ ॥
गुरु वित्तं ततो मित्रं तस्माद्भूमिर्गरीयसी ।
भूमेर्व्विभूतयः सर्व्वास्ताभ्यो बन्धुसुहृद्गणाः ॥ २९ ॥
सर्व्वसम्पत्समे शत्रावुपायान्निक्षिपेद्बुधः ।
उपायैरप्यतिव्यूढैः समे दण्डोऽपि शस्यते ॥ ३० ॥
आगतं विग्रहं विद्वानुपायैः प्रशमन्नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसेन न सम्पतेत् ॥ ३१ ॥
समाक्रान्तो बलवता काङ्क्षन्नभ्रंशिनीं श्रियं ।
आश्रयेद्वैतसीं वृत्तिं न भौजङ्गीं कथञ्चन ॥ ३२ ॥
क्रमाद्वैतसवृत्तिः सम्प्राप्नोति विपुलां श्रियं ।
भुजङ्गवृत्तिराप्नोति बधमेव तु केवलं ॥ ३३ ॥
मत्तप्रमत्तवत्स्थित्वा वसेदुत्प्लुत्य पण्डितः ।
अपरिभ्रश्यमानं हि क्रमप्राप्ते मृगेन्द्रवत् ॥ ३४ ॥
कौर्म्मसङ्कोचमास्थाय प्रहारमपि मर्षयेत् ।

काले प्राप्ते तु मतिमानुत्तिष्ठेत् क्रूरसर्पवत् ॥ ३५ ॥
काले सहिष्णुर्गिरिवदसहिष्णुश्च वह्निवत् ।
स्कन्धेनापि वहेच्छत्रून् प्रियाणि समुदाहरन् ॥ ३६ ॥
प्रसादवृत्त्या हितलोकवृत्तया
प्रविश्य शत्रोर्हृदयं निरन्तरं ।
नयाग्रहस्तेन हि काल उच्छ्रितः
प्रसह्य कुर्वीत कचग्रहं श्रियः ॥ ३७ ॥
कुलोन्नतं सत्यमुदारविक्रमं
स्थिरं कृतज्ञं धृतिमन्तमूर्जितं ।
अतीवदातारमुपेतवत्सलं
सुदुःप्रसाध्यं प्रवदन्ति विद्विषं ॥ ३८ ॥
असत्यता निष्ठुरता कृतघ्नता
भयं प्रमादोऽलसता विषादिता ।
वृथाभिमानो ह्यतिदीर्घसूत्रता
तथाङ्गनाक्षादि विनाशनं श्रियः ॥ ३९ ॥
इति स्म दोषान्वितमाशु विद्विषं
त्रिशक्तियुक्तो विजिगीषया व्रजेत् ।
अतोन्यथा साधुजनस्य सम्मतं
करोति विद्वानुपघातमात्मनः ॥ ४० ॥
समन्वितो राज्य पदोन्निनीषया
चरेक्षणैर्वीक्षितमण्डलक्रियः ।

इमं नृपो विग्रहमार्गमास्थितः
स्थिरोद्यमः सम्प्रयतेत सिद्धये ॥ ४१ ॥
इति कामन्दकीये नीतिसारे विग्रहकल्पो नाम
दशमः सर्गः ॥ १० ॥

एकादशसर्गप्रारम्भः ॥

उत्कृष्टबलवीर्य्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतेर्य्यात्रायानमिति स्मृतं ॥ १ ॥
विगृह्य सन्धाय तथा सम्भूयाथ प्रसङ्गतः ।
उपेक्षा चेति निपुणैर्य्यानं पञ्चविधं स्मृतं ॥ २ ॥
विगृह्य यान्ति हि यदा सर्व्वाञ्छत्रोर्गणान् बलात् ।
विगृह्ययानं यानज्ञास्तदाचार्य्याः प्रचक्षते ॥ ३ ॥
अरेर्मित्राणि सर्व्वाणि स्वमित्रैः सर्व्वतो बलात् ।
विगृह्य चाभिगमनं विगृह्यगमनं स्मृतं ॥ ४ ॥
सन्धायान्यत्र यात्रायां पार्ष्णिग्राहेण शत्रुणा ।
सन्धायगमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥ ५ ॥
एकीभूय यदेकत्र सामन्तैः साम्परायिकैः ।
शक्तिशौचयुतैर्य्यानं सम्भूयगमनं हि तत् ॥ ६ ॥
उभयोरपि यद्यानं द्वयोः प्रकृतिनाशने ।
सम्भूययानं तत्प्रोक्तं हनूमत्सूर्य्ययोरिव ॥ ७ ॥
अल्पसारानुपादाय प्रतिज्ञाय फलोदयं ।

गम्यते यत्परञ्जेतुं सम्भूयगमनं हि तत् ॥ ८ ॥
अन्यत्र प्रस्थितः सङ्गादन्यत्रैव च गच्छति ।
प्रसङ्गयानं तत्प्रोक्तमत्र शल्यो निदर्शनं ॥ ९ ॥
रिपुं यातस्य बलिनः सम्प्राप्याविष्कृतं फलं ।
उपेक्ष्य तन्मित्रयानमुपेक्षायानमुच्यते ॥ १० ॥
निवातकवचान् हित्वा हिरण्यपुरवासिनः ।
उपेक्षायानमास्थाय निजघान धनञ्जयः ॥ ११ ॥
स्त्रियोऽथ पानं मृगया तथाक्षा
दैवोपघातश्च बहुप्रकारः ।
इति प्रदिष्टं व्यसनं ह्यनेन
समन्वितो यो व्यसनी स गम्यः ॥ १२ ॥
परस्परस्य सामर्थ्यविघातादासनं स्मृतं ।
अरेश्च विजिगीषोश्च तत् पञ्चविधमुच्यते ॥ १३ ॥
अन्योन्याक्राम्तिकरणं विगृह्यासनमुच्यते ।
अरिं विगृह्यावस्थानं विगृह्यासनमुच्यते ॥ १४ ॥
यदा दुर्गस्थितः शत्रुर्ग्रहीतुं नैव शक्यते ।
विगृह्यैनं तदासीत च्छित्वास्यासारवीवधान् ॥ १५ ॥
विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनं ।
विगृह्यमानः प्रकृतिं कालेनैव वशन्नयेत् ॥ १६ ॥
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
सन्धाय यदवस्थानं सन्धायासनमुच्यते ॥ १७ ॥

निवातकवचैः सार्द्धं रावणः शत्रुरावणः ।
ब्रह्माणमन्तरा कृत्वा सन्धायासनमास्थितः ॥ १८ ॥
उदासीने मध्यमे च समानप्रतिशङ्कया ।
एकीभूय समुत्थानं सम्भूयासनमुच्यते ॥ १९ ॥
उभयारिर्हि वाञ्छेन विनाशमुभयोरपि ।
सम्भूयेन प्रतिव्यूहेदधिकं तन्त्वधर्म्मिणा ॥ २० ॥
यियासोरन्यमन्यत्र प्रसङ्गेनेह केनचित् ।
आसनं यत्तदर्थज्ञैः प्रसङ्गासनमुच्यते ॥ २१ ॥
आस्ते प्रेक्ष्यारिमधिकमुपेक्षासनमुच्यते ।
उपेक्षां कृतवानिन्द्रः पारिजातग्रहं प्रति ॥ २२ ॥
उपेक्षितस्य चान्यैस्तु कारणेनेह केनचित् ।
आसनं रुक्मिण इव तदुपेक्षासनं स्मृतं ॥ २३ ॥
बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ।
द्वैधीभावेन वर्त्तेत काकाक्षिवदलक्षितः ॥ २४ ॥
यापयेद्यत्नमास्थाय सन्निकृष्टमरिन्तयोः ।
उभयोरपि सम्पाते सेवेत बलवत्तरं ॥ २५ ॥
यदा द्वावपि नेच्छेतां संश्लेषं जातसंविदेः ।
तदोपगच्छेतच्छत्रुमधिकं वापि संश्रयेत् ॥ २६ ॥
द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः ।
स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयचेतनः ॥ २७ ॥
उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।

कुलोद्गतं सत्यमार्य्यमाश्रयेत बलोत्कटं ॥ २८ ॥
तद्दर्शनोपास्तिकता नित्यं तद्भावभाविता ।
तत्कारित्वा प्रश्रयिता वृत्तं संश्रयिणः स्मृतं ॥ २९ ।
आशिक्षितनयः सिंहो हन्तीमं केवलं बलात् ।
तच्च धीरो नरस्तेषां शतानि मतिमाश्रयेत् ॥ ३० ॥
पश्यद्भिर्दूरतोऽपायान्सूपायप्रतिपत्तिभिः ।
भवन्ति हि फलायेव विद्वद्भिश्चिन्तिताः क्रियाः ॥ ३१ ॥
उपायपूर्वं लिप्सेत कालं वीक्ष्य समुत्पतेत् ।
पश्चात्तापाय निर्दिष्टा विक्रमैकरसज्ञता ॥ ३२ ॥
शक्याशक्यपरिच्छेदं कुर्य्याद्बुद्ध्या प्रसन्नया ।
केवलं दन्तभङ्गाय दन्तिनः शैलताडनं ॥ ३३ ॥
अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलं ।
*भवन्ति परितापिन्यो यत्नां कर्म्मविपत्तयः ॥ ३४ ॥
बुद्ध्या बोधानुगतया परीयात् सम्पदः पदं ।
सुविशुद्धपदन्यासः पर्वताग्रमिवोदितं ॥ ३५ ॥
दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतं ।
अल्पेनाप्यपचारेण ब्राह्मण्यमिव दूष्यति ॥ ३६ ॥
प्रारब्धानि यथा शास्त्रं कार्य्याण्यासनबुद्धिभिः ।
वनानीव मनोहारि प्रयच्छन्त्यचिरात्फलं ॥ ३७ ॥
सम्यगारभ्यमानं हि कार्य्यं यद्यपि निष्फलं ।

* आकारमासादयतः कुतो हि फलसम्पद इति वा पाठः।

न तत्तथा तापयति यथा मोहसमीहितं ॥ ३८ ॥
यत्तु सम्यगुपक्रान्तं कार्य्यमेतत् विपर्य्ययं ।
पुमांस्तत्रानुपालभ्यो दैवान्तरितपौरुषः ॥ ३९ ॥
प्रयत्नस्तावदास्थेयः फलायामलबुद्धिना ।
अपर्व्वभङ्गनिपुणं शेषं दैवसमाश्रितं ॥ ४० ॥
आत्मानञ्च परांश्चैव ज्ञात्वा धीरः समुत्पतेत् ।
एतदेव हि विज्ञानं यदात्मपरवेदनं ॥ ४१ ॥
निष्फलं क्लेशबहुलं सन्दिग्धफलमेव च ।
न कर्म्म कुर्य्यान्मतिमान्महावैरानुबन्धि च ॥ ४२ ॥
तदात्वायतिसंशुद्धं शुचि शुद्धक्रमागतं ।
हितानुबन्धि च सदा कर्म्म सद्भिः प्रशस्यते ॥ ४३ ॥
हितानुबन्धि यत्कार्य्यं गच्छेद्येन न वाच्यतां ।
तस्मिन् कर्म्मणि सज्जेत तदात्वकटुकोऽपि हि ॥ ४४ ॥
बुद्ध्यैवोपक्रमः श्रेयान्फलनिष्पत्तये सदा ।
क्वचित्कल्याणमित्रस्य शस्यते सिंहवृत्तिता ॥ ४५ ॥
सहसोत्प्लुत्य दुष्टेभ्यो दुष्करं सम्पदर्ज्जनं ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनां ॥ ४६ ॥
न किञ्चित्क्वचिदस्तीह वस्त्वसाध्यं विपश्चितां ।
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ॥ ४७ ॥
वाह्यमानमयःखण्डं स्कन्धन्नैवापि कृन्तति ।
तदल्पमपि धारावद्भवतीप्सितसिद्धये ॥ ४८ ॥

लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकं ।
उपायोपगृहीतेन तेनैव परिशोष्यते ॥ ४९ ॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।
अर्थद्वैधस्य सन्देहच्छेदनं शेषदर्शनं ॥ ५० ॥
विदुषां शासने तिष्ठन्नावमन्येत कञ्चन ।
सर्वस्य चोक्तं शृणुयात्सुभाषितजिघृक्षया ॥ ५१ ॥
मदोद्धतः क्रियामूढो योऽतिक्रामति मन्त्रिणं ।
अचिरात्तं वृथामन्त्रमतिक्रामन्ति विद्विषः ॥ ५२ ॥
संरक्षेन् मन्त्रवीजं हि तद्वीजं हि महीभुजां ।
यस्मिन् भिन्ने ध्रुवं भेदो गुप्ते गुप्तिरनुत्तमा ॥ ५३ ॥
सिंहवच्चेष्टमानस्य काले कर्म्म विपश्चितः ।
क्रियमाणं स्वकुल्यास्तु विदुरस्य परे कृतं ॥ ५४ ॥
अपश्चातापकृत्सम्यगनुरक्तिफलप्रदः ।
अदीर्घकालोऽभीष्टश्च प्रशस्यो मन्त्र इष्यते ॥ ५५ ॥
सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारो मन्त्रः पञ्चाङ्ग उच्यते ॥ ५६ ॥
अनुतिष्ठेत्समारब्धमनारब्धं प्रयोजयेत् ।
अनुष्ठितञ्च सद्वृत्त्या विशेषेणोपपादयेत् ॥ ५७ ॥
प्रचारयेन्मन्त्रविदः कार्य्यद्वारेष्वनेकधा ।
तत्र यच्चेतसां साम्यं तेन शीघ्रं समुत्पतेत् ॥ ५८ ॥
यत्र मन्त्रिमनःसाम्य यत्र चेतो न शङ्कते ।

यच्च सन्तो न निन्दन्ति तत्परीयाच्चिकीर्षितं ॥ ५९ ॥
धृतेऽपि मन्त्रे मन्त्रज्ञैः स्वयम्भूयो विचारयेत् ।
तथा वर्त्तेत तत्त्वज्ञो यथा स्वार्थन्न पीडयेत् ॥ ६० ॥
मन्त्रिणः स्वार्थतात्पर्य्याद्दीर्घमिच्छन्ति विग्रहं ।
मन्त्रिणां भोग्यतामेति दीर्घकार्य्याकुलो नृपः ॥ ६१ ॥
मनःप्रसादः श्रद्धा च तथा करणपाटवं ।
सत्वायोत्थानसम्पच्च कर्म्मणां सिद्धिलक्षणं ॥ ६२ ॥
लघूत्थानान्यविघ्नानि सम्भवत्साधनानि च ।
कथयन्ति पुरः सिद्धिं कारणान्येव कर्म्मणां ॥ ६३ ॥
नावर्त्तयेन्मुहुर्म्मन्त्रं संरक्षेत्तत्परिस्तुवन् ।
अरक्षमाणं मन्त्रं हि भिनत्त्यात्मपरम्परां ॥ ६४ ॥
मदः प्रमादः कामश्च * सुप्तप्रलपितानि च ।
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्यश्च मतास्तथा ॥ ६५ ॥
निस्तम्भे निर्गवाक्षे च निर्भेद्येऽम्बरसंश्रये ।
प्रासादोपर्य्यरण्ये वा मन्त्रयेताविभावितः ॥ ६६ ॥
द्वादशेति मनुः प्राह षोडशेति वृहस्पतिः ।
उशना विंशतिरिति मन्त्रिणां मन्त्रमण्डलं ॥ ६७ ॥
यथा सम्भवमित्यन्ये तत्प्रविश्य यथाविधि ।
मन्त्रयेताहितमनाः कार्य्यसिद्धिविवृद्धये ॥ ६८ ॥
अकथ्यानि तु कार्य्याणि सम्प्रधार्य्य पुनः पुनः ।

---

* कोप इति वा पाठः ।

*प्रविशेत्स्वहितान्वेषी मतमेषां पृथक् पृथक् ॥ ६९ ॥
महापक्षो यथा शास्त्रं दृष्टकर्म्मा हितः सुधीः ।
यद्ब्रूयाच्च मतारूढस्तत्तत्साधु समाचरेत् ॥ ७० ॥
नातीयात्कार्य्यकालं हि कृत्वा मन्त्रविनिश्चयं ।
अतिक्रान्तं तु तं भूयो यथायोगं प्रकल्पयेत् ॥ ७१ ॥
न कार्य्यकालं मतिमानतिक्रामेत्कदाचन ।
कथञ्चिदेव भवति कार्य्ये योगः सुदुर्लभः ॥ ७२ ॥
सतां मार्गेण मतिमान्काले कर्म्म समाचरेत् ।
काले समाचरन्साधु रसवत्फलमश्नुते ॥ ७३ ॥
इति चेति च सम्पश्यन्कालदेशसहायवान् ।
विशुद्धपार्ष्णिः सद्वस्तु समाक्रामेन्न चापलात् ॥ ७४ ॥
अहिते हितबुद्धिरल्पधीरवमन्येत मतानि मन्त्रिणां ।
† चपलः सहसैव सम्पत-
न्नचिरं वै व्यसनी प्रबुध्यते ॥ ७५ ॥
इति मन्त्रबलान्महीपतिर्महतो दुष्टभुजङ्गमानिव ।
विनयेन्नयमार्गमास्थितो वशमुद्योगसमन्वितो
रिपून् ॥ ७६ ॥
इति कामन्दकीये नीतिसारे मन्त्रविकल्पो
नामैकादशः सर्गः ॥ ११ ॥

---

* प्रचक्षीत् इति वा पाठः । † चपलः क्षमते हि सम्पतन्निपतत्व्यसना न बुध्यत इति वा ।

द्वादशसर्गप्रारम्भः ॥

कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणां मन्त्रसम्मतं ।
यातयाय प्रहिणुयाद्दूतं दूत्याभिमानिनं ॥ १ ॥
प्रगल्भः स्मृतिमान्वाग्मी शास्त्रे चास्त्रे च निष्ठितः ।
अभ्यस्तकर्म्मा नृपतेर्दूतो भवितुमर्हति ॥ २ ॥
निसृष्टार्थो मितार्थश्च तथा शासनवाहकः* ।
सामर्थ्यात्पादतो हीनो दूतस्तु त्रिविधः स्मृतः ॥ ३ ॥
स भर्त्तुः शासनाद्गच्छेद्गन्तव्यमुत्तरोत्तरं ।
स्वराष्ट्रपरराष्ट्राणामिति चेति च चिन्तयन् ॥ ४ ॥
अन्तःपालांस्तु कुर्व्वीत मित्राण्याटविकांस्तथा ।
जलस्थलानि मार्गांश्च विद्यात्स्वबलसिद्धये ॥ ५ ॥
नाविज्ञातः पुरं शत्रोः प्रविशेच्च न संसदि ।
कालमीक्षेत कार्य्यार्थमनुज्ञातश्च निष्पतेत् ॥ ६ ॥
सारवत्ताञ्च राष्ट्रस्य दुर्गत्वद्गुप्तिमेव च ।
छिद्रं शत्रोर्विजानीयात् कोषमित्रबलानि च ॥ ७ ॥
उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् ।
रागापरागौ जानीयात्प्रकृतीनाञ्च भर्त्तरि ॥ ८ ॥
कृत्यपक्षस्य चोपायं कुर्य्यादनतिलक्षितः ।
* * * * * * ॥ ९ ॥
पृच्छ्यमानोऽपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतिं ।

---

* धारक इति वा। † दुष्टिबलविचेष्टितैरिति पाठान्तरम्।

ब्रूयात् प्रसृतया वाचा सर्वं वेद भवानिति ॥ १० ॥
फलेन नाम्ना द्रव्येण कर्म्मणा च महीयसा ।
कुर्य्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥ ११ ॥
विद्याशिल्पोपदेशेन संश्लिष्येोभयवेतनैः ।
कृत्यपक्षञ्च जानीयात्तद्भर्तुश्च विचेष्टितं ॥ १२ ॥
तीर्थाश्रमाश्रयस्थाने * शास्त्रविज्ञानहेतुना ।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवसेत् ॥ १३ ॥
सन्तापं कुलमैश्वर्य्यं त्यागमुत्थानसौष्ठवं ।
अक्षुद्रतां भद्रताञ्च भर्तुर्भेद्येषु दर्शयेत् ॥ १४ ॥
सहेतानिष्टवचनं कामक्रोधञ्च वर्जयेत् ।
नान्यैः शयीत भावं स्वं रक्षेद्विद्यात्परस्य च ॥१५॥
काले व्रजति मेधावी न खिद्येतात्मसिद्धये ।
क्षिप्यमाणञ्च बुध्येत कालं नानार्थिलाभनैः ॥ १६ ॥
एतेष्वहःसु गच्छत्सु न तत्र पृथिवीपतेः ।
पश्यति व्यसनं किञ्चित्स्वयं वा कर्तुमिच्छति † ॥१७॥
स्वात्मप्रकोपमथवा विनेतुं नीतिवित्तमः ।
सस्यादेः सङ्ग्रहं कर्तुं स्वदुर्गे दुर्गसत्क्रियां ॥ १८ ॥
स्वपक्षाभ्युदयाकाङ्क्षी देशकालावुदीक्षते ।
तत्र यात्री स्वयं चित्तमाशुास्यैव समीहते ॥ १९ ॥
यात्राकालक्षयार्थी वा तत्र चायं विलम्बते ।

---

* सुरस्थाने इत्यपि। † मोहते इत्यन्यः।

काले विक्षिप्यमाणे तु तर्कयेदिति परिडत:॥२०॥
कार्य्यकालविपत्तिश्च यत्तां ज्ञात्वा विनिष्पतेत् ।
तिष्ठन् वार्त्ताविशेषार्थान् भर्त्तुःसर्वान्निवेदयेत् ॥२१॥
रिपोः शत्रुपरिच्छेदः सुहृद्बन्धुविभेदनं ।
दुर्गकोषबलज्ञानं कृत्यपक्षोपसङ्ग्रहः ॥ २२ ॥
राष्ट्राव्यपेतपालानामात्मसात्करणं तथा ।
युद्धापसारभूज्ञानं दूतकर्म्मेति कथ्यते ॥ २३ ॥
दूतेनैव नरेन्द्रस्तु कुर्व्वीतारिविकर्षणं ।
स्वपक्षे च विजानीयात् परदूतविचेष्टितं॥ २४ ॥
तर्केङ्गितज्ञः स्मृतिमान्मृदुर्लघुपरिक्रमः ।
क्लेशायाससहो दक्षश्चरः स्यात् प्रतिपत्तिमान् ॥ २५ ॥
तपस्विलिङ्गिनो धूर्त्ताः पण्यशिल्पोपजीविकाः।
चराश्चरेयुः परितः पिबन्तो जगतां मतं ॥ २६ ॥
निर्गच्छेयुर्विशेयुश्च सर्व्ववार्त्ताविदोऽन्वहं ।
चराः सकाशान्नृपतेश्चक्षुर्दूरतरं हि ते ॥ २७ ॥
सूक्ष्मं सूत्रप्रचारेण पश्येद्वै विधिचेष्टितं ।
स्वपन्नपि च जागर्त्ति चारचक्षुर्महीपतिः ॥ २८ ॥
विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः ।
राजा चरैर्जगत्कृत्स्नं व्यापुयाल्लोकसम्मतैः ॥ २९ ॥
चारचक्षुर्नरेन्द्रः स्यात्सम्पतेत्तेन भूयसा ।
अनेनासम्पतन्मोहात्पतत्यन्धः समेऽपि हि ॥ ३०॥

सर्व्वसम्परसमुदयं सर्व्वावस्थाविचेष्टितं ।
चरेण द्विषतां विद्यात्तद्देशप्रार्थनानि च ॥ ३१ ॥
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः ।
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत उच्यते ॥ ३२ ॥
चरेण प्रचरेद्राजा सूत्रेणर्त्विगिवाध्वरे ।
दूते सन्धानमायाते चरचर्य्या प्रतिष्ठिता ॥ ३३ ॥
तीक्ष्णः प्रव्रजितश्चैव सत्री * विषद एव च ।
एते ज्ञेयास्तु सञ्चाराः सर्व्वे नान्योन्यवेदिनः ॥ ३४ ॥
संस्थानवत्यः संस्थाश्च कार्य्याः कार्य्यप्रसिद्धये ।
तिष्ठेयुपीर्म्सञ्चाराः परिचर्य्यापवादिनः ॥ ३५ ॥
बालः कृषीवलो लिङ्गी भिक्षुकोऽध्यापकस्तथा ।
संस्थाः स्युश्चारसंस्थित्यै दत्तदायाः शुभाशयाः ॥ ३६ ॥
स्वपक्षे परपक्षे च यावान् कश्चिद्व्यवस्थितः ।
सर्व्वस्मिंस्तत्र सञ्चारास्तिष्ठेयुश्चितवेदिनः ॥ ३७ ॥
स्वपक्षे परपक्षे च यो न वेद विकीर्षितं ।
जाग्रन्नपि सुषुप्तोऽसौ न भूयः प्रतिबुध्यते ॥ ३८ ॥
कारणाकारणक्रुद्धान् बुध्येत स्वपरिग्रहे ।
पापानकारणक्रुद्धांस्तूष्णीं दण्डेन साधयेत् ॥ ३९ ॥
ये तु कारणतः क्रुद्धास्तान् वशीकृत्य संवसेत् ।
शमयेद्दानमानाभ्यां छिद्रञ्च परिपूरयेत् ॥ ४० ॥

---

* छद्मोत्यर्थः ।

अणुनापि प्रविश्यारिं छिद्रेण बलवत्तरं ।
निःशेषं मज्जयेद्राष्ट्रं पानपात्रमिवोदकं ॥ ४१ ॥
जडमूकान्धबधिरछद्मानः षण्ढकास्तथा ।
किराता वामनाः कुब्जास्तद्विधाये च कारकाः॥४२॥
भिक्षुकाश्चारणा दास्यो नानाकार्य्यकलाविदः ।
अन्तःपुरगतां वार्त्तामाहरेयुरलक्षिताः ॥ ४३ ॥
छत्रव्यजनभृङ्गारयानवाहनधारिणः ।
महामात्रबहिर्वार्त्तां विदुरन्ये च तद्विधाः ॥ ४४ ॥
सूदव्यञ्जनकर्त्तारस्तल्पका व्ययकास्तथा ।
प्रसाधका भोजकाश्च गात्रसंवाहका अपि ॥ ४५ ॥
जलताम्बूलकुसुमगन्धभूषणदायकाः ।
कर्त्तव्याश्च सदा ह्येते ये चान्येऽभ्यासवर्त्तिनः ॥ ४६ ॥
सञ्ज्ञाभिर्मूर्च्छितैर्*लेख्यैराकारैरिङ्गितैरपि ।
सुसञ्चरेयुरव्यग्राश्चराश्चर्य्यां परस्परं ॥ ४७ ॥
समापिबन्तो जगतां मतानि
जलानि भूमेरिव सूर्य्यपादाः ।
अनेकशिल्पाध्ययनप्रवीणा-
श्चराश्चरेयुर्बहुलिङ्गिरूपाः ॥ ४८ ॥
येन प्रकारेण परानुपेयात्
परापरज्ञश्च समृद्धिहेतोः ।

---

* मुद्रितैरिति च।

तमात्मनि स्वस्थमतिस्तु तद्भे-
र्वियुज्यमानं हि परेण विद्यात् ॥ ४९ ॥
इति कामन्दकीये नीतिसारे दूतप्रचारचरविकल्पो
नाम द्वादशः सर्गः ॥ १२ ॥

त्रयोदशसर्गप्रारम्भः ॥

अन्वहश्चरचर्य्याभिर्विमलं दूतचेष्टितं ।
यायाद्यथोक्तलाभस्तु सूक्ष्मबुद्धिपुरःसरः ॥ १ ॥
सूक्ष्मा सत्वप्रयत्नाभ्यां दृढा बुद्धिरधिष्ठिता ।
प्रसूते हि फलं श्रीमदरणीव हुताशनं ॥ २ ॥
धातोश्चामीकरमिव सर्पिर्निर्मथनादिव ।
बुद्धिप्रयत्नोपगताध्यवसायाद्ध्रुवं फलं ॥ ३ ॥
धीमानुत्साहसम्पन्नः प्रभुशक्त्या समन्वितः ।
श्रियः स्यात्परमं पात्रमपामिव महार्णवः ॥ ४ ॥
नलिनीवाम्बुसम्पत्या बुद्ध्या श्रीः परिपाल्यते ।
उत्थानव्यवसायाभ्यां विस्तारमुपनीयते ॥ ५ ॥
लक्ष्मीरुत्साहसम्पन्नान् बुद्धिशुद्धं प्रसर्पतः ।
नापैति कायाच्छायेव विस्तारं चोपगच्छति ॥ ६ ॥
वीतव्यसनमश्रान्तं महोत्साहं महामतिं ।
प्रविशन्ति सदा लक्ष्म्यः सरित्पतिमिवापगाः ॥ ७ ॥
सत्वबुद्ध्युपपन्नोऽपि व्यसनग्रस्तमानसः ।

स्त्रीभिः षण्ढ इव श्रीभिरलसः परिभूयते ॥ ८ ॥
उत्थानेनैधयेत् सर्वमिन्धनेनेव पावकं ।
श्रियं हि सततोत्थायी दुर्बलोऽपि समश्नुते ॥ ९ ॥
भोक्तुं पुरुषकारेण दुष्टस्त्रियमिव श्रियं ।
व्यवसायं सदैवेच्छेन्न हि क्लीबवदाचरेत् ॥ १० ॥
वशे श्रियं सदोत्साही सैंहीं वृत्तिमुपाश्रितः ।
कचग्रहेण कुर्वीत दुर्विनीतामिव स्त्रियं ॥ ११ ॥
किरीटमणिचित्रेषु मूर्द्धसु त्राणसारिषु* ।
नाकृत्वा विद्विषां पादं पुरुषो भद्रमश्नुते ॥ १२ ॥
प्रयत्नप्रेर्य्यमाणेन महता वित्तहस्तिना ।
रूढवैरिद्रुमोत्खातमकृत्वैव कुतः सुखं ॥ १३ ॥
हेलाकृष्टस्फुरत्कान्तिखड्गांशुपरिपिञ्जरैः ।
श्रीमत्करिकराकारैराक्रीयन्ते भुजैः श्रियः ॥ १४ ॥
उच्चैरुच्चैस्तरामिच्छन् पदान्यायच्छते महान् ।
नीचैर्नीचैस्तरां याति निपातभयशङ्कया ॥ १५ ॥
प्रमाणाभ्यधिकस्यापि महत्सत्त्व†मधिष्ठितः ।
पदं स धत्ते शिरसि करिणः केशरी यथा ॥ १६ ॥
गतभीर्भीतिजननं भोगं भोगीव दर्शयेत् ।
यथाबलञ्च कुर्वीत रिपोर्दण्डनिपातनं ॥ १७ ॥
प्रकृतिव्यसनं यस्मात्तत्प्रशाम्य समुत्पतेत् ।

---

* रक्षार्थं शिरस्त्राणवत्सु खड्गप्रहारैर्भग्नत्राणपातितेष्विति टी । † महासत्त्वमिति पा ।

अनयापनयाभ्याञ्च जायते दैवतोऽपि वा ॥ १८ ॥
यस्माद्धि व्यसति श्रेयस्तस्माद्व्यसनमुच्यते ।
व्यसन्यधोऽधो व्रजति तस्मात्तत्परिवर्जयेत् ॥ १९ ॥
हुताशनो जलं व्याधिर्दुर्भिक्षं मरकस्तथा ।
इति पञ्चविधं दैवं व्यसनं मानुषं परं ॥ २० ॥
दैवं पुरुषकारेण शान्त्या च प्रशमन्नयेत् ।
उत्थायित्वेन नीत्या च मानुषं कार्य्यतत्त्ववित् ॥ २१ ॥
स्वाम्यादि मित्रपर्य्यन्तं प्राकृतं मण्डलं हि तत् ।
तत्र कर्म्म प्रवक्ष्यामि व्यसनञ्च यथाक्रमं ॥ २२ ॥
मन्त्रो मन्त्रफलावाप्तिः कार्य्यानुष्ठानमायतिः ।
आयव्ययौ दण्डनीतिरमित्रप्रतिषेधनं ॥ २३ ॥
व्यसनस्य प्रतीकारो राजराज्याभिषेचनं* ।
इत्यमात्यस्य कर्म्मेदं हन्ति स व्यसनान्वितः ॥ २४ ॥
†अमात्यैर्व्यसनोपेतैर्ह्रीयमाणो महीपतिः ।
असत्त्व एवोत्पतति छिन्नपक्ष इवाण्डजः ॥ २५ ॥
हिरण्यधान्यवस्त्राणि वाहनानि तथैव च ।
तथान्ये द्रव्यनिचयाः प्रजातः सम्भवन्ति हि ॥ २६ ॥
वार्त्ता प्रजा साधयति वार्त्ता वै लोकसंश्रयः ।
प्रजायां व्यसनस्थायां न किञ्चिदपि सिध्यति ॥ २७ ॥
प्रजानामापदि स्थानं रक्षणं कोषदण्डयोः ।

---

* रक्षणमिति वा। † अमात्ये व्यसनोपेते ह्रियमाणो महीपतिरित्यपि।

पौराश्चैवोपकुर्व्वन्ति संश्रयायेह दुर्गिणां ॥ २८ ॥
तूष्णीं युद्धं जनत्राणं मित्रामित्रपरिग्रहः ।
सामन्ताटविकाबाधानिरोधो दुर्गमुच्यते ॥ २९ ॥
स्वपक्षैः परपक्षैश्च दुर्गस्थः पूज्यते नृपः ।
एतद्धि दुर्गव्यसनात्सर्व्वमेव न विद्यते ॥ ३० ॥
भृत्यानां भरणं दानं भूषणं वाहनक्रयः ।
स्थैर्य्यं परोपजापश्च दुर्गसंस्कार एव च ॥ ३१ ॥
सेतुबन्धवणिक्कर्म्मप्रजामित्रपरिग्रहः ।
धर्म्मकामार्थसिद्धिश्च कोषादेतत्प्रवर्त्तते ॥ ३२ ॥
कोषमूलो हि राजेति प्रवादः सार्व्वलौकिकः ।
एतत्सर्व्वं जहातीह कोषव्यसनवान्नृपः ॥ ३३ ॥
क्षीणं बलं वर्द्धयति स्वतो गृह्णाति च प्रजाः ।
कोषवान् पृथिवीपालः परैरप्युपजीव्यते ॥ ३४ ॥
मित्रामित्रहिरण्यानां भूमीनाञ्च प्रसारणं ।
दूरकार्य्याशुकारित्वं लब्धस्य परिपालनं ॥ ३५ ॥
परचक्राभिघातश्च स्वदण्डस्य परिग्रहः ।
दण्डादेतत्प्रभवति याति तद्व्यसने क्षयं ॥ ३६ ॥
अरयोऽपि हि मित्रत्वं यान्ति दण्डवतो ध्रुवं ।
दण्डप्रायो हि नृपतिर्भुनक्त्याक्रम्य मेदिनीं ॥ ३७ ॥
संस्तम्भयति मित्राणि ह्यमित्रं नाशयत्यपि ।
भूकोषदण्डैर्व्रजति प्राणैश्चाप्युपकारितां ॥ ३८ ॥

ततः करोति सुबहु मित्रं स्नेहनिबन्धनं ।
तस्मिन् व्यसनमापन्ने मित्रकर्म्म न विद्यते ॥ ३९ ॥
उपकाराद्दते लाभु मित्रं श्रेयसि तिष्ठति ।
मित्रवान् साधयत्यर्थान्दुःसाध्यानप्यनादरात् ॥ ४० ॥
अन्वीक्षणञ्च विद्यानां स्ववर्णाश्रम* रक्षणं ।
ग्रहणं युद्धशास्त्राणां युद्धमार्गेऽपि शिक्षणं ॥ ४१ ॥
व्यायामः शस्त्रविज्ञानं कर्म्मणां लक्षणानि च ।
गजाश्वरथपृष्ठेषु यथावत्सम्प्रवर्त्तनं ॥ ४२ ॥
नियुद्धकुशलं मायापरचितप्रवेशनं ।
धूर्त्तता शाठ्ययुक्तेषु सत्सु सद्वृतदर्शनं ॥ ४३ ॥
मन्त्रोद्योगोऽनुमन्त्रत्वं तद्रक्षा स्वास्थ्यमेव च ।
उपेक्षा सामदानस्य भेदो दण्डस्य साधनं ॥ ४४ ॥
प्रशास्त्रध्यक्षसेनानां मन्त्र्यमात्यपुरोधसां ।
सम्यक् प्रचारविज्ञानं दुष्टानाञ्चावरोधनं ॥ ४५ ॥
गतागतपरिज्ञानं दूतसम्प्रेषणानि च ।
प्रकृतिव्यसनापोहव्युद्धप्रशमनानि च ॥ ४६ ॥
गुरूणामनुवृत्तिश्च पूज्यानाञ्चाभिपूजनं ।
धर्म्मासनप्रतिष्ठानं राज्यकण्टकशोधनं ॥ ४७ ॥
भूताभूतपरिज्ञानं कृताकृतपरीक्षणं ।
तुष्टातुष्टविचारश्च सर्व्वेषामनुजीवनं ॥ ४८ ॥

---

* स्ववर्णाश्रमेति वा ।

मध्योदासीनचरितज्ञानं तत्सिद्धिपालनं* ।
परिग्रहस्तु मित्राणाममित्राणाञ्च निग्रहः ॥ ४९ ॥
पुत्रदारादिभिर्गुप्तिर्बन्धुवर्गपरिग्रहः ।
स्ववृद्धिपचनादीनां † स्ववृत्तीनां प्रवर्त्तनं ॥ ५० ॥
अभृतानाञ्च परिक्लेशः सतान्च परिगूहनं ।
अहिंसा सर्व्वभूताना ‡ मधर्म्माणाञ्च वर्ज्जनं ॥ ५१ ॥
अकार्य्यप्रतिषेधश्च कार्य्याणाञ्च प्रवर्त्तनं ।
प्रदानञ्च प्रदेयानामदेयानाञ्च सङ्ग्रहः ॥ ५२ ॥
अदण्डनमदण्ड्यानां दण्ड्यानाञ्चापि दण्डनं ।
अग्राह्यग्रहणञ्चैव ग्राह्याणां ग्रहणं तथा ॥ ५३ ॥
अर्थयुक्तस्य करणमनर्थस्य च वर्ज्जनं ।
न्यायतश्च करादानं स्वयं वा प्रतिमोक्षणं ॥ ५४ ॥
संवर्द्धनं प्रधानानां निरस्यानाञ्च निर्हृतिः ।
वैषम्यानां प्रशमनं भृत्यानाञ्चाविरोधनं ॥ ५५ ॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।
आरम्भः कर्म्मणां शश्वदारब्धस्यान्तदर्शनं ॥ ५६ ॥
अलब्धलिप्सा न्यायेन लब्धस्य परिवर्द्धनं ।
परिवृद्धस्य विधिवत्पात्रे सम्प्रतिपादनं ॥ ५७ ॥
अधर्म्मप्रतिषेधश्च न्यायमार्गानुवर्त्तनं ।

---

* तत्सन्धिपालनमिति । † वनिदीपवनादीनामिति । ‡ चभूतानाञ्च मार्गनिषिद्धानां हिंसानामिति वा ।

उपकार्य्यापकारित्वमिति वृत्तं महीपतेः ॥ ५८ ॥
एतत्सर्वममात्यादि राज्यं नयपुरःसरः ।
नयत्युन्नतिमुद्युक्तो व्यसनी क्षयमेव तु ॥ ५९ ॥
तस्मिन्धर्म्मार्थयोर्व्यये तथा चास्वस्थचेतसि ।
सर्वमेतदशेषेण मन्त्री सन्धातुमर्हति ॥ ६० ॥
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
पानं स्त्री मृगया द्यूतं व्यसनानि महीपतेः ॥ ६१ ॥
आलस्यं स्तब्धता दर्पः प्रमादो वैरकारिता ।
इति पूर्वोपदिष्टं हि सचिवव्यसनं स्मृतं ॥ ६२ ॥
अतिवृष्टिरनावृष्टिः शलभाः मूषकाः शुकाः ।
असत्करश्च दण्डश्च परचक्राणि तस्कराः ॥ ६३ ॥
राजानीकप्रियोत्सर्गो मरकव्याधिपीडनं ।
पशूनां मरणं रोगो राष्ट्रव्यसनमुच्यते ॥ ६४ ॥
विशीर्णयन्त्रप्राकारपरिखात्वमशस्त्रता ।
क्षीणघासेन्धनान्नत्वं दुर्गव्यसनमुच्यते ॥ ६५ ॥
व्ययीकृतः परिक्षिप्तो भक्षितोऽसञ्चितस्तथा ।
मुषितो दूरसंस्थश्च कोषव्यसनमुच्यते ॥ ६६ ॥
उपरुद्धं परिक्षिप्तं विमानितममानितं ।
अभृतं व्याधितं श्रान्तं दूरायातं नवागतं ॥ ६७ ॥
परिक्षीणाम्बरहितं प्रहतायजवं तथा ।
आशानिर्वेदभूयिष्ठमनृतप्राप्तमेव च ॥ ६८ ॥

कलत्रगर्भं विक्षिप्तमन्तःशल्यं तथैव च ।
भिन्नगर्भं ऽपसृतमवियुक्तं तथैव च ॥ ६९ ॥
कुद्यमौलाविमिश्रश्च विशिष्टश्चापि विद्विषा ।
दूष्ययुक्तं स्वविक्षिप्तं मित्रविक्षिप्तमेव च ॥ ७० ॥
विच्छिन्नविविधासारं * शून्यमूलं तथैव च ।
अस्वामिसङ्गतश्चापि भिन्नकूटं तथैव च ॥ ७१ ॥
दुष्पार्ष्णियहमन्धञ्च † बलव्यसनमुच्यते ।
अत्र किञ्चिदसाध्यञ्च किञ्चित्साध्यन्तदुच्यते ॥ ७२ ॥
अपरुद्धं हि युध्येत निर्गत्यात्यन्तमूर्जितं ।
परिक्षिप्तं तु निर्मार्गं सर्वतः परिवेष्टितम् ॥ ७३ ॥
अमानितं हि युध्येत कृतमानार्थसङ्ग्रहं ।
न विमानितमत्यर्थं प्रदीप्तक्रोधपावकं ॥ ७४ ॥
युध्येताभृतमत्यर्थं तदात्वे कृतवेतन ।
न व्याधितमकर्म्मण्यं व्याधितं परिभूयते ॥ ७५ ॥
परिश्रान्तं हि युध्येत विश्रान्तं सुविधानतः ।
दूरायातं हतप्राणं न शस्त्रग्रहणक्षमं ॥ ७६ ॥
नवागतं हि तद्देश्यैर्मिश्रं युध्येत तन्नयात् ।
हतमुख्यमवीरं तु परिक्षीणं न युध्यते ॥ ७७ ॥
युध्येतेह प्रतिहतं प्रवीरैः सह सङ्गतं ।

---

* वीवधासारमिति च । † चाग्रेति ।

हताग्रजमनासक्तं प्रमाथिलपुरःसरं ॥ ७८ ॥
आशानिर्वेदलब्धार्थं पूर्णाशन्नात्र युध्यते ।
नाभूयिष्ठप्रसारे तु निरूढेऽल्पतया भुवः ॥ ७९ ॥
युध्येतावृतसम्प्राप्तमपूर्वायुधवाहनं ।
कलत्रगर्भादुन्नीतकलत्रं सङ्करक्षमं ॥ ८० ॥
अनेकराज्यान्तरितमति क्षिप्तन्नयुध्यते ।
अन्तर्गतामित्रशल्यमन्तःशल्यं हि न क्षमं ॥ ८१ ॥
अन्योन्यमेव निर्भिन्नं भिन्नगर्भं न युध्यते ।
तथा चापसृतञ्चैव तथा राज्यान्तरीकृतं ॥ ८२ ॥
अवियुक्तं ह्यपक्रान्तं * योद्धुलन्न क्षमं युधि ।
पितृपैतामहं मौलं तत्क्षुब्धं सान्त्वितं क्षमं ॥ ८३ ॥
मिश्रं शत्रुभिरेकस्थं तदाक्रान्ततयाऽक्षमं ।
दूष्ययुक्तं न युध्येत युध्येतोद्धृतकण्टकं ॥ ८४ ॥
* * * * * ।
प्रधानयोधसंयुक्तं † दूष्ययुक्तं समुन्नयेत् ‡ ॥ ८५ ॥
स्वविक्षिप्तं सुविषयाक्षिप्तमापद्युदाहृतं ।
प्रकृष्टदेशकालत्वान्मित्रक्षिप्तमयोगिकं ॥ ८६ ॥
धान्यादेर्वीवधाप्राप्तिरासारस्तु सुहृद्बलं ।
विच्छिन्नवीवधासारं सैन्यं युद्धाय नेष्यते ॥ ८७ ॥
कृतजानपदारक्ष्यं शून्यमूलं युधि क्षमं ।

---

* परिग्रहं ह्युपक्रान्तमित्यन्यः । † सङ्गुप्तमिति वा । ‡ समुत्पतेत इति सुपाठः ।

अस्वामिसंहतञ्चैव स्वामिना यद्विना कृतं ॥ ८८ ॥
न युध्येत्त भिन्नकूटं भिन्नकूटमनायकं ।
पश्चात्कोपाभितप्तं तु दुःपार्ष्णिग्राहमक्षमं ॥ ८९ ॥
आदेशिकं स्मृतं युद्धं मूढत्वान्न क्रियाक्षमं ।
बलं व्यसनमित्यादि तत्समीक्ष्य समुत्पतेत् ॥ ९० ॥
दैवोपपीडितं मित्रं ग्रस्तं शत्रुबलेन च ।
कामक्रोधसमुत्थैश्च दोषैः सम्परिकीर्तितैः ॥ ९१ ॥
नरेन्द्राद्याः प्रकृतयः शप्त याः परिकीर्तिताः ।
पूर्वं पूर्वं गुरुतरं तासां व्यसनमुच्यते ॥ ९२ ॥
इत्यादि सर्वं प्रकृतं यथावद्
बुध्येत राजा व्यसनं प्रयत्नात् ।
बुध्या च शक्त्या व्यसनस्य कुर्य्या-
दकालहीनं व्यपरोपणं हि ॥ ९३ ॥
प्रकृतिव्यसनानि भूतिकामः
समुपेक्षेत न हि प्रमाददर्पात् ।
प्रकृतिव्यसनान्युपेक्षते यो
न चिरात्तं रिपवः पराभवन्ति ॥ ९४ ॥
इदमिदमिति सम्यक् कर्म्मणा योजनीयं
नियतमिति विचिन्त्य प्रापयेदीहमानः ।
सुनयपिहितरन्ध्रः प्राकृतो यस्य वर्गः
क्षितिपतिरुपभुङ्क्ते स त्रिवर्गं चिराय ॥ ९५ ॥

इति कामन्दकीये नीतिसारे उत्सारप्रशंसाप्रकृतिव्यसनानि त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशसर्गप्रारम्भः ॥

अमात्याद्याः प्रकृतयो मित्रान्ता राज्यमुच्यते ।
अशेषराज्यव्यसनात् पार्थिवव्यसनं गुरु ॥ १ ॥
राजा त्वव्यसनी राज्यव्यसनापोहनक्षमः ।
न राज्यव्यसनापोहसमर्थं राज्यमूर्जितं ॥ २ ॥
अशास्त्रचक्षुर्नृपतिरन्ध इत्यभिधीयते ।
वरमन्धो न चक्षुष्मान्मदादाक्षिप्तसत्पथः ॥ ३ ॥
मन्त्रिभिर्मन्त्रकुशलैरन्धः सन्नाय्यते नृपः ।
चक्षुष्मांश्च मदान्धः सन्नात्मानं हन्त्यशेषतः ॥ ४ ॥
शास्त्रचक्षुर्नृपस्तस्मान्महामात्यमते स्थितः ।
धर्म्मार्थप्रतिघातीनि व्यसनानि परित्यजेत् ॥ ५ ॥
वाग्दण्डयोश्च पारुष्यमर्थदूषणमेव च ।
स्मृतं व्यसनतत्त्वज्ञैः क्रोधजं व्यसनत्रयं ॥ ६ ॥
कामजं मृगया द्यूतं स्त्रियः पानं तथैव च ।
व्यसनं व्यसनार्थज्ञैश्चतुर्विधमुदाहृतं ॥ ७ ॥
वाक्पारुष्यपरं लोक उद्वेजनमनर्थकं ।
न कुर्य्यात्प्रियया वाचा प्रकुर्य्याज्जगदात्मतां ॥ ८ ॥
अकस्मादेव यः कोपादभीक्ष्णं बहु भाषते ।

तस्मादुद्विजते लोकः सस्फुलिङ्गादिवानलात् ॥ ९ ॥
हृदये वागसिस्तीक्ष्णो मर्म्मच्छिद्धि पतन्मुहुः ।
तेन च्छिन्नो नरपतिः स दीप्तो याति वैरितां ॥ १० ॥
नोद्वेजयेज्जगद्वाचा रूक्षया प्रियवाग्भवेत् ।
प्रायेण प्रियकर्म्मी यो कृपणोऽपि हि सेव्यते ॥ ११ ॥
असिद्धसाधनं षड्भिः शासनं दण्डमुच्यते ।
तद्युक्तोऽपनये दण्डो युक्तदण्डः प्रशस्यते ॥ १२ ॥
उद्वेजयति भूतानि दण्डपारुष्यवान्नृपः ।
भूतान्युद्वेजमानानि द्विषतां यान्ति संश्रयं ॥ १३ ॥
आश्रिताश्चैव लोकस्य विवृद्धिं यान्ति विद्विषः ।
विवृद्धाश्च विनाशाय तस्मान्नोद्वेजयेत्प्रजाः ॥ १४ ॥
लोकानुग्रहकर्त्तारः प्रवर्द्धन्ते महीभुजः ।
लोकवृद्ध्या नरेन्द्राणां वृद्धिस्तत्सङ्क्षये क्षयः ॥ १५ ॥
महत्स्वप्यपराधेषु दण्डं प्राणान्तिकं त्यजेत् ।
ऋते राज्यापहारात्तु युक्तदण्डः प्रशस्यते ॥ १६ ॥
दूष्यस्यादूषणार्थञ्च परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ १७ ॥
तदकस्मात्समाविष्टः कोपेनातिवलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्य्यादर्थदूषणं ॥ १८ ॥
यानक्षोभो यानवतो यानाभिहरणं तथा ।
क्षुत्पिपासाश्रमायासशीतवातोष्णपीडनं ॥ १९ ॥

अभियानस्य सम्पत्या यानव्यसनजं महत् ।
दुःखं प्रतप्तसिक्ताकुशकण्टकभूमयः ॥ २० ॥
वृक्षसङ्कटजा दोषा लताकण्टकपाटनं ।
शैलपादलताजालस्थाणुवल्मीकपीडनं ॥ २१ ॥
प्रच्छन्नोपगतैः शैलसरिद्विपिनकुक्षिषु ।
बधबन्धपरिक्लेशैः सामन्ताटविकादिभिः ॥ २२ ॥
स्वसैन्यैश्च स्वकल्पैश्च परैर्भिन्नैश्च मारणं ।
ऋक्षाजगरमातङ्गसिंहव्याघ्रभयानि च ॥ २३ ॥
दवाग्निधूमसंरोधो दिङ्मोहो भ्रमणानि च ।
इत्यादि पृथ्वीन्द्राणां मृगयाव्यसनं स्मृतं ॥ २४ ॥
जितश्रमत्वं व्यायाम आममेदकफक्षयः ।
चरस्थिरेषु लक्षेषु बाणसिद्धिरनुत्तमा ॥ २५ ॥
मृगयायां गुणानेतानाहुरन्ये न तत्क्षमं ।
दोषाः प्राणहराः प्रायस्तस्मात्तद्व्यसनं महत् ॥ २६ ॥
आमादयो हि जीर्यन्ते योग्ययैव दिवानिशं ।
चरेषु* यत्र लक्ष्येषु बाणसिद्धिश्च जायते ॥ २७ ॥
अथ चेन्मृगयाक्रीडां वाञ्छेत नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडाहेतोर्मनोरमं ॥ २८ ॥
परिक्षिप्तं परिखया मृगाणामप्यगम्यया ।
आयामपरिणाहाभ्यामर्द्धयोजनसम्मितं ॥ २९ ॥

---

* चलेषु इति च ।

गिरेरूपान्ते नद्या वा पर्य्याप्तजलशाड्वलं ।
अकण्टकलतागुल्मं विषपादपवर्जितं ॥ ३० ॥
पादपैः पुष्पफलदैः विज्ञातैश्चित्तहारिभिः ।
स्निग्धशीतघनच्छायैर्विटपैरुपशोभितं ॥ ३१ ॥
पांशुपूरितनिश्छिद्रं शुभ्रप्रदरकन्दरं ।
दलितस्थाणुवल्मीकपाषाणं समभूतलं ॥ ३२ ॥
शोधितग्राहसलिलं सम्भृतजलदाशयं ।
नानापुष्पसमाकीर्णं नानाविहगसङ्कुलं ॥ ३३ ॥
मृगसङ्घातसम्पूर्णं हस्तिनीकलभान्वितं ।
भग्नदन्तनखव्याघ्रं छिन्नशृङ्गविषाणि च ॥ ३४ ॥
सुखसंसेव्यलतया पुष्पवल्लीपिनद्धया ।
वनराज्या परिक्षिप्तं परिखातटजातया ॥ ३५ ॥
वहिर्दूरान्तराभोगनिर्वृक्षसमभूतलं ।
अगम्यं रिपुसैन्यानां मनःप्रीतिविवर्द्धनं ॥ ३६ ॥
तद्वने चरचित्तज्ञैः क्लेशायाससहैर्दृढैः ।
रक्षितं रक्षिभिः स्वाप्तैर्भूभुजां भूरिभूतये ॥ ३७ ॥
तत्कर्म्माप्तो नरेन्द्रस्य जनो जितपरिश्रमः ।
क्रीडनायास्य विविधा मृगजातीः प्रवेशयेत् ॥ ३८ ॥
अन्यकार्य्याविरोधेन प्रातश्चङ्क्रमणक्षमः ।
क्रीडनायाविशेद्राजा तदाप्तैः सहितो मतैः ॥ ३९ ॥
यदा च प्रविशेद्राजा क्रीडनार्थं तदा वहिः ।

सन्नद्धं यत्नतस्तिष्ठेत्सैन्यं दूराक्षगोचरं ॥ ४० ॥
सन्निर्य्ये मृगयायाने गुणाः साधु प्रकीर्त्तिताः ।
क्रीडाप्रीतो नरपतिस्तांस्तत्र समवाप्नुयात् ॥ ४१ ॥
विधिरेष समुद्दिष्टो मृगयाक्रीडने वरः ।
न गच्छेदन्यथा राजा मृगयायां मृगा यथा ॥ ४२ ॥
महत्ता रक्षणेनापि धनस्य द्राग्विमुक्तता ।
निःसत्यता निष्ठुरता क्रोधो वाक्शस्त्रखण्डनं ॥ ४३ ॥
लोभो धर्म्मक्रियालोपः कर्म्मणामप्रवर्त्तनं ।
सत्समागमविच्छित्तिरसद्भिः सह वर्त्तनं ॥ ४४ ॥
अर्थनाशक्रियावश्यं नित्यं वैरानुबन्धिता ।
सत्यप्यर्थे निराशत्वमसत्यपि च रागिता ॥ ४५ ॥
प्रतिक्षणं क्रोधहर्षौ सन्तापश्च प्रतिक्षणं ।
प्रतिक्षणञ्च सङ्क्लेशः साक्षिप्रश्नः प्रतिक्षणं ॥ ४६ ॥
स्नानादिगात्रसंस्कारपरिभोगेष्वनादरः ।
अव्यायामोऽङ्गदौर्बल्यं शास्त्रार्थाप्रत्यवेक्षणं ॥ ४७ ॥
गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनं ।
इत्यादींस्तत्र निपुणा द्यूतदोषान् प्रचक्षते ॥ ४८ ॥
पाण्डवो धर्म्मराजस्तु लोकपाल इवापरः ।
* द्यूतेन व्यसता विद्वान् कलत्राण्यपि हारितः ॥ ४९ ।

* द्यूतव्यसनसापन्नः कलत्राण्यपि हारितवान् इतीतरः ।

नलश्च राजा द्यूतेन हृते राज्यमहोदये ।
धर्म्मदारान् वने त्यक्त्वा परकर्म्माकरोत्प्रभुः ॥ ५० ॥
तुल्यो भुवीन्द्रतुल्यस्य यस्य नास्ति धनुर्द्धरः ।
स रुक्मी रुक्मतुल्याभो द्यूतदोषाद्गतः क्षयं ॥ ५१ ॥
राजा कौशिकरूपाणां दन्तवक्त्रोऽपि मन्दधीः ।
तीव्रद्यूतकृताद्दोषाद्दन्तभङ्गमवाप्नवान् ॥ ५२ ॥
द्यूतादनर्थसंरम्भो द्यूतात्स्नेहक्षयो महान् ।
पक्षाणां सहितानाञ्च द्यूताद्भेदः प्रवर्त्तते ॥ ५३ ॥
इति केवलदोषं हि द्यूतं राजा परित्यजेत् ।
समाह्वयं हि मेधावी दर्पिणां विनिवारयेत् ॥ ५४ ॥
कालातिपातः कार्य्याणां धर्म्मार्थपरिपीडनं ।
नित्याभ्यन्तरवर्त्तित्वात् साधु प्रकृतिकोपनं ॥ ५५ ॥
रहस्यभेदस्तत् पश्चादकार्य्येषु प्रवर्त्तनं ।
ईर्षामर्षस्तथा क्रोधोऽनुरोधः साहसं तथा ॥ ५६ ॥
इत्यादि च स्त्रीव्यसनं पूर्वं यच्च प्रकीर्त्तितं ।
तस्मात् स्त्रीव्यसनं राजा राज्यकामः परित्यजेत् ॥५७॥
स्त्रीमुखालोकनतया श्रयाणामल्पचेतसां ।
ईहितानि हि गच्छन्ति यौवनेन सह क्षयं ॥ ५८ ॥
गमनं विह्वलत्वञ्च सञ्ज्ञानाशो विवस्त्रता ।
असम्बन्धप्रलापित्वमकस्माद्व्यसनं मुहुः ॥ ५९ ॥
प्राणग्लानिः सुहृन्नाशः प्रज्ञाश्रुतिमतिभ्रमः ।

सद्भिर्वियोगोऽसद्भिश्च सङ्गोऽनर्थेन सङ्गमः ॥ ६० ॥
स्खलनं वेपथुस्तन्द्रा नितान्तस्त्रीनिषेवणं ।
इत्यादिपानव्यसनमत्यन्तं सद्भिगर्हितं ॥ ६१ ॥
श्रुतशीलबलोपेताः पानदोषेण भूयसा ।
क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥ ६२ ॥
योगीश्वरश्च भगवान् भार्गवो भृगुतुल्यधीः ।
शुक्रः पानमदात्तीव्राद्भुजे शिष्यमौरसं ॥ ६३ ॥
पानक्षिप्तो हि पुरुषो यत्र तत्र प्रवर्त्तते ।
यात्यसंव्यवहार्यत्वं यत्र तत्र प्रवर्त्तनात् ॥ ६४ ॥
कामं स्त्रियं निषेवेत पानं वा साधुमात्रया ।
न द्यूतमृगये विद्वानत्यन्तव्यसने हि ते ॥ ६५ ॥
तदपनयविधिज्ञैः श्रेयसां विघ्नकारि
व्यसनमिदमुदारं सप्त चैवोपदिष्टं ।
जनयति हि निसर्गादेकमप्याशु नाशं
किमु न भवति हन्तायोगपद्योदयेन ॥ ६६ ॥
घटयति परिभोगयाहितामिन्द्रियाणां
श्रुतमपि विनिहन्ति श्रेष्ठतां प्रेष्ठताञ्च ।
चलयति च विभूतिं भूयसीमप्यनीचै-
रपि विबुधमतीनां सप्तकोऽयं दुरन्तः ॥ ६७ ॥
अरिगणा नियतं व्यसने स्थितं
परिभवन्ति भवन्ति च दुश्छिदः ।

अपगतव्यसनाश्च बुधा रिपून्
परिभवन्ति भवन्ति च दुश्छिदः ॥ ६८ ॥
इति कामन्दकीये नीतिसारे सप्तव्यसनवर्गो
नाम चतुर्द्दशः सर्गः ॥ १४ ॥

पञ्चदशसर्गप्रारम्भः ॥

नानाप्रकारैर्व्यसनैर्विमुक्तः
शक्तित्रयेणाप्रतिमेन युक्तः ।
परं दुरन्तव्यसनोपपन्नं
यायान्नरेन्द्रो विजयाभिकाङ्क्षी ॥ १ ॥
प्रायेण सन्तो व्यसने रिपूणां
यातव्यमित्येव समादिशन्ति ।
तत्रैव पक्षो व्यसने हि नित्यं
क्षमस्तु सन्नभ्युदितोऽभियायात् ॥ २ ॥
यदा क्षमस्तु प्रशभं निहन्तुं
पराक्रमादूर्ज्जितमप्यमित्रं ।
तदा हि यायादहितानि कुर्व्वन्
परस्य वा कर्षणपीडनानि ॥ ३ ॥
सम्पन्नसस्यं विषयं परस्य
यायात्प्रमृग्यं विजयाय राजा ।
सस्योपघातेन परस्य वृत्ति-

च्छेदः स्वसैन्योपचयश्च साधु ॥ ४ ॥
विशुद्धपृष्ठः पुरतो विचिन्वन्
भयप्रदेशान् परकर्म्मवेदी ।
सुवीवधासारविशुद्धमार्गां
विशेद्धरित्रीं द्विषतोऽप्रमत्तः ॥ ५ ॥
समे प्रदेशे विषमे च भूमे-
र्निम्ने स्थले वा सुमुखेन यायात् ।
अनातुरः सन्नभयो हि विद्वान्
सन्नद्धगुल्मो विहितान्नपानः ॥ ६ ॥
ग्रीष्मे प्रभूताम्बुवनेन याया-
न्निर्वासनार्थं करिणां यथा तु ।
ऋतेऽम्भसो ग्रीष्मकृतात् प्रतापाद्
भवन्ति कुष्ठानि मतङ्गजानां ॥ ७ ॥
स्वस्थक्रियाणामपि कुञ्जराणा-
मुष्मा शरीरेष्वभिजाज्वलीति ।
आयासयोगेन हि सम्प्रवृद्धः
प्रसह्य हन्ति द्विरदान् प्रतापः ॥ ८ ॥
सर्व्वाणि सत्त्वानि खलूष्मकाले
विनाम्बुना यान्ति परामवस्थां ।
अन्धत्वमुष्णप्रवितप्तकायाः
प्रयान्ति सद्यः करिणोऽपिवश्यः ॥ ९ ॥

सुगन्धिदानच्युतिशीकरेषु
दन्ताभिघातस्फुरितोपलेषु ।
गजेषु नीलाभ्रसमप्रभेषु
राज्यं निबद्धं पृथिवीपतीनां ॥ १० ॥
सुकल्पितः संयुगदृष्टमार्गः
स्वधिष्ठितो वीरतमेन पुंसा ।
तुरङ्गमानां परिकल्पितानां-
मेको गजः षष्टिशतानि हन्ति ॥ ११ ॥
जले स्थले च द्रुमसङ्कटे च
साधारणे वा विषमे समेऽपि ।
प्राकारहर्म्यादिविदारणे च
ध्रुवं जया नागवतां बलानां ॥ १२ ॥
तस्माद्यतो भूरिजलस्तु पन्था
यातोऽन्नपानोपचितो विशङ्कः ।
तेनाभियायाञ्जनयन् प्रतापं
शनैः शनैरश्रमयन् बलानि ॥ १३ ॥
अभ्युन्नतानामणुरप्युदारं
पश्चात्प्रकोपं जनयेदरीणां ।
तच्चाप्रमत्तः प्रसमीक्ष्य याया-
न्न नाशयेद्दृष्टमदृष्टहेतोः ॥ १४ ॥
पश्चात्प्रकोपः पुरतः फलञ्च

पश्चात्प्रकोपश्च तयोर्गरीयान् ।
रन्ध्रं हि तद्विप्रकृता महत्त्वं
नयन्ति तस्मात्प्रसमीक्ष्य यायात् ॥ १५ ॥
पुरश्च पश्चाच्च यदा समर्थ-
स्तदाभियायान्महते फलाय ।
पुनः प्रसर्पन्नविशुद्धपृष्ठः
प्राप्नोति तीव्रं खलु पार्ष्णिभेदं ॥ १६ ॥
यास्यन् पुरो रक्ष्यमनेकवर्ग-
मनेकमुख्यञ्च बलं निदध्यात् ।
अनेकमुख्यस्य हि चैकमत्य-
मनेकमत्यं द्विषतामभेद्यं ॥ १७ ॥
अवश्ययातव्यतयोद्यतः सन्
पश्चात्प्रकोपाहितया न शङ्का ।
सेनापतिञ्चाप्यथ वा कुमारं
बलैकदेशेन पुरो निदध्यात् ॥ १८ ॥
अभ्यन्तराद्बाह्यकृताच्च दोषा-
दाभ्यन्तरस्त्वेव तयोर्गरीयान् ।
आदाय गच्छेद्बहिःप्रचारान्
बाह्यांश्च कृत्वा विहितानुकल्पान् ॥ १९ ॥
पुरोहितामात्यकुमारकुल्याः
सेनाभिगोप्तार इमे प्रधानाः ।

एषां हि मन्त्राद्यतमप्रकोप-
मन्तःप्रकोपं समुपादिशन्ति ॥ २० ॥
राष्ट्रान्तपालाटविकाभिसीम्नां
बालप्रकोपोऽन्यतमः प्रकोपः ।
उत्पद्यमानो निपुणप्रचारै-
स्तम्मन्त्रिभिः सम्यगुपाददीत ॥ २१ ॥
सामादिभिः संशमयेत् प्रकोपं
परस्परावग्रहभेदनैश्च ।
तथापि धीरः शमयेत् प्रकोपं
यथा भजेरन्न परान् प्रतप्ताः ॥ २२ ॥
मनुष्ययुग्यापचयक्षयो हि
हिरण्यधान्यापचयव्ययस्तु ।
तस्मादिमान्नैव विदग्धबुद्धिः
क्षयव्ययायासकरीमुपेयात् ॥ २३ ॥
अवश्यनिष्पत्तिमहाफलाढ्या-
मदीर्घसूत्रां परिणामकल्पां ।
कामं व्ययायासकरीमुपेया-
न्न त्वेव जातु क्षयदोषयुक्ताम् ॥ २४ ॥
वस्तुष्वशक्येषु समुद्यमश्चे-
च्छक्येषु मोहादसमुद्यमश्च ।
शक्येषु कालेन समुद्यमश्च

त्रिधैव कार्य्यव्यसनं वदन्ति ॥ २५ ॥
कामोऽक्षमादक्षिणतानुकम्पा
ह्रीः साध्वसं क्रौर्य्यमनार्य्यता च ।
दम्भोऽभिमानोऽप्यतिधार्म्मिकत्वं
दैन्यं स्वयूथस्य विमाननञ्च ॥ २६ ॥
द्रोहो भयं शत्रुदुपेक्षणञ्च
शीतोष्णवर्षाप्रसहिष्णुता च ।
एतानि काले समुपाहितानि
कुर्वन्त्यवश्यं खलु सिद्धिविघ्नं ॥ २७ ॥
निजोऽथ मैत्रश्च समाश्रितश्च
सम्बन्धजः कार्य्यसमुद्भवश्च ।
भूतो गृहीतो विविधोपचारैः
पक्षं बुधाः सप्तविधं वदन्ति ॥ २८ ॥
सदानुवृत्या* गुणकीर्त्तनेन
निन्दासहत्वेन च रन्ध्रगुप्त्या ।
तदर्थशौर्य्योद्यमसङ्कथाभिः
पक्षोऽनुरागी स हि वेदितव्यः ॥ २९ ॥
कुलीनमार्य्यं श्रुतवृद्धिनीतं
मानोन्नतं सभ्यमहार्य्यबुद्धिं ।
कृतज्ञतेजो†मतिसत्त्वयुक्तं

* समुच्छ्रयेति वा । † तेजो । बलं ।

सद्वृत्तपक्षं खलु तञ्च विद्यात् ॥ ३० ॥
उद्योगमेधाधृतिसत्वसत्य-
त्यागानुरागस्थितिगौरवाणि ।
जितेन्द्रियत्वं प्रसहिष्णुता ह्रीः
प्रागल्भ्यमित्यात्मगुणान् वदन्ति ॥ ३१ ॥
मन्त्रस्य शक्तिं सुनयोपचारं
सुकोषदण्डौ प्रभुशक्तिमाहुः ।
उत्साहशक्तिं बलवद्विचेष्टां
त्रिशक्तियुक्तो भवतीह जेता ॥ ३२ ॥
शौर्य्यं सुदाक्ष्यं व्यसनेष्वदैन्य-
मुत्साहसम्पत्स्वतिधीरता च ।
आत्यन्तिकी शास्त्रसमुद्भवा च
सांसर्गिकी धीः परिणामिनी च ॥ ३३ ॥
उत्साहसत्वाध्यवसायचेष्टा-
दार्ढ्यं च कर्म्मस्वतिपौरुषञ्च ।
अरोगता कर्म्मफलोपपत्ति-
र्दैवानुकूल्यं हि निराधिता च ॥ ३४ ॥
पक्षादिदानेन गृहीतकोषः
पक्षादिहीनं रिपुमभ्युपेयात् ।
इति प्रसर्पन् नियतं समुद्र-
प्रक्षालितां तां लभते धरित्रीं ॥ ३५ ॥

कालो गजानां सजलाभ्रजालो
यातुं तदन्यश्च तुरङ्गमानां ।
नात्युष्णवर्षोष्णतुषारयुतः
संपन्नशस्यस्त्विति कालसम्पत् ॥ ३६ ॥
रात्रावुलूको विनिहन्ति काकं
काकोऽप्युलूकं रजनीव्यपाये ।
इति स्म कालं प्रसमीक्ष्य यायात्
काले भवन्तीह समीहितानि ॥ ३७ ॥
श्वा नक्रमाकर्षति कूलसंस्थं
श्वानञ्च नक्रः सलिलाभ्युपेतं ।
व्यायच्छमानो ध्रुवमभ्युपैति
देशस्थितः कर्म्मबलोपभोगं ॥ ३८ ॥
समं तुरङ्गैर्विषमं च नागै-
स्तथा जलाढ्यं समहीधरं च ।
नागावृतं पक्षबलानुपेतै-
र्यथाबलञ्च प्रसमीक्ष्य मिश्रं ॥ ३९ ॥
मरुप्रगाढं पतति स्म तोये*
ग्रीष्मेऽप्यनूपादवनक्षदुर्गं ।
मिश्रञ्च संवीक्ष्य यथासुखञ्च
गच्छेन्नरेन्द्रो विजयाय देशं ॥ ४० ॥

* वर्षति पर्जन्ये।

न चातितोयं न च तोयहीनं
युक्तं च सम्यग्यवसेन्धनेन ।
उपेत्य मार्गं वहुतक्षयुक्तः
सुखप्रयाणैरिपुमभ्युपेयात् ॥ ४१ ॥
सुबोधधासारमुपेततोयं
विश्वासिभिः क्रान्तजलं* विशुद्धं ।
तन्मात्रमेव द्विषतामुपेया-
धस्मान्न कुर्यादपयानमार्तः ॥ ४२ ॥
ये दूरयात्रां† सहसा विशन्ति
मूढा रिपूणामविचार्य्य भूमिं ।
ते यान्ति तेषामचिरेण खड्ग-
धारापरिष्वङ्गमयत्नसाध्याः ॥ ४३ ॥
मार्गे च दुर्गे विनिविष्टसैन्यो
विधाय रक्षां विधिवद्विधिज्ञः ।
सन्नद्धपार्श्वस्थितवीरयोधः
सेवेत साध्वीं सुखयोगनिद्राम् ॥ ४४ ॥
भ्रमत्तुरङ्गद्विरदेन्द्रहेषां
घण्टास्वनासादितकर्णरन्ध्रः ।
यदन्तरा च प्रतियोधवृत्तां
के जायतीत्यादरमाद्रियेत ॥ ४५ ॥

---

* विश्वासितात्क्रान्तजलमिति वा ।    † दूरमार्गमिति भिन्नः ।

ततः प्रबुद्धः शुचिरिष्टदेवः
श्रीमद्भिभूपोऽञ्जलितः प्रहृष्टः ।
सेवेत मन्त्रिप्रवरैर्यथावत्
पुरोहितामात्यसुहृद्गणैश्च ॥ ४६ ॥
कर्त्तव्यतां तैः सह संविचार्य
यानं समास्थाय विचित्रयानः ।
कुलोद्गतैः शस्त्रिभिरिष्टतुल्यैः *
र्बहिर्निरीयात् परिवारितः सन् ॥ ४७ ॥
पश्येन्नृपो हस्तिरथाश्वचर्य्यां
सामूहिकं योधगणं पृथक् च ।
विवक्षितांश्च द्विरदेन्द्रमुख्यां-
स्तुरङ्गमांश्चापि विधानयुक्तान् ॥ ४८ ॥
सुखोपगम्यः स्मितपूर्वभाषी
प्रियं वदेद्वृत्त्यधिकं च दद्यात् ।
प्रियेण दानेन च सङ्गृहीता-
स्त्यजन्ति भर्त्तर्यपि जीवितानि ॥ ४९ ॥
रथाश्वनागकुञ्जरहानयोग्यो
नित्यक्रियः स्याद्धनुषि प्रगल्भः ।
सुमेधसां कर्म्मणि दुष्करेऽपि
नित्यक्रियाकौशलमादधाति ॥ ५० ॥

---

* पत्तिभिरात्मतुल्यैरित्यपरः ।

सन्नद्धमुच्चैर्द्विपमास्थितः सन्
सन्नद्धसैन्यानुगतोऽविकुर्वन् ।
सामन्तदूतेन हि साधुमन्त्रः
प्रवीरयोधान्तरितेन यायात् ॥ ५१ ॥
आलोकयेद्बुद्धिगुणोपपन्नै-
श्चरैश्च दान्तैश्च परापचारम् ।
एतैर्विमुक्तो भवति क्षितीन्द्रो
जनैरनेत्रैश्च समानधर्म्मा ॥ ५२ ॥
विलोभयन् किञ्चिदपि प्रयच्छन्
कुर्वीत मित्रं द्विषतो न पानम् ।
राष्ट्रादभीक्ष्णं द्विषतः प्रपण्यं
पण्यैर्हि तन्नालिकयाऽऽददीत ॥ ५३ ॥
उपक्रमं वाञ्छितमाशु कुर्य्यात्
दूतोपयानात् क्रियमाणसन्धिः ।
स वेद्विसन्धिर्न हि तत्र भेदः
कृतो भवत्यात्मसमुच्छ्रयश्च ॥ ५४ ॥
दौर्गान् पथिव्राटविकान्तपालान्
संश्लेषयेद्दानवता च साम्ना ।
विरुद्धदेशेषु हि तन्निरोधे
ते चाऽस्य मार्गोपदिशो भवन्ति ॥ ५५ ॥
अकारणादेव हि कारणाद्वा

य एव कश्चित्पुरुषोऽरिसेवी ।
निजश्च विश्लिष्ट उपेतशत्रु
आयाति यस्तस्य गतिं प्रपश्येत् ॥ ५६ ॥
आरिप्सुना मन्त्रबलान्वितेन
प्रागेव कार्य्यो निपुणं विचारः ।
दोष्णां बलान्मन्त्रबलं गरीयः
शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये ॥ ५७ ॥
मनीषया निर्मलया विलोकितं
फलाय कर्मोद्यममास्थितः परम् ।
अकालहीनं नयवित्समाचरेत्
फलं ह्यकाले नियतं व्युदस्यति ॥ ५८ ॥
प्रभावितानां श्रुतशौर्य्यशालिनां
यथावदालोकितमार्गचारिणाम् ।
निकामदेवी द्युतिरून्नतात्मनां
भुजङ्गदीर्घेषु भुजेषु लम्बते ॥ ५९ ॥
समुदितनरसम्पङ्कुरिसम्पन्नसस्ये
विगतशलिलपङ्के काल उद्युक्तवृत्तिः* ।
कुसुमितसहकारश्रोज्ज्वलत्कानने वा
नरपतिररिभूमिं साधु गच्छेज्जयाय ॥ ६० ॥
इति नरपतिराहितादरः सन्

* उद्भूतशक्तिरिति वा।

परमभियोनुमनाः समुत्पतेत् ।
इति हृतविषयोपसेवमानो
नियतमरातिरुपैति गोचरं स्वं ॥ ६१ ॥
इति कामन्दकीये नीतिसारे यात्राभियोगदर्शनं
नाम पञ्चदशः सर्गः ॥ १५ ॥

षोडशसर्गप्रारम्भः ।

यायाद्वैरिपुराभ्यासं भूभागे साधुसम्मते ।
स्कन्धावारनिवेशज्ञः स्कन्धावारं निवेशयेत् ॥ १ ॥
चतुरस्रं चतुर्द्वारं नातिविस्तारसङ्कटम् ।
महाप्रतोलीप्राकारं महापरिखया वृतं ॥ २ ॥
शृङ्गाटमर्द्धचन्द्रं वा मण्डलं दीर्घमेव च ।
भूमिप्रदेशसामर्थ्यादागारमुपकल्पयेत् ॥ ३ ॥
विविक्तैश्च विभक्तैश्च शृङ्गैरन्वितमायतैः ।
गुप्तकक्षं पटाकारैर्महामार्गसमावृतं ॥ ४ ॥
तस्य मध्ये मनोह्लादि महामौलबलावृतम् ।
अन्तःकोषगृहोपेतं कारयेद्राजमन्दिरं ॥ ५ ॥
मौलभृत्यं श्रेणिसुहृद्द्विषदाटविकं बलम् ।
राजहर्म्यं समाहृत्य क्रमेण विनिवेशयेत् ॥ ६ ॥
अन्ते चागणितान् क्रूरान् लुब्धकान् दुष्टकर्म्मिणः ।
पर्य्याप्तवेतनान् स्वाप्तान् मण्डलेन निवेशयेत् ॥ ७ ॥

हस्तिनो लब्धनामानस्तुरङ्गास्तु मनोजवाः ।
गृहोपकण्ठे नृपतेर्वसेयुः स्वाप्तरक्षिताः ॥ ८ ॥
यामवृत्या सुसन्नद्धं रात्रिन्दिवमुदायुधम् ।
अन्तर्वंशिकसैन्यञ्च तिष्ठेद्राजाऽभिगुप्तये ॥ ९ ॥
युद्धयोग्यो महादन्ती सन्नद्धः साध्वधिष्ठितः ।
तिष्ठेन्नरपतेर्द्वारि वेगवांश्च तुरङ्गमः ॥ १० ॥
सैन्यैकदेशः सन्नद्धः सेनापतिपुरःसरः ।
प्रपन्नवान् परिपतेन्मण्डलेन बहिर्निशि ॥ ११ ॥
परसैन्यप्रचारञ्च सन्नद्धाः शीघ्रपातिनः ।
वाताशूका विजानीयुर्दूरसीमान्तपातिनः ॥ १२ ॥
तोरणाबद्धमाल्येषु यन्त्रवत्सु पताकिषु ।
द्वारेषु परमां गुप्तिं कारयेदाप्तकारिभिः ॥ १३ ॥
निर्गच्छेच्च विशेच्चापि सर्व्व एवोपलक्षितः ।
तिष्ठेयुः परदूताश्च राजशासनगोचराः ॥ १४ ॥
वृथाकोलाहलाद्धास्याद् द्यूतात् पानाच्च वारितः ।
सज्जोपकरणस्तिष्ठेत् सर्व्वकार्य्योन्मुखो जनः ॥ १५ ॥
बहिःखातात् स्वसिद्धानां मुक्त्वा सञ्चारमायतम् ।
परसैन्यविनाशार्थं सर्व्वां भूमिं विनाशयेत् ॥ १६ ॥
क्वचित् कण्टकशाखाभिः क्वचित् कीलैरयोमुखैः ।
भूषयेत् परितो भूमिं प्रच्छन्नप्रदरैरपि ॥ १७ ॥
निर्वृक्षक्षुपपाषाणस्थाणुवल्मीकनिर्द्रवैः ।

कारयेत् कारणैश्चित्रैः सैन्यव्यायाममन्वहम् ॥ १८ ॥
यस्मिन्देशे यथाकामं सैन्यव्यायामभूमयः ।
परस्य विपरीतश्च स्मृतो देशः स उत्तमः ॥ १९ ॥
आत्मनश्च परेषां च तुल्या व्यायामभूमयः ।
सुमध्यमः स उद्दिष्टो देशः शास्त्रार्थचिन्तकैः ॥ २० ॥
अरातिसैन्यव्यायामसुपर्य्याप्तमहीतलः ।
आत्मनो विपरीतश्च यः स देशोऽधमः स्मृतः ॥ २१ ॥
नित्यमुत्तममाकांक्षेत्तदभावे तु मध्यमम् ।
अधमं बन्धनागारं नोपासेवेत सिद्धये ॥ २२ ॥
आक्रान्त इव केनापि रोगानीकैरनुद्रुतः ।
अकस्माद्दुद्रवद्द्वेषो राजनीहारसंवृतः ॥ २३ ॥
विधूतपरुषैर्वातैरकस्माच्च पतद्ध्वजाः ।
परस्परभवद्द्रोहो न तथा तूर्य्यनिस्वनः ॥ २४ ॥
उत्प्रेक्षितभयत्रासो निर्घातोल्काविभूषितः ।
उद्धूमः प्रज्वलच्छत्रो विदक्षिणशिवारुतः ॥ २५ ॥
मण्डलैः काकगृध्राणामाकीर्णो रूक्षवासिभिः ।
मुहुरत्युग्रतादीप्तः संसिक्तो रक्तवृष्टिभिः ॥ २६ ॥
परीतराजनक्षत्रः क्रूरैरौत्पातिकैर्ग्रहैः ।
सूर्य्येदृष्टकबन्धादिरकस्मान्मूढवाहनः ॥ २७ ॥
अकस्मान्मत्तमातङ्गप्रशुष्यद्दानशीकरः ।
इत्यादिविकृतोपेतः स्कन्धावारो न शस्यते ॥ २८ ॥

प्रहृष्टनरनारीकः प्रशस्तस्वनदुन्दुभिः ।
गम्भीरहेषितहयः शत्रुवृंहितकुञ्जरः * ॥ २९ ॥
पुण्याहब्रह्मघोषाढ्यो नृत्यगीतसमस्वनः ।
निर्भीतिर्वा महोत्साह आकाङ्क्षितजयोदयः ॥ ३० ॥
निरजस्कोऽतिवृष्टश्च प्रादक्षिण्यस्थितग्रहः ।
दिव्यान्तरीक्षैरुत्पातैः पार्थिवैश्चाप्यदूषितः ॥ ३१ ॥
नीचैः प्रवृत्तानुलोममारुतस्तुतमङ्गलः ।
हृष्टपुष्टबलः साधुः सुगन्धिज्वलितानलः ॥ ३२ ॥
अभयमाद्यन्मातङ्ग आसाराभ्युदयान्वितः ।
इत्यादिलक्षणोपेतः स्कन्धावारः प्रशस्यते ॥ ३३ ॥
शस्ते तस्मिन् द्विषो भङ्गो ज्ञेयोऽशस्ते विपर्य्ययः ।
निमित्तान्येव शंसन्ति शुभाशुभफलोदयम् ॥ ३४ ॥
तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत् ।
प्रशस्तेन निमित्तेन विशुद्धेनान्तरात्मना ॥ ३५ ॥
यत्नमारभ्यमाणं हि सिद्धिं याति समीहितं ।
सहायसम्पद्विज्ञानं सत्त्वं दैवानुकूलता ॥ ३६ ॥
उद्योगो व्यवसायश्च यस्यैते तस्य सिद्धयः ।
तन्मूलत्वात् प्रजानां तु राजा स्कन्ध इति स्मृतः ॥ ३७ ॥
आवारोऽमात्यदण्डादिर्वृत्तिरावार उच्यते ।
भूतानां भूतिनिष्पत्तेरावारेण महीयसा ॥ ३८ ॥

* घूर्णितोद्धृंहितद्विपः ।

आवृतस्तु यतः स्कन्धः स्कन्धावारस्ततः स्मृतः* ।
समवस्कन्दवासाम्बुवीवधासारनिग्रहाः ।
एते प्रयत्नतो रक्ष्याः स्कन्धावारस्य मृत्यवः ॥ ३९ ॥
इति प्रयत्नेन निवेशयेद्बलं
शुभाशुभं चास्य तदोपलक्षयेत् ।
परस्य चैतन्निपुणं विलोकयेत्
समारभेताशुभहीनदर्शने ॥ ४० ॥

इति कामन्दकीये नीतिसारे स्कन्धावारसन्निवेशो निमित्तज्ञानञ्च षोडशः सर्गः ॥ १६ ॥

सप्तदशसर्गप्रारम्भः ।

महाप्रज्ञानसम्पन्नः सत्वदेवोपवृंहितः ।
उद्योगाध्यवसायाभ्यामुपायान्निक्षिपेत् परे ॥ १ ॥
चतुरङ्गबलं मुक्त्वा कोषो मन्त्रश्च युध्यते ।
तत्साधुमन्त्रो मन्त्रेण कोषेण च जयेदरीन् ॥ २ ॥
साम दानञ्च दण्डश्च भेदश्चेति चतुष्टयम् ।
मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्त्तिताः ॥ ३ ॥
परस्परोपकाराणां कीर्त्तनं गुणकर्म्मसु† ।
सम्बन्धस्य समाख्यानमायत्याः सम्प्रकाशनम् ॥ ४ ॥
वाचा पेशलया साधु तवाहमिति चार्पणम् ।

---

* यतो व्यापरितः स्कन्धः स्कन्धावार इति स्मृत इति द्वितीयः पाठः ।
† दर्शनं गुणकीर्त्तनमिति च ।

इति सामप्रयोगज्ञैः साम पञ्चविधं स्मृतम् ॥ ५ ॥
यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः ।
प्रतिदानं तथा तस्य गृहीतस्यानुमोदनम् * ॥ ६ ॥
द्रव्यादानमपूर्वं च स्वयं ग्राहप्रवर्त्तनम् ।
देयस्य प्रतिमोक्षश्च दानं पञ्चविधं स्मृतं ॥ ७ ॥
स्नेहरागापनयनं संहर्षोत्पादनं तथा ।
सन्तर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥ ८ ॥
वधोऽर्थग्रहणं चैव परिक्लेशस्तथैव च ।
इति दण्डविधानज्ञैर्दण्डोऽपि त्रिविधः स्मृतः ॥ ९ ॥
प्रकाशश्चाप्रकाशश्च पूर्वो † द्विविध इष्यते ।
प्रकाशदण्डान् कुर्वीत लोकद्विष्टांस्तथा रिपून् ॥ १० ॥
यैरुद्विजेतेह लोको ये चैव नृपवल्लभाः ॥
बाधन्ते बधिकं ये च तेषूपांशु प्रवर्त्तते ‡ ॥ ११ ॥
विषेणोपनिषद्योगैः शस्त्रेणोद्वर्त्तनेन § वा ।
तथोपांशु नयेद्दण्डं यथान्यो न विभावयेत् ॥ १२ ॥
ब्राह्मणे जातिमात्रेऽपि धार्म्मिके चान्त्यजेऽपि हि ।
धर्म्मान्निनीषया ‖ विद्वान् न बधं दण्डमादिशेत् ॥ १३ ॥
उपेक्षया वा हलया येषूपांशु प्रशस्यते ।
उपेक्षां चापि निपुणः प्रत्यक्षं परिवर्जयेत् ॥ १४ ॥

---

* चानुवर्त्तनमिति वा । † दण्ड इति चान्यः । ‡ प्रशस्यते इति वा पाठः ।
§ उद्दकवर्षणेनेत्यर्थः । ‖ धर्म्मान्निनीषया इति चापरः ॥

प्रविशन्निव चेतांसि दृष्ट्वा साधु पिबन्निव ।
स्रवन्निवामृतं साम प्रयुञ्जीत प्रियं वचः ॥ १५ ॥
वागनुद्वेगजननी सामेति परिकीर्त्यते ।
सामाख्यं सुनृतं सत्यं प्रियं स्तोत्रं च कीर्त्यते ॥ १६ ॥
आत्मनो विषयमिव कुर्वन् दद्यात् समीहितम् ।
जलवत् पर्वताञ्छत्रून् भिन्द्यादनुपलक्षितः ॥ १७ ॥
क्षीराब्धिर्मथितः साम्ना फलायामरदानवैः ।
निजघ्निरे धार्त्तराष्ट्रान् सामप्रद्वेषिणोऽचिरात्॥ १८॥
दारुणं विग्रहं विद्वान् दानेन प्रशमं नयेत् ।
इन्द्रोपचारे शुक्रास्य दानेन सममीयिवान् ॥ १९ ॥
अपराधेन दुहितुः कुपिते भृगुनन्दने ।
वृषपर्वाप्रदानेन दानवेन्द्रोऽभवत् सुखी ॥ २० ॥
उपगम्यापि दातव्यं बलिने शान्तिमिच्छता ।
समूल एव गान्धार्य्यो अप्रयच्छन् गतः क्षयम् ॥ २१ ॥
किञ्चित् प्रयच्छन् भूयस्या तृष्णया परिलोभयन् ।
भिन्द्याच्चतुर्विधान् भेदान् प्रविश्योभयवेतनैः ॥ २२ ॥
अलब्धस्वपणो * लुब्धो मानी चाथावमानितः ।
क्रुद्धश्च कोपितो यस्मात् तथातीतोऽवभाषितः ॥ २३ ॥
यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान् ।
परपक्षे स्वपक्षे च यथावत् प्रशमं नयेत् ॥ २४ ॥

---

* अलब्धवेतन इति च ।

भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसाम् ।
तेषु भिन्नेषु भेदो हि युवराजे तथोर्जिते ॥ २५ ॥
अमात्यो युवराजश्च भुजावेतो महीपतेः ।
मन्त्री नेत्रं हि भिन्नेऽस्मिन्नेकस्मिन्नपि तद्विधः ॥ २६ ॥
सर्वावस्थं हि मेधावी तत्कुलीनं विकारयेत् ।
विकृतस्तु कुलीनस्तु स्वयोनिं ग्रसतेऽग्निवत् ॥ २७ ॥
तत्कुलीनेन तुल्यस्तु पुमानभ्यन्तरोषितः ।
तस्मादेतो परं भिन्द्यात्क्षमं चात्मनि सन्धयेत् ॥२८॥
तत्रोपजापः कर्तव्यो यः कोपानुग्रहक्षमः ।
स कल्याणः शठो वेति परीक्ष्यः सूक्ष्मया धिया ॥२९॥
कल्याणस्तु यथाशक्ति करोति सफलं वचः ।
शठः पक्षो चलयति द्वावथार्थोपलिप्सया ॥ ३० ॥
पूर्वसेनापतिर्नीचैः कालयापनमाश्रितः ।
मिथ्याभिशस्तः श्रीकाम आहूयाप्रतिमानितः॥३१॥
राजद्वेषी तत्कुलीनो दुष्यते यश्च भूभुजा ।
आहितव्यवसायश्च तथा करनिवेशितः ॥ ३२ ॥
रणप्रियः साहसिक आत्मसम्भावितस्तथा ।
विच्छिन्नधर्मकामार्थः क्रुद्धो मानी विमानितः ॥ ३३ ॥
भीतः स्वदोषाभित्रस्तः कृतवैरोऽभिशान्त्वतः ।
अतुल्येन सहाशक्तस्तुल्यमानो निराकृतः ॥ ३४ ॥
अकारणान्निरुद्धश्च कारणाच्च विशेषितः ।

अकारणात् परित्रस्तः पूजार्होऽप्रतिपूजितः ॥ ३५ ॥
हृतद्रव्यकलत्रश्च महाभोगाभिकाङ्क्षितः ।
परिक्षीणो वहिर्बन्धुर्वहिर्द्वियो वहिष्कृतः ॥ ३६ ॥
इति भेद्याः समाख्याता भिन्द्यादेतान् परस्थितान् ।
आगतान् पूजयेत् कामैर्निजांश्च परिसाधयेत् ॥ ३७ ॥
समतृष्णानुसन्धानं समन्युभयदर्शनम् ।
प्रधानं दानमानञ्च भेदोपायाः प्रकीर्त्तिताः ॥ ३८ ॥
भेदं कुर्वीत मतिमान् विगृहीतो बलीयसा ।
षण्डामर्कौ सुरैर्भित्वा बलवन्तो पराजितौ ॥ ३९ ॥
दण्डेन हि समाहन्याद्भित्वाऽरेः संहतं बलं ।
भिन्नं हि तत् काष्ठमिव तृणदग्धं विशीर्य्यते ॥ ४० ॥
उत्साहदेशकालैस्तु संयुक्तः सुसहायवान् ।
युधिष्ठिर इवात्यर्थं दण्डेनास्तन्नयेदरीन् ॥ ४१ ॥
आत्मनः शक्तिमुद्वीक्ष्य दण्डमभ्यधिकं नयेत् ।
एकाकी सत्वसम्पन्नो रामः क्षत्रं पुराऽवधीत् ॥ ४२ ॥
अलसं विक्रमे शास्त्रं विहितोपायचेष्टितम् ।
क्षयव्ययप्रसारैस्तु सत्वप्रं परिविदुतम् ॥ ४३ ॥
भीतं मूर्खं स्त्रियं बालं धार्म्मिकं दुर्जनं पशुम् ।
मैत्रीप्रधानं कल्याणबुद्धिं सान्त्वेन साधयेत् ॥ ४४ ॥
लुब्धं क्षीणञ्च दानेन सत्कृत्य वशमानयेत् ।
अन्योन्यशङ्कयोद्भिन्नान् दुष्टान् दण्डस्य कारणात् ॥ ४५ ॥

पुत्रान् भ्रातृंश्च वन्धूंश्च सामर्थ्येन च साधयेत् ।
एतैः कः सदृशो लोके दूरं रिपुकृतेरपि ॥ ४६ ॥
सामतेषु प्रयुञ्जीत दैवात् प्रस्खलितेष्वपि ।
दुष्करं यान्ति विकृतिस्पर्धाशीलनिवन्धनात् ॥४७॥
कुलं शीलं दया दानं धर्म्मः सत्यं कृतज्ञता ।
अद्रोह इति येष्वेतदार्य्यास्तान् प्रचक्षते ॥ ४८ ॥
पौरजानपदांश्चैव दण्डमुख्यश्च दण्डवित् ।
साधयेद्दानभेदाभ्यां दानभेदविचक्षणः ॥ ४९ ॥
अपराञ्जांस्तु सुस्निग्धान् स्नेहोत्तया मानदानतः ।
साधयेद्भेददण्डाभ्यां यथा योगेन चापरान् ॥ ५० ॥
देवताप्रतिमास्तम्भसुषिरान्तर्गतैर्नरैः ।
पुमान् स्त्रीवस्त्रसंवीतो निशि चाद्भुतदर्शनम् ॥ ५१ ॥
वेतालानां पिशाचानां देवानाञ्च सुरूपता ।
इत्यादिमाया विज्ञेया मानुषी मानुषेश्वरन् ॥ ५२ ॥
कामतो रूपधारित्वं शस्त्रास्त्राश्माम्बुवर्षणम् ।
तमोनिलीनता चैव इति माया च मानुषी ॥ ५३ ॥
जघान कीचकं भीम आश्रितः स्त्रीस्वरूपतां ।
चिरं प्रच्छन्नरूपोऽभूद्दिव्यया माययाऽनलः ॥ ५४ ॥
अन्याये व्यसने युद्धे प्रवृत्तस्यानिवारणम् ।
इत्युपेक्षार्थकुशलैरुपेक्षा त्रिविधा स्मृता ॥ ५५ ॥
अकार्य्ये सज्जमानस्तु विषयान्धीकृतेक्षणः ।

कीचकस्तु विराटेन हन्यतामित्युपेक्षितः ॥ ५६ ॥
ससङ्गं भीमसेनं वा स्वार्थविच्छेदभीतया ।
हिडिम्बया निजो भ्राता हन्यतामित्युपेक्षितः॥५७॥
मेघान्धकारवृष्ट्यग्निपर्वताद्भुतदर्शनम् ।
दूरस्थानाञ्च सैन्यानां दर्शनं ध्वजशालिनां ॥ ५८ ॥
छिन्नपाटितभिन्नानां संस्कृतानाञ्च दर्शनं ।
इतीन्द्रजालं द्विषतो भीत्यर्थमुपकल्पयेत् ॥ ५९ ॥
इत्युपायाः समाख्याता राज्ञो नानार्थसाधकाः ।
सामैतेषु हि सामज्ञो यथा कामं प्रयोजयेत् ॥ ६० ॥
सामभेदौ च कर्त्तव्यौ साधु दानपुरःसरौ ।
दानेन हि समायुक्तावेतावर्थस्य सिद्धये ॥ ६१ ॥
दानरिक्तेन सर्वत्र साम्ना कृत्यं भृशेन वा ।
निर्दानं साम नायाति कलत्रेष्वपि संस्थितिम् ॥६२॥
इत्याद्युपायान्निपुणं नयज्ञो
विनिक्षिपेच्छत्रुबले निजे वा ।
निरभ्युपायो नियतं प्रयाणं
विचेष्टमानोऽन्ध इवाभ्युपैति ॥ ६३ ॥
अवश्यमायान्ति वशं विपश्चिता-
मुपायसन्दर्शिबलेन सम्पदः ।
भवन्त्युदारा विधिवत् प्रयोज्यते
फलं हि राज्ञां क्वचिदर्थसिद्धये ॥ ६४ ॥

इति कामन्दकीये नीतिसारे उपायविकल्पो नाम सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशसर्गप्रारम्भः ।

सामादीनामुपायानां त्रयाणां विफले नये ।
विनयेन्नयसम्पन्नो दण्डं दण्ड्येषु दण्डवित् ॥ १ ॥
देवानभ्यर्च्य विप्रांश्च प्रशस्तग्रहतारकं ।
षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत् ॥ २ ॥
सत्कारादनुरागाच्च सह सङ्कटनाशनात् ।
नित्यं तद्भावभावित्वान् मौलं भूतबलाद्गुरु ॥ ३ ॥
मौलं भूतं श्रेणिसुहृद्द्विषदाटविकं बलम् ।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनस्तथा ॥ ४ ॥
वृत्तेश्च स्वाम्यधीनत्वाद्भृतं श्रेणीबलाद्गुरु ।
तुल्यसंहर्षणामर्षात् सिद्धलाभात्तथैव च ॥ ५ ॥
बलाज्ज्ञानपदत्वाच्च मैत्राच्छ्रेणीबलं गुरु ।
सज्ञातदेशकालत्वादेकार्थोपगमात्तथा ॥ ६ ॥
बलादभतयोग्याच्च शत्रोर्मित्रबलं गुरु ।
प्रकृत्याऽधार्म्मिका लुब्धा अनार्य्याः सत्यभेदिनः ॥ ७ ॥
तस्मादारण्यकतया तेभ्यः शत्रुबलं गुरु ।
उभयं तद्विलोपार्थं कालापेक्षाव्यवस्थितम् ॥ ८ ॥
विलोपव्यसने चैव तत्रास्य विजयो ध्रुवः ।

उपजापकृतात्तस्योत्थयादन्यां विशेषतः ॥ ९ ॥
परस्य वाप्युपजपेदुपजापाद्भवो जयः ।
स्फीतसारानुरक्तेन मौलेनोपचितः परः ॥ १० ॥
तत्तुल्येनैव यातव्यः क्षयव्ययसहिष्णुना ॥ ११ ॥
प्रकृष्टेऽध्वनि काले वा गच्छेन्मौलैः समावृतैः ।
मौलास्तु दीर्घकालत्वात् क्षयव्ययसहिष्णवः ॥ १२ ॥
एषु वस्तुषु मेधावी भृतादीनि विवर्जयेत् ।
दीर्घकालाध्वखिन्नेषु तेषु भेदभयं भवेत् ॥ १३ ॥
बहुत्वात् परसैन्यानां दीर्घकालाच्च खेदतः ।
नित्यप्रवासायासाभ्यां भेदोऽवश्यं हि जायते ॥ १४ ॥
प्रभूतं मे भृतबलं मौलमल्पमसारवत् ।
अरेरल्पं विरक्तं वा मौलं प्रायोऽल्पसारवत् ॥ १५ ॥
प्रायो मन्त्रेण योद्धव्यमल्पायासेन वै जयः ।
अन्यो देशस्तु कालो वा प्रभूतो वाक्षयव्ययो ॥ १६ ॥
आक्षेपजापाद्भिभूस्तं यस्मात् सैन्यं परस्य च ।
अल्पप्रसारो हन्तव्य इत्युपेक्ष्या भृतैर्बलैः ॥ १७ ॥
स्फीतं श्रेणि बलं शक्यमाधातुं पानवर्त्मनि ।
ह्रस्वप्रवासव्यायामादिति सैन्यं समुत्पतेत् ॥ १८ ॥
स्वप्रभूतं सुहृत्सैन्यं शक्यमाधातुमात्मनि ।
अल्पमेवाल्पयुद्धं च मन्त्रेणेति सुहृद्बलैः ॥ १९ ॥
मित्रसाधारणे कार्ये मित्रायत्ते फलोदये ।

अनुयाने च पाण्डित्ये मित्रेणेव सह व्रजेत् ॥ २० ॥
प्रभूतेनारिसैन्येन प्रेषयेन्महतो रिपून् ।
मूकरवधापेक्षी नयं वा वचनं नयेत् ॥ २१ ॥
अविचिन्तं कोपभयादभ्यासेन रिपोर्बलं ।
वासयेत् कर्षयेच्चैनं दुर्गकण्टकशोधनैः ॥ २२ ॥
नित्यमाटविकं सैन्यं दुर्गकण्टकशोधनैः ।
परदेशप्रवेशे च पुरा कुर्वीत पण्डितः ॥ २३ ॥
हतन्मौलादिषड्वर्गं चतुरङ्गबलं विदुः ।
षडङ्गमन्त्रकोषाभ्यां पदात्यश्वरथद्विपैः ॥ २४ ॥
इति षड्विधमेतद्धि यथा यागबलं बली ।
सुनिच्छिद्रं प्रतिव्यूह यायाज्ज्यायो बलं प्रति ॥ २५ ॥
योगमस्य विजानीयात् सर्वं मन्त्रादिना नृपः ।
कृताकृतप्रचारश्च सम्यक् सेनापतेस्तथा ॥ २६ ॥
कुलोद्गतं जानपदं मन्त्रज्ञं मन्त्रसम्मितं ।
दण्डनीतेः प्रयोक्तारमध्येतारश्च यत्नतः ॥ २७ ॥
सत्वशौर्य्यक्षमास्थैर्य्यमाधुर्य्यार्थगुणान्वितम् ।
प्रभावोत्साहसम्पन्नमाजीवमनुजीविनाम् ॥ २८ ॥
मित्रवन्तमुदारास्यं बहुस्वजनबान्धवम् ।
व्यावहारिकमक्षुद्रं पौरप्रकृतिसङ्गतम् ॥ २९ ॥
नित्याकारणवैराणामकर्तारमनाविलम् ।
श्रुतानुबन्धिकर्म्माणमल्पामित्रं बहुश्रुतम् ॥ ३० ॥

आरोग्यं व्यायतं शूरं त्यागिनं कालवेदिनं ।
कल्याणाकृतिसम्पन्नं स्वसम्भाव्यपराक्रमं ॥ ३१ ॥
गजाश्वरथचर्य्यासु शिक्षितं सुजितश्रमं ।
खड्गयुद्धनियुद्धेषु शीघ्रश्चङ्क्रमणक्षमं ॥ ३२ ॥
युद्धभूमिविभागज्ञं सिंहवद्गूढविक्रमं ।
अदीर्घसूत्रं निस्तन्द्रममर्षणमनुद्धतं ॥ ३३ ॥
हस्त्यश्वरथशस्त्राणां सम्यग् लक्षणवेदिनं ।
चरस्थिरविवेकज्ञं कृतज्ञमनुकल्पकं ॥ ३४ ॥
धर्म्मकर्म्मसमायोगं कुशलं कुशलानुगं ।
सर्व्वयुद्धक्रियोपेतं शक्तं तत् परिकर्म्मणि ॥ ३५ ॥
स्वभावचित्तज्ञतया युक्तमश्वनृदन्तिनां ।
तन्नाम्नाश्चापि वेत्तारं तद्विधानोपपादकं ॥ ३६ ॥
देशभाषास्वभावज्ञं लिपिज्ञं सुदृढस्मृतिं ।
निशाप्रचारकुशलं कुशलज्ञाननिश्चितं ॥ ३७ ॥
उदयास्तमयज्ञानं नक्षत्राणां ग्रहैः सह ।
दिग्देशमार्गविज्ञानसम्पन्नं तन्निषेवितं ॥ ३८ ॥
क्षुत्पिपासाश्रमत्रासशीतवातोष्णवृष्टिभिः ।
अनाहितभयग्लानिं* सत्पुंसा†मभयप्रदं ॥ ३९ ॥
भेत्तारं परसैन्यानां दुःसाध्या हितनिश्चयं ।
भयानाञ्च स्वसैन्यानां सम्यग्विष्टम्भलक्षणं ॥ ४० ॥

---

* भयत्राणमित्यन्यो वा ।    † भग्नानामिति वा ।

अवस्कन्दाभियोगाप्तारं भेत्तारं सैन्यकर्म्मणां ।
चरदूतप्रचारज्ञं* महारम्भफलोपगं ॥ ४१ ॥
शत्रून् संसिद्धिकर्म्माणं सिद्धिकर्म्मनिषेवितं ।
परापरेषु निर्विण्णं श्रीमद्राज्यार्थतत्परं ॥ ४२ ॥
इत्यादिलक्षणोपेतं कुर्व्वीत ध्वजिनीपतिं ।
ध्वजिनीञ्च सदोद्युक्तः सङ्गोपयेद्दिवानिशं ॥ ४३ ॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।
सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलैः ॥ ४४ ॥
नायकः पुरतो यायात् प्रवीरपृतनावृतः ।
मध्ये कलत्रं स्वामी च कोषः फल्गु महद्धनं ॥ ४५ ॥
पार्श्वयोरुभयोरश्वा वाजिनां पार्श्वयो रथाः ।
रथानां पार्श्वयोर्नागा नागानां चाटवी बलं ॥ ४६ ॥
पश्चात् सेनापतिः सर्व्वं पुरस्कृत्य कृती स्वयं ।
यायात्सन्नद्धसैन्यौघः खिन्नानाश्वासयञ्छनैः ॥ ४७ ॥
यायाद्व्यूहेन महता मकरेण पुरो भये ।
श्येनेनोभयपक्षेण सूच्या वा धीरवक्त्रया ॥ ४८ ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितं ।
सर्व्वतः सर्व्वतो भद्रं भयव्यूहं प्रकल्पयेत् ॥ ४९ ॥
कन्दराशैलगहननिम्नगावनसङ्कटे ।
दीर्घेऽध्वनि परिश्रान्तं क्षुत्पिपासाहिमक्लमं ॥ ५० ॥

* चरदूतप्रपञ्चज्ञमित्यन्यः ।

व्याधिदुर्भिक्षमरकैः पीडनं दस्युविद्रुतं ।
पङ्कपांशुजलक्लिन्नं व्यस्तं पुञ्जीकृतं पथि ॥ ५१ ॥
प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसंस्थितं ।
चौराग्निभयवित्रस्तं वृष्टिवातसमाहितं ॥ ५२ ॥
एवमादिषु जातेषु व्यसनेषु समाकुलं ।
स्वसैन्यं साधु रक्षेत परसैन्यञ्च घातयेत् ॥ ५३ ॥
विशिष्टो देशकालाभ्यां भिन्नारिप्रकृतिर्बली ।
कुर्य्यात् प्रकाशयुद्धञ्च कूटयुद्धं विपर्य्यये ॥ ५४ ॥
तेष्ववस्कन्दकालेषु परं हन्यात् समाकुलं ।
अभूमिष्ठं सभूमिष्ठो स्वभूमौ चोपजायते ॥ ५५ ॥
प्रकृतिप्रग्रहाहृष्टं स्पर्शैर्वनचरादिभिः ।
हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः ॥ ५६ ॥
पुरस्तु दर्शनं दत्वा तल्लक्ष्यकृतनिश्चयात् ।
हन्यात्पश्चात् सवीरेण बलेनोत्पत्य वेगिना ॥ ५७ ॥
पश्चाद्वा सङ्कुलीकृत्य हन्यात् सारेण पूर्ब्बतः ।
आभ्यां पार्श्वाभिघातौ तु व्याख्यातौ कूटयोधने ॥५८॥
पुरस्ताद्विषमे देशे * पश्चाद्धन्यात्तु वेगवान् ।
जितमित्येव विश्वस्तं हन्याच्छत्रुं व्यपाश्रयः ॥ ५९ ॥
स्कन्धावारपुरग्राममास्यमानं व्रजादिषु ।

---

* पुरस्ताद्दर्शनं दत्वेति वा ।

विलोभ्य तु परानीकमप्रमत्तोऽवनाशयेत् ॥ ६० ॥
फल्गुसैन्यप्रतिच्छन्नं कृत्वा वासारवड्लं ।
मर्दयन्तं तद्विलोपे श्रसेदुत्पत्य सिंहवत् ॥ ६१ ॥
मृगयासम्प्रयुक्तं वा हन्याच्छत्रुं ब्यपाश्रयः ।
अथवा गोग्रहाकृष्टा तल्लक्ष्यं मार्गबन्धनात् ॥ ६२ ॥
अवस्कन्दभयाद्रात्रौ प्रजागरकृतश्रमं ॥ ६३ ॥
अहसन्नाहतश्रान्तमपराह्णे विनाशयेत् ।
निशि विश्रम्भसंसुप्तं तत्सौप्तिकविधानवित् ॥ ६४ ॥
सपादकोषावरणैर्भागैः कुर्य्यात्तु सौप्तिकं ।
कोपादुग्रजवोपेतैर्नरैर्वा खड्गपाणिभिः ॥ ६५ ॥
प्रति सूर्य्यं महावातं हन्यात् सम्मीलितेक्षणं ।
इत्येवं कूटयुद्धेन हन्याच्छत्रुं लघूत्थितः ॥ ६६ ॥
नीहारस्तिमिरं गावः स्वभ्राद्रिवननिम्नगाः ।
वदन्ति शत्रुमित्यादि छत्रं सप्त प्रकीर्त्तितं ॥ ६७ ॥
साधुप्रवृत्तो व्यवसायवर्त्ती
यानप्रकारेण परन्निहन्यात् ।
चरैः समावेदिततत्प्रचारः
शङ्केत तेनैव ततोऽप्रमत्तः ॥ ६८ ॥
नियतमिति निहन्यात् कूटयुद्धेषु शत्रुं
न हि निरयति धर्म्मच्छद्मना शत्रुनाशः ।
अचकितमिव सुप्तं पाण्डवानामनीकं

निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान ॥ ६९ ॥

इति कामन्दकीये नीतिसारे सैन्यबलाबलं सेनापतिप्रचारः प्रयाणव्यसनरक्षणं कूटयुद्धविकल्पश्च अष्टादशः सर्गः ॥ १८ ॥

ऊनविंशसर्गप्रारम्भः ।

प्रयाणे पूर्व्वजापित्वं वनदुर्गप्रवेशनं ।
अकृतानाञ्च मार्गाणां तीर्थानाञ्च प्रवर्त्तनं ॥ १ ॥
तोयावतारसञ्चारावेकाङ्गविजयस्तथा ।
अभिन्नानामनीकानां भेदनं भिन्नसङ्ग्रहः ॥ २ ॥
विभीषिकाविघातश्च प्राकारद्वारभञ्जनं ।
कोषनीतिभयत्राणं हस्तिकर्म्म प्रचक्षते ॥ ३ ॥
वनदिङ्मार्गप्रचयो वीवधासाररक्षणं ।
अनुयानापसरणे शीघ्रं कार्य्योपपादनं ॥ ४ ॥
दीनानुसरणञ्चैव कोटीनां जघनस्य च ।
इत्यश्वकर्म्म पत्तेश्च सर्व्वदा शस्त्रधारणं ॥ ५ ॥
शोधनं कूपतीर्थानां मार्गाणां शिविरस्य च ।
यवसादि च यत्किञ्चिद्विज्ञेयं विश्वकर्म्मवत् ॥ ६ ॥
जातिस्थानं वयःस्थानं प्राणिनां मर्म्मवेगिता ।
तेजःशिल्पं शीघ्रगत्वं स्थैर्य्यं साधु विधेयिता ॥ ७ ॥
स्वयञ्जनाचारवतां पत्त्यश्वरथवाजिनां ।

इति लक्षणमेतेन युक्तान् कर्म्मसु योजयेत् ॥ ८ ॥
सस्थूणच्छिन्नवल्मीकवृक्षगुल्मापकण्टका ।
सापसारा पदातीनां भूर्नैव विषमा मता ॥ ९ ॥
अल्पवृक्षोपलाच्छिद्रालतिकाविदरा स्थिरा ।
निःशर्करा च निःपङ्का सापसारा च वाजिभूः ॥१०॥
निःस्थाणुसिकतापङ्का निर्वल्मीकोपलासना ।
केदारव्रततिश्वभ्रवृक्षगुल्मादिवर्जिता ॥ ११ ॥
निरुद्याना निर्दरणा खुरचङ्क्रमणक्षमा ।
सर्वप्रचारयोग्या च * रथभूः सम्प्रकीर्त्तिता ॥ १२ ॥
रथानां वाजिनां भूमिः स्थिरा सर्वत्र हस्तिनां ।
न हयस्थानभूरेषा न नागानां विदुर्बुधाः ॥ १३ ॥
मर्द्दनीयतरुच्छेद्यव्रततिः पङ्कवर्जिता ।
उर्वरा गम्यशैला च विषमा गजमेदिनी ॥ १४ ॥
जयार्थी नैव युध्येत मतिमानप्रतिग्रहः ।
युध्येतावश्यकत्वाद्वा तदातिबलवेष्टितः ॥ १५ ॥
गजेष्वारोपितः साधु शीघ्रयानैरधिष्ठितः ।
यत्र राजा तत्र कोषः कोषाधीना हि राजता ॥१६॥
प्रत्यये कर्मणि कृते श्लाघ्यमानः कृतादरः ।
योधेभ्यस्तु ततो दद्यात् को हि दातुर्न युध्यते ॥१७॥
दद्यात् प्रहृष्टो नियुतं वर्णानां राजघातिने ।

---

* स्थिरा पृथक्पदा चैवेति वा ।

तदङ्गिरसुतवधे सेनापतिवधे तथा ॥ १८ ॥
प्रवीराणां तु मुख्यस्य शतं शतगुणं वधे ॥ १९ ॥
तदर्धं कुञ्जरवधे प्रदानं स्यन्दनस्य च ।
सहस्रञ्च चापिवधे पतिमुख्यवधे स्मृतं ॥ २० ॥
गवां विंशतिकं सर्वं भोगद्वैगुण्यमेव च ।
गुण्यं हेम च कुप्यञ्च यो यज्जयति तस्य तत् ॥ २१ ॥
दद्याद्वस्त्वनुरूपं हि हृष्टो योधान्नराधिपः ।
पश्चात्तद्विधमुत्सर्पन् स्थापयेद्बलिनं युधि ॥ २२ ॥
त्रिगुणाश्वा रथगजौ योज्यौ पञ्चसु पञ्चसु ।
समान्तरश्च पुरुषस्तुरङ्गस्त्रिसमान्तरः ॥ २३ ॥
कुञ्जरः स्यन्दनश्चैव स्मृतौ पञ्चसमान्तरौ ।
सर्वनीतिविदामेतत्सम्मतं परिकीर्त्तितं ॥ २४ ॥
तथा च खलु युध्येरन् पत्यश्वरथदन्तिनः ।
यथा भवेदसम्बाधो व्यायामो विनिवर्त्तने ॥ २५ ॥
सङ्करेण च युद्धेरन् सङ्करः सङ्कुलावहः ।
महासङ्कुलयुद्धे तु संश्रयेरन्महाकुलान् ॥ २६ ॥
अवश्यं प्रतियोद्धारो भवेयुः पुरुषास्त्रयः ।
इति कल्पास्तु पञ्चाश्वा विधेयाः कुञ्जरस्य च ॥२७॥
पादशो भावयेदश्वपुरुषा दश पञ्च च ।
विधानमिति नागस्य कथितं स्यन्दनस्य च ॥ २८ ॥
तथानीकस्य रन्ध्रं तु पञ्चचापं प्रचक्षते ।

सर्वव्यूहविधानज्ञा युद्धकर्म्मसुकर्म्मणः ॥ २९ ॥
उरः कक्षे च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः ।
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते ॥ ३० ॥
उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः ।
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्जितः ॥ ३१ ॥
अभेद्याः कुलजा मेध्या लब्धलक्ष्याः प्रहारिणः ।
सेनाङ्गपतयः कार्य्या दृष्टयुद्धप्रतिक्रियाः ॥ ३२ ॥
प्रवीरपुरुषैरेतैस्तिष्ठेयुः परिवारिताः ।
अभेदेन च युद्धेरन् रक्षेयुश्च परस्परं ॥ ३३ ॥
फल्गु सैन्यस्य यत्किञ्चिन्मध्ये व्यूहस्य तद्भवेत् ।
युद्धवस्तु च यत्किञ्चित्प्रायस्तज्जघने भवेत् ॥ ३४ ॥
युद्धार्थं युद्धकुशलं चण्डानीकं प्रयोजयेत् ।
युद्धं हि नायकप्राणं हन्यते तदनायकं ॥ ३५ ॥
व्यूहोऽनुपृष्ठमचलः पत्यश्वरथदन्तिभिः ।
तथाप्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः ॥ ३६ ॥
मध्ये देशे हयानीकं रथानीकं तु कक्षयोः ।
पक्षयोश्च गजानीकं व्यूहोऽभेद्यं स्मृतः ॥ ३७ ॥
रथस्थाने हयान्दद्यात् पदातींश्च हयाश्रये ।
रथाभावे तु मतिमान्नागानेव प्रकल्पयेत् ॥ ३८ ॥
विभज्य प्रक्षिपेन्मध्ये पत्त्यश्वरथकुञ्जरान् ।
मध्ये कुर्वीत नागेन्द्रान् पत्त्यश्वरथवारितान् ॥ ३९ ॥



धनुः सूची च दण्डश्च शकटो मकरध्वजः ।
इत्यादयो महाव्यूहास्तदाकारान् प्रकल्पयेत् ॥ ४० ॥
यदि स्याद्दण्डबाहुल्यं तदा चापः प्रकीर्तितः ।
मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः ॥ ४१ ॥
कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्तिताः ।
यः स तं व्यूह मतिमान् काले स्थाने प्रकल्पयेत् ॥ ४२ ॥
तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगत्वाद्वृत्तिरेव च ।
प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः ॥ ४३ ॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसञ्जयौ ।

---

अधिकबलामात्मावपनादाक्षेपयात्साकारव्यूहानां तद्भेदानाञ्चोद्देश-मभिधातुमाह, मण्डल इति। मण्डलासंहतौ वक्ष्यमाणलक्षणौ भोगो दण्डश्चेतावपि वक्ष्यमाणलक्षणावेव एते चत्वारो मनीषिभिः प्रकृतिव्यूहा विकृतिरहिताः प्रकीर्त्तिताः। दण्डादिव्यूहानां स्वरूपमभिधातुमाह। तिर्य्यग्वृत्तिरिति। तिर्य्यग्वर्त्तनं यस्यासौ दण्डः, दण्डस्य वंशादिमस्य वा दक्षिणभागाऽवस्थितस्य आन्तस्य तिर्य्यग्वृत्तिर्भवति तादृशस्यैतद्दण्डव्यूहस्य भवति। तद्यथा। "प्रक्षः कक्षो नरस्य" "कक्षपक्षे भोगत्वाद्वृत्तिरेव च" भोग इति सर्पभोगाकारत्वात् सा च वृत्तिता दण्डस्य व्यूहस्य सर्पभोगस्यैवेत्यर्थः। तिर्य्यग्वृत्तिवर्त्तितोऽपि ऊर्द्धवृत्तिर्यो भोगो व्यूहः। मण्डलः सर्व्वतोवृत्तिरिति मण्डलाकारे सर्व्वतोमुखत्वात् सर्व्वतोमुख इति। तद्यथा। क. उ. क. संहताकारे व्यूहे पृथग्वृत्तिरसंहत इति उक्तानीकान्तरात् पृथग्वृत्तिरव्यवहित इत्यर्थः। ४१, ४२, ४३।

दण्डप्रकृतिभेदानां व्यूहानभिधातुमाह। प्रदर इत्यादिना। दण्डस्य प्रदरेत्यादयः सप्तदश भेदा भवन्ति अतिक्रान्ताद्यन्यतमप्रकारेण। स एव दण्डः पक्षाभ्यामतिक्रान्तस्य अतिक्रम्य गतः प्रदरो भवति। तस्याकारः उभयकक्षस्यपरानीकप्रदारणात्। "प्रतिक्रान्तः" पक्षाभ्यां प्रतिक्रमणं पश्चाद्गमनं दृढको भवति। तस्याकारः तद्यथा क. उ. क.॥

विशालविजयः सूची स्थूणाकर्णश्चमूमुखः ॥ ४४ ॥
सुखाख्यो वलयश्चैव दण्डभेदाः सुदुर्जयः ।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः ॥ ४५ ॥
अतिक्रान्तश्च पक्षाभ्यां त्रयोऽन्यस्तु विपर्य्ययः ।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्द्धगः ॥ ४६ ॥
द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः ।

---

अतिक्रान्तश्च पक्षाभ्यामिति कक्षपक्षाभ्यामित्यसह्योऽप्यूह्यः । तद्यथा असह्यायं ।

प. प.
क. उ. क.

त्रयोऽन्यस्तु इति व्यूहत्रितयस्य विपर्य्ययस्थापः । कक्षाभ्यां प्रतिक्रान्तत्वा-चापसंज्ञा चकारप्रतिपादनात् । तद्यथा

प. उ. प.
क. क.
प्र.

इदकविपर्य्ययोऽतिक्रान्तपक्षत्वात् ॥

असह्यविपर्य्ययः प्रतिष्ठः प्रतिक्रान्तपक्षत्वात् तदाकारः पक्षस्याप्रति-क्रान्त्या ॥ श्येनाकारत्वात् श्येनाख्यः । स्थूणापक्षः पक्षयोः स्थाने स्थूणा-व्यूहो यस्याऽसौ स्थूणापक्षः । तद्यथा विजयाख्योऽयं । धनुःपक्ष इति चापव्यूहः पक्षयोः स्थाने यस्य स धनुःपक्षः सञ्जयाख्योऽयं । द्विस्थूण इति द्विगुणितस्थूणो विशालविजयाख्योऽयं व्यूहः । दण्ड ऊर्द्धग इति ऊर्द्धगो दण्डः सूची भवति । तद्यथा ।

प
क
उ
क
प्र
उ

कर्णयोः स्थाने स्थूणाव्यूहो यस्याऽसौ स्थूणाकर्णः अतिक्रान्तपक्ष इति अयं चमूमुखो व्यूहः । अन्योऽस्य विपर्य्यय इति अस्य चमूमुखस्य

द्विचतुर्दण्ड इत्येवं ज्ञेया लक्षणतः क्रमात् ॥ ४७ ॥
गोमूत्रिकाऽहिसञ्चारी शकटो मकरस्तथा ।
भोगभेदाः समाख्यातास्तथा परिपतन्तकः ॥ ४८ ॥
दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः ।
मकरो यवकीर्णश्च शेषः कुञ्जरराजिभिः ॥ ४९ ॥
मण्डलव्यूहभेदौ च सर्व्वतोभद्रदुर्जयौ ।
गजानीको द्वितीयस्तु प्रथमः सर्व्वतोमुखः ॥ ५० ॥
अर्द्धचन्द्रक उद्धारो वज्रो भेदास्त्वसंहतेः ।

---

व्यूहस्य विपर्य्यय उत्तरस्यपतक्षाभ्यां प्रतिक्रान्तपक्षत्वात् सुखाख्यो व्यूहो भवति। तद्यथा |क. प. उ. क. प.|

द्विचतुर्द्दण्ड इति द्विगुणितदण्डो बलयो भवति। चतुर्गुणितदण्डो दुर्जयो भवति। तद्यथा |क. प. उ. क. प.| ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥
|प|

भोगभेदानामुद्देशमाह। गोमूत्रिकेत्यादि। गोमूत्रिका गवां मूत्रवद्रेखाकारो विद्यतेऽस्याः। अहेः सञ्चारस्तद्वाऽहिसारीत्यभिधीयते। अनयोः प्रयोगः। तद्यथा |क|उ|क|प|उ| ४८ ॥

दण्डेति। दण्डव्यूहः पक्षस्थाने यस्याऽसौ दण्डपक्षः। युगोरस्य इति उरस्य द्विगुणितं विधेयमित्यर्थः। अर्थात्पश्चात् कः कोऽनीकेविधेयः। तद्विपर्य्ययो मकर इति सर्व्वशकटसंस्थविपर्य्ययमुखो मकरः। तथा यवकीर्णः शेषः कुञ्जरराजिभिरिति परितः पताकाकारोऽयं व्यूहो मध्ये कुञ्जरराजिभिर्य्यवकीर्णो भवति मकर एवेति ॥ ४९ ॥

मण्डलव्यूहभेदाविति। मण्डलव्यूहभेदौ सर्व्वतोभद्रदुर्जयौ। तत्र प्रथमः सर्व्वतोमुखः अश्वानीकोऽयं दुर्जयः।

असंहतभेदानभिधातुमाह, अर्द्धचन्द्रक इति। अर्द्धचन्द्रकोऽर्द्धचन्द्राकृतिः। तद्यथा |क क|। उद्धारस्चतुःसैन्यः। तद्यथा पञ्चसैन्यस्तथा
|उ|

तथा कुक्कुटशृङ्गी * च काकपादी च गोधिका ॥ ५१ ॥
त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ।
इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः ॥ ५२ ॥
एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा ।
तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः ॥ ५३ ॥
असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा ।
व्यूहज्ञैस्तु प्रयोज्याः स्युर्युद्धकाल उपस्थिते ॥ ५४ ॥
पक्षादीनामनीकेन हत्वा शेषं परिक्षिपेत् ।
तरसा च समाहत्य कोटिभ्यां परिवेष्टयन् ॥ ५५ ॥
परकोटिमुपक्रम्य पक्षाभ्यामप्रतिग्रहः ।
कोटिभ्यां जघने हन्यादुरसा च प्रपीडयेत् ॥ ५६ ॥
एवं व्यूहप्रयत्नेन यत्नवानवनीपतिः ।
विदारयेद्व्यूहजातं बलेश्च द्विषताम्बलम् ॥ ५७ ॥
यतः फल्गु यतोऽभिन्नं यतो दुष्टेरधिष्ठितम् ।
ततो रिपुबलं हन्यादात्मानं चापि बृंहयेत् ॥ ५८ ॥
अरिं द्विगुणसारेण फल्गुसारेण पीडयेत् ।
संहतं च गजानीकैः प्रचण्डैरेव वारयेत् ॥ ५९ ॥

---

कर्कटाख्यस्तथा काकपादिका तथा गोधिका इत्यादयो व्यूहास्त्वाकार-भेदेन ज्ञेयाः । कर्कटशृङ्गाद्याकारसदृशरचिततत्तत्सैन्यव्यूहानां कर्कट-शृङ्गादीनि नामधेयानि भवन्तीति फलितार्थः ५१-।५२-।

---

* कर्कटशृङ्गीति वा पाठः ।

दुर्जयान् करिणः सिंहवसासिक्तैर्महागजैः ।
आहन्यात् करिणां वाथ समूहैः साध्वधिष्ठितैः॥६०॥
संलोहजालैर्दृढबद्धदन्तैः
सुकल्पितैरूर्जितपादरक्षैः ।
प्रवीरयोधैर्मददुर्निवारै-
र्हन्याद्गजेन्द्रैर्द्विषतामनीकम् ॥ ६१ ॥
एकोऽपि वारणपतिर्द्विषतामनीकं
यत्नान्निहन्ति मदसत्त्वगुणोपपन्नः ।
नागेषु हि क्षितिभुजां विजयो निबद्ध-
स्तस्माद्गजाधिकबलो नृपतिः सदा स्यात् ॥ ६२ ॥

इति कामन्दकीये नीतिसारे गजाश्वपत्तिकर्म्मणि पदातिरथहस्तिभूमयो यानकल्पना व्यूहकल्पना प्रकाशयुद्धञ्च ऊनविंशतितमः सर्गः ॥ १९ ॥

समाप्तश्चायं कामन्दकीयनीतिसारः ॥

---

ॐ तत्सत्।



# कामन्दकीयनीतिसारटीका* ।

## प्रथमः सर्गः ।



'प्रभावात्' प्रभुशक्तेः। कोशदण्डफलं हि प्रभुशक्तिः। 'शाश्वते पथि' स्वर्गमोक्षगामिनि नित्ये मार्गे। दीव्यतीति दिव् क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिष्विति धातूक्तसमस्तगुणसम्पन्नत्वात् 'देवः' महीपतिरेव। 'जयति' बाह्याभ्यन्तरानरीन् जयतीत्यर्थः। 'श्रीमान्' शास्त्रप्रज्ञायात्मसम्पत्तिसम्पन्नः। वधः क्लेशोऽर्थस्य हरणञ्च दण्डस्तं दण्ड्येषु धारयतीति 'दण्डधारः' ॥ १ ॥

कामन्दकिरधिकृतदेवतास्तुत्यनन्तरं श्लोकपञ्चकेन स्वगुरोरपि नमस्कारं विदधाति। वंशे इति। विशालवंशे भवा विशालवंश्यास्तेषां 'विशालवंश्यानां'। विशालता हि वंशस्य प्रजाप्राचुर्य्यात् गुणातिशययोगाच्च। गुणातिशयस्तु उदितोदितत्वं, तद्विपरीतोऽस्तमितास्तमितत्वं। यत्र वंशे ऊर्द्धतनानामधस्तनानाञ्च पुरुषाणां वेदविद्यातदनुष्ठानसम्पन्नता स उदितोदितः, यस्तु तद्विहीनः सोऽस्तमितास्तमितः। 'भूयसां' गुणैर्महतां। 'ऋषीणामिवाप्रतिग्राहकाणां', यथा ऋषयोऽप्रतिग्राहका निर्द्वन्द्वत्वात् तथैते वंश्या गार्हस्थ्यधर्म्ममनुपालयन्तोऽप्यप्रतिग्राहकाः, कुटलत्वात्। कुटो घटस्तं धान्यपूर्णं लान्ति संगृह्णन्ति इति कुटलाः कुम्भीधान्या इति प्रसिद्धिः। अतएव तेषां कुटलानामपत्यं कौटल्यो विष्णुगुप्तो नाम तद्वंशे यः प्रसिद्धो बभूवेति ॥ २ ॥

* उपाध्यायनिरपेक्षायाः प्राचीनटीकाया उपयोगिभागमात्रमत्र गृहीतम्।

'जातवेदा इव इति । 'जातवेदा इवार्चिश्मान्' अग्निरिव ब्रह्मतेजः-पुञ्जशाली, 'सुचतुरः' प्रज्ञातिशयाधारचातुर्य्यसम्पन्नः । 'वेदविदां' वेदपरमार्थविदां मध्ये 'वरः' श्रेष्ठः । स्पष्टमन्यत् ॥ ३ ॥

न केवल वेदविदुक्तः कर्म्मणामपि अनुष्ठाता फलभोक्ता चेतद्दर्शयितुमाह । यस्येति । 'अभिचारवज्रेण' आभिमुख्येन साध्यं प्रति साधकप्रयुक्तानां मन्त्राणां मारणाद्यर्थं चारो गमनं अभिचारः स एव वज्रेन । 'यस्य' गुरोः, 'वज्रज्वलनतेजसः' वैद्युताग्नितेजसः सम्बन्धिना । वज्राग्निर्यथा प्रतिपक्षभूतैर्जलैर्नोपशाम्यति तद्वत् कौटल्यकोपाग्निरपि नन्दादिभिः । *'पपातामूलतः' इति मूलं बन्धादिमूलबलं तदारभ्य । 'नन्दः' इति नवनवतिकोटीश्वरः कश्चित् पृथिवीपतिः, अतएव 'श्रीमान्', स एव पर्वतः । 'सुपर्वा' इति पर्वशब्देन स्वामित्वमलक्षिता । 'आमूलतः' इति अमुनकत्यामाय ॥ ४ ॥

तस्य सुचतुरत्वमुक्तन्तत् समर्थयन्नाह । एकाकीति । 'एकाकी' शरीरमात्रपरिच्छदः । 'मन्त्रशक्त्या' प्रज्ञातिशयचातुर्य्येण । 'शक्त्या' उत्साहशक्त्या । 'शक्तिधरोपमः' कार्त्तिकेयतुल्यः । 'आजहार' आहृतवान् । नैर्यंकुलप्रसूताय 'नृचन्द्राय चन्द्रगुप्ताय' इति चतुर्थी तादर्थ्ये ॥ ५ ॥

शुक्राचार्यसमीक्षतीयमात्मगुरुं प्रख्यापयितुं तस्य च दण्डनीतिविषये प्रयोक्तृत्वमपि प्रतिपादयितुमाह । 'नीतिशास्त्रामृतं' इति । प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ देशकालानुकूल्ये सति यथासाध्यमुपायसाधनलक्षणा क्रिया नीतिस्तदर्थे शास्त्रं, कौटल्य-भाष्यमित्यर्थः, तदेवामृतं । सुतरां तदभ्यासात् नरदेवत्वमाप्यत इत्यर्थः । 'श्रीमान्'† शाह्या श्रिया युक्तः । अर्थान्त इति अर्थाः धर्म्मार्थकामास्तत्प्रतिपादकं धर्म्मशास्त्रमर्थशास्त्रं प्राजापत्यं । तथा चोक्तं कामसूत्रेऽस्मदुरुणा, 'प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिबन्धनं त्रिवर्गस्य शासनमध्यायानां शतसहस्रेणाग्रे प्रोवाच, तस्यैकदेशं स्वायम्भुवो मनु-

* पपात मूलत इति मु॰ । † धीमानिति मु॰ ।

धर्म्माधिकारिकं पृथक् चकार, दण्डसनिर्य्यधिकारिकमिति'। तत्र षष्ठाध्यायत्रतीयांशेन कोटिग्रन्थविस्तृतं सम्भाव्यत एवार्थशास्त्रं, तदेव गाम्भीर्य्यात् महाप्रमाणत्वाच्च महोदधिरिव तस्मात्, 'य उद्दध्रे'* य उद्धृतवान् 'तस्मै विष्णुगुप्ताय वेधसे नमः' स्पष्टं ॥ ६ ॥

नमस्कारानन्तरं महाकाव्यकल्पनीतिसारस्य सम्बन्धाभिधेयप्रयोजनान्यभिधातुं श्लोकद्वयमाह ॥ दर्शनात्तस्येति। 'तस्य' परमगुरोः विष्णुगुप्तस्य 'दर्शनात्' शास्त्रात्, 'यत्' ज्ञानदृष्ट्या दृष्टं तदेवोपदेच्यामि इति ग्रभिधेयसङ्कृतिः, महासम्बन्धश्चायं गुरुपर्य्यक्रमागतः। तथा चोक्तं-

"ब्रह्माऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजं।
तन्नारदेन शक्रेण गुरुणा भार्गवेण च ॥
भारद्वाजविशालाक्षभीष्मपाराशरैस्तथा।
संक्षिप्तं मनुना चैव तथा चान्यैर्महर्षिभिः ॥
प्रजानामायुषो ह्रासं विज्ञाय च महात्मना।
संक्षिप्तं विष्णुगुप्तेन नृपाणामर्थसिद्धये" ॥ इति।

ब्रह्माद्याचार्य्यप्रणीतसंग्रहत्वादस्मत्प्रणीतप्रबन्धोऽपि प्रमाणमिति भावः। 'सुदृशः' सुदृष्टेः निर्मलज्ञानस्य। 'विद्यानां आन्वीक्षिकीत्रयीवार्त्तादण्डनीतीनां, 'पारदृश्वनः' पारं दृष्टवान् इति पारदृश्वा तस्य। 'राजविद्याप्रियतया', प्रियस्य भावः प्रियता, राजविद्यासु दण्डनीत्यादिकासु प्रियतया हेतुभूतया। राजविद्याभिर्भूमीश्वरं युतान्च रक्षादिभिर्जगतामुपकाराय मुख्यं भवत्विति प्रयोजनं। 'संक्षिप्तग्रन्थमर्थवत्' संक्षिप्तः उपसंहृत 'एव ग्रन्थो यस्य तत् संक्षिप्तग्रन्थं, अर्थतस्तु तावानेव विद्यते यस्य तदर्थवत्। अतएव सामर्थ्यान्नीतिसारमिदमेव ॥

'उपार्जने' इति। उपार्जनं लाभः, स च त्रिविधः मानवो भूतसंघो मित्रञ्चेति। 'पालनं' रक्षणं, तत् द्विविधं स्वेभ्यः परेभ्यश्च। 'प्रति' उद्दिश्य। 'किञ्चित्' स्वल्पं। 'राजविद्याविदाम्' बार्हस्पत्यौशनसादीनां, 'मतं'

* ममुद्दध्रे इति मु०।

अभिमतं विग्रहप्रदर्शनादेवोपदेक्ष्यामः। दृश्यते 'हि राजविद्याविन्मतादभितं विग्रहप्रदर्शनं कौटल्यभाष्ये॥ ७॥ ८॥

अधुना राजवृत्तमभिधीयते। राजाऽस्येति। 'राजा' विजिगीषुः। 'अस्य' चातुर्वर्ण्याश्रमलक्षणस्य जगतः। 'हेतुः' कारणं। 'वृद्धेः' अभ्युदयस्य। विद्यातदनुष्ठानवृद्धानामपि इति 'वृद्धाभिसम्मतः' स्पष्टमन्यत्॥ ९॥

अन्वयेन जगतो हेतुत्वमभिधाय व्यतिरेकेणाप्यभिधातुमाह। 'यदि न स्यात्' इति। यदि नरपतिर्न स्यात् तदा प्रजा विनश्येतेति सम्बन्धः। 'सम्यक्' शास्त्रस्थित्या। 'नेता' नायकः प्रजायाः, न्यायेन मार्गेण प्रजा भवति कर्णधारो नावमिव। 'ततः प्रजा' इति तदनन्तरमेव प्रजा चातुर्वर्ण्याश्रमलक्षणो लोकः॥ १०॥

प्रजापार्थिवयोः परस्परोपकारित्वं दर्शयितुमाह। धार्मिकमिति। प्रजा प्रजापतिमिव धार्मिकं पालनपरं परपुरञ्जयं राजानं सम्यक् अभिमन्येत॥ ११॥

*प्रजां संरक्षतीति*। 'पृथिवीपतिः' 'प्रजां' चातुर्वर्ण्यं 'संरक्षति' सम्यक् पालयति दण्डादण्डनात्। 'सा' प्रजा, पृथिवीश्वरं 'वर्धयति' वृद्धिं नयति धान्यहिरण्यादिभिः। वर्द्धनादुत्तमलक्षणात् रक्षणं कण्टकेभ्यः पालनं 'श्रेयः' श्रेयस्करं,* 'तन्नाशे' रक्षणाभावे, 'अन्यत्' वर्द्धनं 'सदपि' विद्यमानमपि 'असत्' अशोभनं, निरयहेतुत्वात्॥ १२॥

*प्रजां संरक्षति नृप इत्युक्तं, स किमनुष्ठानलक्षणरक्षणमलन्दर्शयितु*-माह। न्यायेति। नीतिशास्त्रोक्तमनुष्ठानं न्यायः तस्मिन् प्रवृत्तः 'न्यायप्रवृत्तः' महीपतिरात्मानं 'त्रिवर्गेण' धर्मार्थकामलक्षणेन 'उपसन्धत्ते' संयोजयति प्रथमं, तदनन्तरं प्रजास्त्रिवर्गेणोपसन्धत्ते इति समुच्चयः। 'अन्यथा' तदप्रवृत्तो 'ध्रुवं' निश्चयेन आत्मानं निहन्ति, अनन्तरं मात्स्य-'न्यायेन प्रजाश्च। तस्मान्न्यायवृत्तेन राज्ञा भवितव्यमिति भावः॥ १३॥

---

* तदभावे सदप्यसदिति मु०।

एतदेव दृष्टान्तभूताभ्यामितिहासकथाभ्यां प्रदर्शयन्नाह। धर्मादिति। 'धर्मात्' शास्त्रोक्तात् हेतुभूतात् *वैजवनः 'चिराय' चिरकालं 'मर्ह्वीं बुभुजे' इति। अत्र कथा। 'सगरान्वये इन्द्रसेनो नाम राजा रजस्वलया स्वदेव्या संगत इति राक्षसेन यतुमारब्ध उक्तश्चैवं तेन त्वं यदि सर्वाः प्रजा धर्मे नियोजयसि तदा भक्षयामि इत्युक्तः प्राणभयात् तथैवानुष्ठितवानित्यधर्मादचिरेण क्षयं गतः सः। तदनन्तरं तद्वंश्या अपि राक्षसवचनात् अधर्मादचिरेणैव विनाशं प्राप्ताः। ततस्तस्मिन्नतावेव वैजवनो बभूव, तेन राक्षसवचनमनादृत्य भयं त्यक्त्वा सर्वाः प्रजा धर्मे नियोजिताः, स्वयमपि च धर्मपरो बभूव। अतः शास्त्रविहितानुष्ठानात् वैजवनो राजा चिरकालं पृथिवीं बुभुजे' इति। अनेन न्यायप्रवृत्तेः फलं दर्शितं भवति। अधर्माच्चैव नहुषाख्य ऐन्द्रमदस्थोऽपि शचीमभिलषन् यानवाहिनाऽगस्त्येन शप्तः सर्पीभूतः सशरीर एव रसातलं नरकं प्रपेदे॥ १४॥

एवं चान्यायवृत्तेः फलं प्रदर्श्य अमुष्येयपक्षं दर्शयितुमाह। तस्मादिति। यस्माद्धर्माधर्मफलमेवं 'तस्मात्' 'धर्मं' न्यायं 'पुरस्कृत्य' प्रधानं कृत्वा, 'अर्थाय' भूम्यादिविभवाय, 'पार्थिवो विजिगीषुः', 'यतेत' प्रयत्नं कुर्यात्। तत्र हेतुः धर्मशीलादिः। राज्यार्जनेन किं फलमिति चेत्? तस्य 'स्वाङ्ग' मिदं फलं 'श्रियो' विभूतयः॥ १५॥

तस्य राज्यस्य स्वरूपमभिधातुमाह। स्वाम्यमात्येति। 'स्वामी' प्रेयाङ्गानाममात्यादीनामीश्वरः प्रायभूतः।'अमात्याः' मन्त्र्यादयः।'राष्ट्रं' जनपदः।'दुर्गं' दुःखेन गम्यत इति पर्वतादि।'कोषः' कुष्यतेऽर्थिभिराश्रियते इति। 'बलं' हस्त्यश्वरथपत्तिस्वरूपं चतुरङ्गं। 'सुहृत्' मित्रं। एतावदित्येतावत्संख्याकं राज्यमभिधीयते। शुश्रूषाद्यष्टगुणा प्रज्ञा 'बुद्धिः'। 'सत्त्वं' प्रारब्धनिर्वहणाख्यं। सत्त्वञ्च बुद्धिश्च सत्त्वबुद्धी, ते यथाश्रयो बलाधायकोऽवष्टम्भो यस्य राजस्य तत्तथोक्तं॥ १६॥

---

* 'वै यवनः' इति मु०।

धर्मं पुरस्कृत्य चार्थो यत्नेनोपार्ज्यं तच्च कथमिति तदभिधातुमाह। आलम्ब्येति। 'आलम्ब्य' अवष्टभ्य। 'बलवत्' अदुर्बलं। 'सत्त्वं' उत्साहलक्षणं। 'बुद्ध्या' उत्साहलक्षणया प्रज्ञया। आलोकितो निर्णीतो निर्गमो निर्वाहो येन राज्ञा स तथोक्तः। 'अस्य' अनन्तरोक्तस्य सप्ताङ्गस्य राज्यस्य, 'लाभाय' प्राप्तये 'यतेत' यत्नं कुर्यात्। 'सततोत्थितः' सर्वदोद्यमयुक्तः॥ १७॥

एतदनुष्ठानं चतुर्विधमित्येतद्दर्शयितुमाह। न्यायेनेति। 'न्यायेन' शास्त्रोक्तेन। 'अर्जनं' अलब्धलाभादिकं। 'अर्थस्य' भूम्यादेः। 'रक्षणं' पालनं। 'वर्द्धनं' लब्धस्योपचयः। 'तथा' तेनैव प्रकारेण। 'सत्पात्रप्रतिपत्तिश्च' पात्राण्यत्र त्रिविधानि, धर्मपात्राणि, अर्थपात्राणि, कामपात्राणि च, तेषां सत्त्वमुत्तमत्वं; यदुद्दिश्य प्रतिपद्यते विनियुज्यते इति। तत्र सदनुष्ठाना ब्राह्मणास्तपस्विनश्च। अर्थपात्राणि मन्त्रिपुरोहितादयः। कामपात्राणि कमनीयाः स्त्रियः। तेषु प्रतिपादनार्थमेव राजवृत्तं विजिगीष्वनुष्ठानं चतुर्विधं भवति॥ १८॥

चतुर्विधेऽपि राजवृत्ते चाद्यं अर्थार्जनाख्यमनुष्ठानमभिधातुमाह। नयविक्रमेति। नयो नीतिशास्त्रपरिज्ञानं, विक्रमः शौर्य्यं, ताभ्यां सम्पन्नः, विक्रमे सत्यपि नयहीनोऽभिसन्धीयते। नये सत्यपि विक्रमहीनः परैरभिभूयते। ततश्च नयविक्रमाभ्यां सम्पन्नेन भवितव्यमिति। 'उत्थानः' शोभनमुत्थानमुद्योगो यस्य स तथोक्तः। शोभनत्वं चोत्थानमारम्भोपायः। पुरुषद्रव्यसम्पदायव्ययोकारानुकूलदेशकालकार्यादिनिर्णयं कृत्वा उत्थानं कार्यमिति भावः। 'चिन्तयेत्' श्रियमिति। श्रीर्हि श्रीहेतुत्वात् सप्ताङ्गं राज्यं, तदुपार्जनार्थं चिन्तां कुर्यादित्यर्थः। 'नयस्य' नीतिशास्त्रपरिज्ञानस्य, 'विनयः' स्वाभाविकेन्द्रियजयो 'मूलं' कारणं। नहि स्वाभाविकेन्द्रियजयरहितेन शास्त्रं ज्ञातुं शक्यते विषयाक्षिप्तचित्तत्वात्। विनयोऽत्र नयस्य कारणभूतः शास्त्रनिर्णयः॥ १९॥

विनय इति। यो हि इन्द्रियजयः स कार्यभूतो 'विनयः'॥ २०॥

आत्मसम्पदं श्लोकद्वयेन दर्शयितुमाह । शास्त्रमित्यादि । 'शास्त्रं' इदमेव नीतिप्रवर्त्तकं । 'प्रज्ञा' ध्यन्गुणा बुद्धिः । 'धृतिः' सन्तुष्टचित्तता । 'दाक्ष्यं' कुशलता । 'प्रागल्भ्यं' अभीरुता । 'धारयिष्णुता' अवधारणशीलता । 'उत्साहः' शौर्यामर्षशीघ्रकारितेति गुणत्रययुक्तः । 'वाग्मिता' वाक्कौशलशालिता । दृढ़स्य भावो 'दार्ढ्यं' यत् प्रतिज्ञाते तस्यापरित्यागः । 'आपत्क्लेशसहिष्णुता' दैवात् समुत्पन्नानामापदां शीतोष्णक्षुत्पिपासादीनां क्लेशानाञ्च सहनशीलत्वं ॥

प्रभाव इति । 'प्रभावः' गुणविशेषः, येनाकोशदक्षोऽपि सदानिव दृश्यते विपद्भिर्नाभिभूयते चेति । 'शुचिता', परदारद्रव्यहिंसारहितता । 'मैत्री' सर्वसत्त्वेषु मित्रभावना । 'त्यागः', अर्थानां सत्पात्रप्रतिपादनं । 'सत्यं' अमृषावादः । 'कृतज्ञता' कृतमुपकारं प्रत्युपचिकीर्षया जानातीति कृतज्ञस्तस्य भावः । 'कुलं' शुद्धोभयपक्षता । 'शीलं' विशुद्धभावः । 'दमश्च' इति उपशमः । चकारोऽनुक्तानां सङ्ख्यानां समुच्चयार्थः । एते गुणा आत्मसम्पदो हेतवः ॥ २१ ॥ २२ ॥

राज्ञो विनयाभ्यासप्रकारं दर्शयितुमाह । आत्मानमिति । 'राजा' महीपतिः, 'प्रथमं' सर्वादौ, 'आत्मानं' 'विनयेनोपपादयेत्' इन्द्रियजयसम्पन्नं कुर्यादित्यर्थः । "राजा यच्छीलः प्रकृतयस्तच्छीला भवन्ति" इति कौटल्यः । ततो मन्त्र्यादीन्, ततो भृत्यान्, ततः पुत्रान् । अतः प्रजा जितेन्द्रियाः कर्त्तव्याः ॥ २३ ॥

विनयोपपादनफलमाह । सदेति । 'सदा' पूर्वोक्तगुणैरनुरक्ताः प्रकृतयो यस्य सः । स्पष्टमन्यत् ॥ २४ ॥

इन्द्रियाणां दुर्जयत्वं दर्शयितुमाह । प्रकीर्णेति । शब्दस्पर्शादयो विषयास्तेषां प्रकीर्णता बहुव्यापित्वं । प्रकीर्णविषया एव मनोरमत्वादरण्यं तत्र 'धावन्तं' 'विप्रमाथिनं' रिरंसया विशेषेण प्रमथ्नातीत्येवंशीलं, 'इन्द्रियदन्तिनं' 'ज्ञानाङ्कुशेन वश्यं कुर्वीत' इति स्पष्टं ॥ २५ ॥

तदेव दर्शयितुमाह । आत्मेति । 'आत्मा' यन्त्रवाहकः । प्रयत्नेनात्म-

गुणेन। श्चर्थेभ्यो विषयेभ्यः। 'मनः' वक्ष्यमाणलक्षणमधिरोहति। प्रयत्न-प्रेरितयोः 'आत्ममनसोः' 'संयोगात्' हेतोः 'प्रवृत्तिः' गतिर्विषयं प्रत्युपजायते ॥ २६ ॥

प्रवृत्तेः कारणमभिधातुमाह। 'विषयामिषलोभेन' इति। विषय एवामिषमभिलषणीयं भक्ष्यं तल्लोभेन तदभिलाषेण, 'मनः' कर्तृ 'इन्द्रियं' विषयामिषं प्रति 'प्रेरयति'। अतः 'प्रयत्नेन तन्नियन्थात्' इत्यादिकं स्पष्टं ॥ २७ ॥

यद्यपि आत्ममनःसंयोगात् प्रवृत्तिस्तथापि मन एव प्रधानं, व्यवहारार्थन्तस्य स्तत्पर्यायांश्च दर्शयितुमाह। विज्ञानमिति। विविधज्ञानोत्पत्तिनिमित्तत्वान्मनो 'विज्ञानं' उपचर्य्यते। अन्तर्हितत्वात् 'हृदयं'। चेतनाधारत्वात् 'चित्तं'। मननात् 'मनः'। बोधाधारत्वात् 'बुद्धिः'। तदेतत् संज्ञामञ्चकं समं तुल्यार्थं बोध्यं। 'अनेन' मनसा। आत्माऽधिष्ठितः। 'करोति' विदधाति। 'इह' शरीरे। 'प्रवर्त्तननिवर्त्तने' कर्त्तव्याकर्त्तव्यकरणाकरणे ॥ २८ ॥

एतादृशमनःप्रवृत्तौ प्रमाणमनुमानमेवेति दर्शयितुमाह। धर्माधर्माविति। 'धर्मः' प्रवृत्तिनिवृत्तिलक्षणः स्वर्गापवर्गफलः। 'अधर्मः' तद्विपरीतः। 'सुखं' शोभनानि खानि बुद्धीन्द्रियाणि परितुष्टानि येन तत् सुखं। तद्विपरीतं 'दुःखं'। 'इच्छा' कामः। तद्विपरीतो 'द्वेषः'। 'तथैव' तेनैव प्रकारेण। 'प्रयत्नः' येन धृतं शरीरमवतिष्ठते। 'ज्ञानं' पदार्थस्वरूपावबोधः। 'संस्कारः' जन्मान्तरीणकर्माभ्यासवासनाविशेषः। एते गुणा आत्मनोऽस्तित्वे लिङ्गमिति आचार्य्यैरुपदिष्टं। धूमेनाग्निवदेभिरात्मास्तित्वं प्रतीयत इति ॥ २९ ॥

मनसोऽस्तित्वे लिङ्गमभिधातुमाह। ज्ञानस्येति। 'ज्ञानस्यायुगपद्भावः' पञ्चानामपि श्रोत्रादीनां बुद्धीन्द्रियाणां, शब्दादिषु इन्द्रियार्थेषु सर्वव्यापित्वात् आत्मनो युगपत् समकालमेव ज्ञानोत्पत्तौ प्राप्तायां भिन्नकालेषु या ज्ञानोत्पत्तिः सा मनसोऽस्तित्वे लिङ्गं भवतीति अस्ति

मनःसंज्ञकं यत् किञ्चिद्द्रव्येन्द्रियं, येनात्मनि समवेतेन सकलपदार्थानां ज्ञानातिक्रमात् अनुभूयते, तदभावे युगपत् ज्ञानोत्पत्तिर्न च दृश्यते, तस्मादस्ति मन इति। 'नानार्थेषु च सङ्कल्पः' नानाभूतेषु पृथग्भूतेषु सुखदुःखोत्पादकपदार्थेषु सङ्कल्पः, 'तस्य* कर्म प्रकीर्त्तितं' आचार्यैरिति शेषः॥ ३०॥

आत्ममनसोः स्वरूपमभिधाय इन्द्रियाणां इन्द्रियार्थानाञ्च तदभिधातुमाह। श्रोत्रमिति। शब्द इति च। स्पष्टं॥ ३१॥ ३२॥

आत्ममनोबुद्धिकर्मेन्द्रियाणां लक्षणमभिधाय बुद्धेरन्तःपरिकल्पनया कारणविभागमभिधातुमाह। आत्मा मनश्चेति। अभिहितेन लक्षणेनेति प्रतिपाद्यते यया विद्यया साऽन्वयविद्या, सा विद्यते येषां ते तद्विदाः कणादाक्षपादादयः तैः 'तद्विदैः', 'आत्मा मनश्च', अन्तःकरणमुच्यते। 'आभ्यां' आत्ममनोभ्यां, प्रयत्नसहिताभ्यां 'सङ्कल्पः' प्रवृत्तिः, इन्द्रियप्रवर्त्तनं, 'उपजायते'॥ ३३॥

बहिःकरणमभिधातुमाह। आत्मा बुद्धीति। 'आत्मा' उक्तलक्षणः। 'बुद्धिः' मनः। 'इन्द्रियाणि' वाक्प्रभृतीनि। 'अर्थाः' शब्दादयः। कर्मेन्द्रियाणां हि उत्सर्गादिका अर्थाः प्रयोजनानि। एतत् सर्वं 'बहिःकरणं'। 'सङ्कल्पः' सम्यग्भूतार्थकल्पनं, 'अध्यवसायः' प्रयत्नविशेषः, ताभ्यां 'अस्य' आत्मनः, सुखानुभवलक्षणा 'सिद्धिः', 'प्रकीर्त्तिता'॥३४॥

तदेवं अन्तःकरणप्रवृत्तिः प्रयत्नादेव बहिःकरणप्रवृत्तिरपि अध्यवसायलक्षणात् प्रयत्नादेवेति दर्शितं भवति, एतदेव समर्थयन्नाह। उभे एते हीति। 'उभे एते' अनन्तरोक्ते, 'हि' स्फुटं, 'करणे' अन्तर्बहिःकरणसंज्ञके, 'यत्नानन्तर्यके' प्रयत्नानन्तरं वर्त्तेते, प्रयत्नप्रेरणादित्यर्थः। तस्मादिति। यस्मादेवं 'तस्मात्', 'प्रवृत्तिसंरोधात्' उभयात्मकस्य प्रयत्नस्यैव संरोधं कृत्वा, 'निर्मनस्कतां भावयेत्' निर्मनस्कभावं अभ्यस्येत्। यावत् प्रयत्न एव निरुद्धो भवति तावदात्मा मनसा न युज्यते, ततश्च

* तस्येत्यस्य स्थाने चास्येति मु॰।

T

विद्यमानमपि मनो नास्त्येव मनःकार्याकरणात्। अन्तःकरणविक्षेपात् प्रवृत्तिर्नोपपद्यते। एवमन्तःकरणप्रवृत्त्यभावात् बहिःकरणप्रवृत्तेरप्यभावः। तदभावात् इन्द्रियाणां विषयैः सम्बन्ध एव न स्यात् इति भावः॥ ३५॥

एवमिति। 'एवं' उक्तन्यायेन, करणयोरुभयोरपि सन्निरोधात् निरुद्धचेष्टं 'आत्मानं', 'आत्मना', एव च नान्येन सता 'संयम्य', नयो नीतिशास्त्रं अपनयस्तद्विपरीतः तौ जानातीति 'नयापनयवित्', 'राजा' महीपतिः, 'आत्मनः', 'हितं' नयानुष्ठानमेव, 'कुर्वीत'॥ ३६॥

करणसंरोधः कर्तुं न शक्यते चेदभिमतफलमपि न प्राप्यते इत्येतद्दर्शयितुमाह। *यत् पृथिव्या इति। स्पष्टं॥ ३६ क्रोड़ः॥

एकस्यापि न पर्य्याप्तमित्येतद्दर्शयितुमाह। †एकस्यापि न यः शक्त इति। 'एकस्यापि' असहायस्य, 'मनसः', 'सन्निवर्हणे' जयकरणे, 'यः' 'न शक्तः' समर्थो न भवति, 'स कथं', बहुजेतव्यां 'महीं', ससागरां 'जेष्यति', न कथमपीत्यर्थः॥ ३७॥

अनिगृहीतमनसः परिणामं दर्शयितुमाह। क्रियेति। 'आपद्वादिभिः' आपातरम्यः, 'अवसानविरसैः' परिणामरसहीनैः, स्पर्शादिभिः 'विषयैः', 'आच्छिन्नहृदयः', 'करीव' हस्तीव, 'ग्रहं' बन्धं, 'गच्छति'॥३८॥

स एवोग्रभयदामापदमाप्नोत्येवेति दर्शयितुमाह। सज्जमान इति। 'सज्जमानः' आसक्तिं गच्छन्। 'अकार्येषु' परस्त्रीगमनादिषु। 'विषयान्धीकृतेक्षणः' विषयैः स्पर्शादिभिरन्धीकृते ईक्षणे शास्त्रमये धर्ममये च यस्य स तथोक्तः। 'आवहति' सम्पादयति। 'उग्रभयदां' भीषणभयदायिनीं। 'स्वयं' आत्मनैव। 'आपदं' विपदं॥ ३९॥

---

* यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां त्यजेत्॥ ३६ क्रोड़ः॥
एष श्लोको मु॰ पु॰ नास्ति।
† एकस्यैव हि योऽशक्त इति मु॰।

भूयोऽपि विषयाणां वैधर्म्यं दर्शयितुमाह । शब्द इति । स्पष्टं ॥ ४० ॥

श्रुतिविषयेऽभदोषमाह । शुचीति । विदूरं व्यवधानं तत्क्रमणं लङ्घनं तत्क्षमः 'विदूरक्रमणक्षमः' । 'मृगयते' अन्वेषयति । अन्यत् स्पष्टं ॥ ४१ ॥

स्पर्शदोषमाह । गिरीन्द्रेति । महाकायो महाबलो हस्ती 'करिणी स्पर्शसंमोहात्', 'आलानं' बन्धनं, 'याति' प्राप्नोति ॥ ४२ ॥

रूपाख्यविषयेऽपि दोषं दर्शयितुमाह । स्निग्धेति । 'पतन्' आत्मानं निक्षिपन् । अन्यत् स्पष्टं ॥ ४३ ॥

रसेऽपि दोषं तथैव दर्शयन्नाह । दूरेऽपीति । दर्शनस्य व्यवधाने वर्तमाने दुरवगाहजलदुर्गे 'चरन्', मत्स्यः समांसं वडिशं 'आस्वादयति', विनाशायेत्यर्थः ॥ ४४ ॥

गन्धेऽपि दोषमभिधातुमाह । गन्धलुब्ध इति । 'असुखसञ्चारां' अतिक्लेशेन सञ्चरणं यस्याम् । 'गजकर्णझल्लरीं' अनुकरणशब्दविशेषां । दन्तिनः कर्णगतिर्झल्लरीत्युच्यते । अन्यत् स्पष्टं ॥ ४५ ॥

प्रागुक्तमुपसंहरन्नाह । एकैकश इति । 'एकैकशः' प्रत्येकमपि । 'विनिघ्नन्ति' विनाशयन्ति । 'विषयाः' स्पर्शादयः । 'विषसन्निभाः' विषतुल्याः, मारणात्मकत्वात् । 'यः' पृथिवीपतिः । 'समं' समासेन आयत्तैव । 'पञ्च' विषयान्, 'सेवते' नष्टो भवति ॥ ४६ ॥

एवं सर्वथा विषयसेवानिषेधे प्राप्ते अयं नियम इति दर्शयन्नाह । सेवेतेति । 'सेवेत' उपभुञ्जीत । 'काले' तत्सेवावसरे । धर्मार्थाविरोधेन कामं सेवेत निःसुखो न स्यादिति कौटिल्योक्तेः । अन्यत् स्पष्टं ॥ ॥ ४७ ॥

विषयसेवातत्परत्वे दोषं दर्शयन्नाह । निकाममिति । 'निकामं' अत्यर्थं । 'सक्तमनसां' संश्लिष्टचित्तानां । 'गलन्ति' च्यवन्ते । 'गलिताश्रूणां' च्युतनयनजलानां । 'यौवनेन सह' युवभावेन समं । 'श्रियः' विभूतयः । एतदुक्तं भवति, यावत् कान्तामुखविलोकनासक्तमना

भवति तावद् योगाभावात् अरिभिरपहृते राज्ये कान्तया सर्वकान्तस्थितयाप्युभिः सह स्त्रीभिर्युतं यौवनं गलतीत्यर्थः ॥ ४८ ॥

विषयेऽसक्तौ दोषाभावं त्रिवर्गस्य च कार्यकारणभावं दर्शयितुमाह। धर्मादिति। 'धर्मात्' शास्त्रोक्तलक्षणात् विधिनिषेधरूपात् कारणभूतात्, 'अर्थः' भूमिहिरण्यादिरूपकार्यभूतः भवति। 'अर्थात् कामः', लभ्यते। 'कामात्', 'सुखफलोदयः'। 'यः' कामः, 'युक्त्या' शास्त्रोक्तसेवाकालमात्रया, 'न *निषेव्यते' नानुष्ठीयते, स '†तौ' इतरौ धर्मार्थौ, 'हत्वा' 'आत्मनं' अपि 'हन्ति'। तथया धर्मातिसेवायामर्थः क्षीयते, अर्थक्षयात् कामाभावः अर्थमूलत्वात् कामस्य, अर्थाभावात् शरीरदहनं, धर्मं चिकीर्षुः शरीरं क्षीणं करोति, ततः शरीरे विनष्टे धर्मोऽपि विनश्यति। एवमर्थोऽपि अतिसेवितोऽर्थमूलं धर्मं न करोति कामञ्च। ततश्चाप्युपचितोऽर्थः चौरराजादिभिरपह्रीयते। तथा कामोऽपि अतिसेवितो धर्मार्थानुष्ठानमुपरमात् तौ विनाश्य शुक्रक्षयात् क्षयव्याधिना शरीरमपि विनाशयति ॥ ४९ ॥

विषयाणामतिमनोहरत्वमिन्द्रियाणाञ्च दुर्जयत्वं दर्शयन्नाह। नामापीति। 'विलासोल्लसितभ्रुवः' विलासेन विभ्रमेण उल्लसिते भ्रुवौ यया तस्याः। स्पष्टमन्यत् ॥ ५० ॥

एतदेवापरं वाक्यं वीतरागाणामदर्शनादित्याशङ्क्याह। रहःप्रचारेति। रहःप्रचारः उपगूहनचुम्बनाधरदंशादिपरिकल्पितः, तत्र कुशलाऽतिप्रवीणा 'रहःप्रचारकुशला'। मृदु अकठोरं गद्गदं मन्थरं भाषितुं शीलं यस्याः सा। 'कं' नाम शरीरिणं। 'न रमयति' न रमयाक्रीडासक्तं करोति अपि तु सर्वमपि करोत्येव। रक्तान्तत्वं लोचनयोर्लक्षणं रम्यता चेति ॥ ५१ ॥

एतत् दृढयितुमाह। मुनेरपीति। 'मुनेरपि' मुमुक्षोरपि सद्यः,

---

* निषेव्यत इति मु०।

† तानित्यस्य स्थाने तानिति मु०।

'मनः' चेतः, 'सरागं' साभिलाषं, जितेन्द्रियत्वेऽपि 'अवशं' अवशीभूतं कृत्वा, अथवा अवशं निश्चयेन सरागं कुरुते 'अङ्गना'। का किमिव 'सन्ध्या शशिमण्डलमिव'। अतः कं नारी न रमयतीति स्थितं ॥ ५२ ॥

एतदेवाचेतनेष्वपि दर्शयितुमाह। मन इति। सर्वेषां 'मनः' चित्तं, 'प्रह्लादयन्तीभिः', आनन्दहेतुत्वात् आपां स्त्रीणां च। *मन्दयन्तीभिः गाम्भीर्यादपां, स्तनजघनभारवत्त्वात् स्त्रीणामपि, 'अलं' अत्यर्थं, 'महान्तोऽपि' गुणैरभिन्नाः। 'अचला इवाद्रिः' 'भिद्यन्ते' अन्तः प्रविश्य भूमिसात्क्रियन्ते स्त्रीभिरित्यर्थः ॥ ५३ ॥

न केवलं स्त्रीविषयाऽऽसक्तिस्त्वाख्या सा च विनाशाय भवति तज्जन्यं मृगयादिव्यसनत्रयमपीति दर्शयन्नाह। मृगयेति। स्त्रीसेवाया बलहानिकरत्वात् मांसाभिलाषे मृगयाव्यसनं। स्त्रीभिः सह पानगोष्ठ्यां पानव्यसनं। ताभिरेव विनोदार्थं अक्षक्रीड़ाव्यसनं। त्रयमिति कामजोऽयं त्रिवर्गः। स्पष्टमन्यत् ॥ ५४ ॥

यथा कामोऽतिप्रसक्तो विनाशहेतुत्वादरिः, एवं क्रोधादयोऽपीत्यरिषड्वर्गमभिधातुमाह। काम इति। 'कामः' तल्लक्षणलक्षणं, "स्पर्शविशेषविषया ह्याभिमानिकसुखानुविद्धा, फलवती अर्थप्रतीतिः" इति। 'क्रोधः' अविमृश्यकारितया प्राणिद्रोहबुद्धिः। 'लोभः' वित्तेष्वतिलोलुपता। 'हर्षः' कारणं विना प्राणिहिंसाजनितः परितोषः। 'मानः' माननीयेष्ववमानबुद्धिः। 'मदः' बलावलेपजनित उत्सर्ग इत्ययं षड्वर्गः। उत्तरार्द्धं स्पष्टं ॥ ५५ ॥

अरिषड्वर्गपरिपालनदोषं श्लोकद्वयेन दर्शयन्नाह। †दाण्डक्य इति। दण्डकविषयाधिपतिः 'दाण्डक्यः' दण्डदण्डनामा भूपतिः। स च मृगयागतो भृगोः कन्यामकामां धर्षयन् भृगोः शापात् पांसुवृष्टिभिः सबन्धुर्विननाश। 'क्रोधाच्च जनमेजयः' अश्वमेधकर्मणि शिष्टलघीकृतां

---

* मदयन्तीभिरिति मु०।

† दण्डक इति म०।

पत्नीं दृष्ट्वा, ऋत्विग्भिरेवं कृतमिति तेषु विक्रान्तः, तैः शापेनाभिहतः। 'लोभात्' चातुर्वर्ण्यं सर्वस्वापहरणैरतिपीड़यन् प्रजाभिरैकैकलोष्ट-निक्षेपविधिना 'ऐलः' इलागर्भे बुधजातः पुरूरवाः अभिहतः। 'वातापिर्हर्षतोऽसुरः' इति, वातापील्वलसंज्ञकौ कामरूपिणौ महाऽसुरौ छलछलकवेशौ महर्षीन् आमन्त्र्य, आत्मनोरेकं छागरूपं घातयित्वा तन्मांसैर्महर्षींस्तर्पयतः, भुक्तोत्थितेषु च तेषु एह्येहीत्यलपतीति श्रुते, मृतसञ्जीवनविद्यया च जीवित इत्यसौ विदार्य महर्षीणामुदरं तस्मान्निःसृत्य भ्रातुर्गले लगति, ततस्तौ हृष्टौ भवतः, एवमुपप्लवकारिणौ तावागतेनागस्त्येन निहतौ, इति ॥५६॥

पौलस्त्य इति। शत्रुषड्वर्गमिति। 'पौलस्त्यः' रावणः, 'राक्षसः' 'मानात्', रामचन्द्राय सीतामसमर्पयन् विननाश। 'मदात्', 'दम्भोद्भवः' नाम सार्थकनामा महासुरः, अनेकसुरजित् त्रिभुवने नास्ति मे प्रतिमल्लो मत्सम इति मदेन नारदमभ्यर्थितवान् दर्शय मे प्रतिमल्लमिति, नारदेन तु ईषिकास्त्रेण स विनष्टः। 'एते' दाण्डक्यादयः, 'शत्रुषड्वर्गमाश्रिताः', 'निधनं', गताः ॥५७॥

अरिषड्वर्गपरित्यागे महत्फलमाह। शत्रुषड्वर्गमिति। 'जामदग्न्याम्बरीषौ', 'शत्रुषड्वर्गमुत्सृज्य', 'चिरं मही बुभुजाते', इति स्पष्टं। तस्माच्छ्रेयोऽर्थिना अरिषड्वर्गत्यागेन इन्द्रियविनयः कर्त्तव्य इति ॥५८॥

इन्द्रियजयप्रकरणे इन्द्रियजयकारणं विद्यावृद्धसंयोगमभिधातुमाह। *वर्द्धयन्निवेति। पुरुषेण पुमर्थद्वयोपार्ज्जनाय यतितव्यं। तौ च 'धर्मार्थौ', उपादेयत्वात् साधुभिः 'आदरात् सेवितौ', अतस्तौ 'वर्द्धयन्', 'गुरुसेवनं' विद्यावृद्धाराधनं, 'कुर्वीत'। कथमिति 'निगृहीतेन्द्रियग्रामः', सन् इति स्पष्टं ॥५८ क्रोड़ः॥

---

* वर्धयन्निव धर्मार्थौ सेवितौ सद्भिरादरात्।
निगृहीतेन्द्रियग्रामः कुर्वीत गुरुसेवनम्॥५८ क्रोड़ः।
साकोऽर्थं सु० पु० नास्ति।

किमर्थं गुरुसेवनं कुर्वीतेत्याह। शास्त्रायेति। 'शास्त्राय' शास्त्रं श्यान्वीक्षिक्यादिविद्याचतुष्टयं तदर्थं, 'गुरुसंयोगः', कर्त्तव्यः। 'शास्त्रं', किमर्थं? 'विनयवृद्धये' इन्द्रियजयवृद्ध्यर्थं। स एव विनयः शास्त्रेणो-पर्य्युच्छ्रितःकृतक इति व्यपदिश्यते। 'विद्याविनीतः' इति विद्योपदृंहि-तेन्द्रियजयकृतविनयसम्पन्नः, 'नृपतिः', न 'कृच्छ्रेषु' विपज्जनितक्लेशेषु, 'अवसीदति' विषण्णो भवति ॥ ५९ ॥

उपकारं च वृद्धसंयोगे दर्शयन्नाह। वृद्धोपसेवीति। विद्यावृद्ध-सेवाधीनः 'नृपतिः', साधुसेव्यो भवति। तथा 'प्रेर्य्यमाणोऽपि', दास-कितवादिभिः, 'अकार्येषु' परदारदूषणादिषु, 'न प्रवर्त्तते' ॥ ६० ॥

विद्याग्रहणोत्तरकालमपि अवशिष्टविद्यांशा ग्राह्या एवेति दर्श-यन्नाह। आददान इति। सकलकलापरिपूर्णो भवतीत्यर्थः। इति इन्द्रियजयलक्षणं ॥ ६१ ॥

विनयस्य फलं दर्शयन्नाह। जितेन्द्रियस्येति। 'नीतिमार्गानुसा-रिण्यः' नयसम्पन्नस्य, 'ज्वलिताः' भास्वराः, 'लक्ष्म्यः' विभूतयः, 'कीर्त्त-यश्च' यशांसि च, 'नभःस्पृशः' दिगन्तव्यापिन्यः, भवन्तीत्यर्थः ॥ ६२ ॥

इन्द्रियजयवृद्धसंयोगानुपसंहरन्नाह। इति स्वेति। 'नयान्वितः' वृद्धसेवनात् अवाप्तनीत्यन्वितः, 'राजा', 'इति' अनेन प्रकारेण, 'विनयं'* इन्द्रियजयं, 'निषेवमाणः' अनुतिष्ठन्, 'नरदेवसेवितं' योऽधमहाराजा-ध्यासितं, 'श्रियः' 'पदं' महाचक्रवर्त्तिस्थानं, 'समाक्रामति' अध्यास्ते। 'भास्वरं' दीप्ततरं, 'शिरः' 'महारत्नगिरेः' सुमेरोः शिखरम् 'इव', इत्यलमित्यर्थः, 'उन्नतं' अकृतपुण्यैरप्राप्यं प्राप्नोतीत्यर्थः ॥ ६३ ॥

विनयो राजकुमारेषु पुनराधेय इति दर्शयन्नाह। इयं हीति। 'इयं', 'पार्थिवता' राजत्वं, 'लोकव्यतिरेकवर्त्तिनी' लोकोऽन्यथा वर्त्तते-ऽन्यथा पार्थिवः, यतः 'स्वभावतः', एव विनयाभावात् 'समुन्नता' अप्रतिहता। 'बलात्' आक्रम्य गुरुः 'विनये', नियोजयेत्। यतः

* विनयौ इति मु०।

'नयस्य' शास्त्रानुष्ठानस्य, 'विनयः' इन्द्रियजयः 'पुरःसरः' साधक इत्यर्थः॥ ६४॥

बलाबलयनियोजने गुणं दर्शयन्नाह। परां विनीत इति। 'विनीतः', राजा 'परां' उत्कृष्टां, 'सेव्यतां', प्राप्नोति। महीपतिविभूषणानां दुर्लभत्वात् विनय एवालङ्कारः। 'करीव मदः', यथा, राजा 'विनयेन शोभते' सुगमं॥ ६५॥

किमर्थं विद्यावृद्धसंयोगः क्रियते इति दर्शयन्नाह। गुरुस्त्विति। 'गुरुः' विद्यावृद्धः, 'विद्याधिगमाय', अभिहितविद्यापरिज्ञतये, 'सेव्यते'। सा च 'श्रुता', 'विद्या', समये 'मतये' प्रज्ञायै भवति। श्रुतानुष्ठानयुक्तानि चानुष्ठीयमानानि 'भूतये' श्रिये, 'असंशयं भवन्ति'॥ ६६॥

भूयोऽपि वृद्धसंयोगजनितविनयस्य प्रयोजनं दर्शयन्नाह। सुनिपुणमिति। 'सुचिः' बाह्याभ्यन्तरशौचयुक्तः, 'अनुवृत्तिपरः' शुश्रूषातत्परः। 'नृपतिपदाय' चक्रवर्त्तित्वाय। स्पष्टमन्यत्॥ ६७॥

इन्द्रियजयवृद्धसंयोगयोरननुष्ठाने दोषं अनुष्ठाने च गुणं दर्शयन्नाह। अविनयरतमिति। इन्द्रियजयो विनयः, तदन्यथात्वमविनयः तद्रतं व्यसनासक्तं नृपम् 'अवशं' असाध्यम्, अपि 'विद्विषः' रिपवः, 'वशं नयन्ति'। विनीतः पुनः 'तनुरपि' अल्पोऽपि, 'क्वचित् पराभवं', 'नैति', न याति॥ ६८॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां प्रथमः सर्गः॥ ※॥

---

पूर्वसर्गोल्लिखितविद्यानामुद्देशमभिधातुमाह। आन्वीक्षिकीमिति। आन्वीक्षिक्याद्या विद्यास्ततोऽपि वक्ष्यमाणलक्षणाः। 'तद्विदैः' ता एव विद्या निर्मला येषां तैः। 'तत्क्रियोपेतैः' तदनुष्ठानयुक्तैः। स्पष्टमन्यत्॥ १॥

आदरात् विद्याचतुष्टयचिन्तने प्रयोजनमाह। आन्वीक्षिकीति। 'शाश्वती' प्रत्येकमविनाशिनी। 'एता एव' इत्येवकारेण नान्यो कोऽपि लोकस्थितिहेतव इत्यर्थः। अन्यत् सुगमं॥ २॥

विद्यासङ्ख्याविषये विप्रतिपत्तिं दर्शयन्नाह। त्रयीति। तिस्रो विद्या मनुशिष्या मन्यन्ते। कुत इत्याह, हि यस्मात् या इयमान्वीक्षिकी सा त्रय्या विद्यैव एवेति मता॥ ३॥

बार्हस्पत्यास्तु विद्याद्वयमेव मन्यन्ते इति दर्शयन्नाह। वार्त्तेति। 'वार्त्ता च दण्डनीतिश्च' वक्ष्यमाणलक्षणे 'द्वे' एव 'विद्ये' 'इत्यवस्थिते' शास्त्रनिश्चये। कुत इत्याह, 'लोकयात्राप्रधानत्वात्' इति चातुर्वर्ण्यस्य लोकस्य यात्रा भूम्यादिलक्षणः तस्मिन् प्रधानत्वात् प्रधानवृत्तिहेतुत्वात्, सर्वार्थो वार्त्तया लभ्यते दण्डनीत्यापि लभ्यते इति 'सुरपुरोधसः' बृहस्पतेः 'शिष्याः' अन्तेवासिनो मन्यन्ते॥ ४॥

शुक्राचार्यस्यासुरगुरोः शिष्या एकामेव विद्यां मन्यन्ते इति दर्शयन्नाह। एकैवेति। दण्डनीतिरिदमेव शास्त्रं, यस्मात् तस्यामेव सर्वविद्यारम्भाः प्रतिष्ठिताः। दण्डनीतेरभावात् मात्स्यन्यायेन सर्वविद्यारम्भ एव न सम्भवति॥ ५॥

पूर्वपक्षमभिधाय सिद्धान्तमभिधातुमाह। विद्याश्चतस्र इति। नोऽस्माकं गुरोः कौटल्यस्य दर्शनं विद्याश्चतस्र एव न न्यूनाधिका वा। यस्मात् पृथक् पृथक् प्रकटसिद्धार्थं आसु विद्यासु लोका व्यवस्थिताः॥ ६॥

विद्यानां स्वरूपभेदं दर्शयन्नाह। आन्वीक्षिकीति। प्रत्यक्षपरोक्षाभ्यामीक्षितस्य अर्थस्यानु पश्चात् ईक्षणं अन्वीक्षा सा प्रयोजनं

यस्याः सा 'आन्वीक्षिकी' अनुमानविद्या न्यायदर्शनवैशेषिकादिका, सा च 'आत्मविज्ञानं' आत्माऽनया विशेषेण ज्ञायत इत्यात्मविज्ञानं। तादृशविज्ञानाच्च उभयलोकसिद्धौ 'धर्माधर्मौ त्रयीस्थितौ' इति तत्त्वतो ज्ञायते। 'अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ' वक्ष्यमाणत्वात्तौ ज्ञायेते इत्यर्थः॥ ७॥

दण्डनीतेर्माहात्म्यं दर्शयन्नाह। आन्वीक्षिकीति। आन्वीक्षिक्याद्याः तिस्रो विद्याः सत्यः सद्विधाः धर्मार्थसंसाधिकाः। यस्मात् दण्डनीतेः नीतिशास्त्रस्य विनाशे सति ताः सत्यो विद्या असत्यो मात्स्यन्यायेन भवन्तीत्यर्थः॥ ८॥

एतदेव दर्शयन्नाह। दण्डनीतिर्यदेति। 'सम्यक् नेतारं' विशिष्टं नायकं विजिगीषुं अधितिष्ठति, तादृशेन विजिगीषुणा यदा सद्दण्डनीतिरनुष्ठीयत इत्यर्थः। 'तदा शेषाः' आन्वीक्षिक्यादिविद्यास्तिस्रः, तादृशविद्याविदं सम्यक् उपासते इति॥ ९॥

विद्यारक्षणात् लाभं दर्शयन्नाह। वर्णा इति। 'वर्णाः' ब्राह्मणादयः। 'आश्रमाः' ब्रह्मचारिप्रभृतयः। 'यासु' आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिषु विद्यासु, 'प्रतिष्ठिताः' यथासम्भवं प्रतिष्ठां गताः। तद्यथा, त्रय्यां ब्राह्मणाः। दण्डनीत्यां राजानः। वार्त्तायां वैश्याः शूद्राश्च। आन्वीक्षिक्यां ब्रह्मचार्य्यादयः। एवञ्च तासामवेक्षणात् रक्षणाच्च राजा तद्धर्मस्य वर्णाश्रमोपार्जितस्यांशभाक् भवति, षष्ठांशभागी नृपो भवतीति स्मृतेरित्यर्थः॥ १०॥

विद्याजनितानि उपकारान्तराणि दर्शयन्नाह। आन्वीक्षिक्यात्मविद्येति। 'आन्वीक्षिकी' उक्तलक्षणा, आत्माऽनया ज्ञायते इति 'आत्मविद्या', सुखदुःखयोः कार्यकारणभावेन 'ईक्षणात्' निरूपणात् भवति। 'तया' आन्वीक्षिक्या, 'तत्त्वं' परमार्थं, 'ईक्षमाणः', 'हर्षशोकौ' 'व्युदस्यति' परित्यजति। धर्मः कारणं, सुखं कार्यं, अधर्मः कारणं, दुःखं कार्यं, एतदुभयमपि उपभोगात् क्षयं याति नान्यथा इत्येवमनुमानादि-

प्रमाणैस्तत्त्वदर्शी विजिगीषुर्धर्म्मज्ञो 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखं' इति चिन्तनेन व्युदस्यति त्यजतीत्यर्थः ॥ ११ ॥

आन्वीक्षिकीजनितोपकारो दर्शितः साम्प्रतं त्रय्याः स्वरूपं तज्जनितोपकारादिकं चाभिधातुमाह। ऋग्यजुः सामेति। ऋगादयस्त्रयो वेदाः 'त्रयी' इत्युच्यते। 'त्रय्यां' विध्यनतिक्रमेण 'तिष्ठन्' 'उभौ लोकौ' इहलोकपरलोकौ, 'अवाप्नोति', ॥ १२ ॥

न केवलमेतत् वेदत्रयं त्रयी, अपरमपि त्रयीस्वरूपं दर्शयन्नाह। अङ्गानीति। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड़पि वेदस्य 'अङ्गानि'। 'वेदाः' इत्यथर्ववेदेन सह चत्वारः। 'मीमांसा' वेदप्रमाणशास्त्रं। 'न्यायविस्तरः' इति न्यायदर्शनवैशेषिकादिः। 'धर्मशास्त्रं' मन्वादि। 'पुराणं' अष्टादशविधं। चकारात् महाभारतरामायणादीनामपि पुराणान्तर्भावो ज्ञेयः कथास्वरूपत्वात्। एतत्सर्वं चतुर्दशविद्यास्थानरूपा 'त्रयी' इत्युच्यते ॥ १३ ॥

त्रय्याः स्वरूपादिकमुक्तं सम्प्रति वार्त्तायाः स्वरूपं तदुपकारञ्च अभिधातुमाह। पाशुपाल्यमिति। पशून् हस्त्यश्वादीन् पालयन्तीति पशुपालाः हस्तिशिक्षाशालिहोत्रादिविदः, तेषां शास्त्रमनुष्ठानञ्च 'पाशुपाल्यं'। 'कृषिः' कर्षणं तत्प्रतिपादकं पराशरादिशास्त्रं तदनुष्ठानञ्च। 'पण्यं' क्रयविक्रयादिलक्षणं वाणिज्यं एतत्त्रितयं, 'वार्त्ता' जगद्वृत्तिहेतुत्वात्। एतया वार्त्तया सम्पन्नो विजिगीषुः *साधु यथा भवति तथा न 'व्यापत्तेः' आवर्त्तनात् 'भयमृच्छति' प्राप्नोति ॥ १४ ॥

दण्डनीतेः स्वरूपं उपकारञ्च दर्शयितुमाह। दमो दण्ड इतीति। 'दमः' वधपरिक्लेशार्थहरणादिना दमनक्रिया, 'दण्डः' अभिधीयते। तात्स्थात् प्रयोक्तरि तिष्ठतीति उपचारात् महीपतिर्दण्डः तस्य नीतिरिदं शास्त्रं दण्डनीतिः, नयनं दण्ड्यं प्रति दण्डस्य प्रणयनं नीतिरिह्योच्यते ॥ १५ ॥

---

* साधुरिति मु०।

दण्डनीत्या खात्मनो विद्यानाञ्च पालनमाह। तयेति। स्पष्टं॥ १६॥

विद्यानां स्वरूपोपकारादिभिर्भेदं दर्शयित्वाऽभिधानतोऽपि दर्शयन्नाह। विद्याद्याभिरिति। 'याभिः' आन्वीक्षिकीत्रयीवार्त्ताभिः। चतुर्वर्गं धर्मार्थकाममोक्षान्, यथासम्भवं 'यदा' महीपतिः 'विद्यात्' विचारयेत्, तदा आन्वीक्षिक्या 'विद्यात्वं'। विद् विचारणे इति धातोरिदं रूपं। तथा चतुर्वर्गं यदा विद्यात् जानीयात्, तदा त्रय्या विद्यात्वं, विद् ज्ञाने इति धातोरिदं रूपं। यदा 'विद्यात्' लभेतेति तदा वार्त्ताया विद्यात्वं। विद् लाभे इति धातोरिदं रूपं॥ १७॥

॥ इति विद्याप्रकरणं॥

वर्णाश्रमधर्मं स्वधर्मच्युतानां दण्डप्रणयनार्थमभिधातुमाह श्लोकचतुष्टयेन। इज्येति। याजनेति। शस्त्रेति। भूमस्येति। कारवः शिल्पिनः। चारणाः रङ्गजीविनः॥ १८॥ १९॥ २०॥ २१॥

इदानीं ब्रह्मचारिद्वयस्वरूपमाह। गुराविति। नैष्ठिकस्य ब्रह्मचारिणः 'गुरौ' गुरुगृहे 'वासः', 'अग्निशुश्रूषा' इति वैश्वानराराधनं, 'स्वाध्यायः' स्वशाखाध्ययनं। 'व्रतचर्य्या' तदुपदिष्टानां व्रतानामनुष्ठानं, 'त्रिकालस्नायिता' सन्ध्यात्रयेऽपि स्नानं। 'भैक्ष्यं' भिक्षासमूहः एकभिक्षाया निषिद्धत्वात्, 'गुरौ प्राणान्तिकी स्थितिः' इति प्राणान्तं यावत् गुरावेव स्थितिरित्यर्थः॥ २२॥

गुरोरभावे तस्य वासनियमं दर्शयन्नाह। तदभावे इति। 'तदभावे' गुरोरभावे। 'समब्रह्मचारी' सहाध्यायी। 'वा' अथवा, 'कामतः' स्वेच्छया, 'अन्याश्रमतं' इति यदि नैष्ठिक उपकुर्वाण एव॥ २३॥

भूयोऽपि ब्रह्मचारिधर्मविशेषमाह। स मेखलीति। 'सः' उपकुर्वाणो ब्रह्मचारी, 'मेखली' मौञ्जी मेखला यस्यास्तीति। 'दण्डी' पालाशदण्डधारणात्। 'जटी मुण्डी वा' तथैव गुरुसंश्रयः। आविद्याग्रहणात् व्रतादिकं विद्याग्रहणञ्च यावत् कुर्यात्, ततः इच्छा चेत् गृहस्थः स्यात् अन्यथा नैष्ठिकः स्यात् इत्यर्थः॥ २४॥

गृहस्थधर्ममभिधातुमाह। अग्निहोत्रेति। गृहस्थोऽत्र चतुर्विधः। अपरश्च अग्निहोत्रेति। ब्राह्मणादिभिरग्निहोत्रोपचरणं यथा सम्भवं ब्राह्मणक्षत्रियवैश्यानामेव द्रष्टव्यं। 'जीवनञ्च स्वकर्मभिः' इति ब्राह्मणस्य प्रतिग्रहेण, क्षत्रियस्य शस्त्रेण, वैश्यस्य कृषिपाशुपाल्यवाणिज्यादिभिः, शूद्रस्य कार्वादिभिः। 'अयञ्च धर्मः' नियमात्, धर्मदारेषु 'पर्ववर्ज्जं' पौर्णमास्यादिपुण्यतिथिवर्ज्जं, 'रतिक्रिया'॥ २५॥

धर्मार्थं दारपरस्यार्थश्चेत्याह। देवेति। देवपितृतिथिभृत्यपूजेति प्रतीतं। 'दीनानुकम्पनं' बालवृद्धव्याधितानां भृत्याऽनुकम्पनं। 'श्रुतिः' वेदः, 'स्मृतिः' मन्वादिशास्त्रं, तेषां 'अर्थः' तत्र 'अवस्थितिः' तदुक्तानुष्ठानपरेण भवितव्यमित्यर्थः। अयं धर्मचतुर्विधस्यापि 'गृहमेधिनः' गृहे अवस्थातुं मेधा बुद्धिर्यस्य विद्यते तस्यायं धर्म इत्यर्थः॥ २६॥

वानप्रस्थधर्ममभिधातुमाह। जटित्वमिति*। 'जटित्वं' नियमाज्जटाधारणं 'अग्निहोत्रं' अग्निहोत्रपरिग्रहश्च, तथैव भूमौ शय्या, मृगाजिनधारणञ्च। वने निर्जने वा वासः 'वनवासः' अन्यत् स्पष्टं। २७॥

यतिधर्ममाह। प्रतिग्रहेति। प्रतिग्रहस्य दीयमानस्य हिरण्यादेः ग्रहणनिवृत्तिः 'प्रतिग्रहनिवृत्तिः' 'त्रिःस्नानं' सन्ध्यात्रये स्नानं, 'ब्रह्मचारिता' ब्रह्मचारिता सन्निहितदारेणापि ब्रह्मचर्यमेव कर्त्तव्यं। उत्तरार्द्धमेव प्रतीतं॥ २८॥

परिव्राड्धर्ममभिधातुमाह। सर्वारम्भेति। 'निष्परिग्रहता' पुत्रादेर्वस्त्रावरणादेरपि परिग्रहो नास्तीति। 'अद्रोहः' भूतहिंसाभावः। 'समता सर्वजन्तुषु' उपकार्य्यपकारिष्वपि तुल्यबुद्धिः॥ २९॥

अपरश्च, प्रियाप्रियेति। प्रियस्याप्रियस्य तयोरपरिष्वङ्गः अनासक्तिः 'प्रियाप्रियापरिष्वङ्गः†' सुखादौ विकारो हर्षशोकः कुतो नास्तीति

---

* जटत्वमिति मु०।

† प्रियाप्रियपरिष्वङ्गः इति मु०।

'सुखदुःखाविकारत्वात्' सबाह्याभ्यन्तरशौचमिति 'बाह्यं' मृज्जलादिभिः, 'आभ्यन्तरं' सकलसत्त्वानुग्रहबुद्ध्या। 'वाग्यमः' मौनव्रतं। 'व्रतचारिता' ब्रह्मचारिता* ॥ ३० ॥

किञ्च सर्वेन्द्रियेति। 'सर्वेन्द्रियसमाहारः' विषयेभ्यः सर्वेषां इन्द्रियाणां प्रत्याहरणं। अयञ्च योगशास्त्रे प्रत्याहार इत्युक्तः। 'धारणा' इति। तल्लक्षणमाह तत्रैव। 'प्रदेशे धार्यते वायुर्मनो वापि ससंयुतं। सधारकप्रयत्नेन धारणा साऽभिधीयते। 'ध्यानं' चिन्तनं। तच्च द्विविधं काम्यफलार्थं मोक्षफलार्थञ्चेति। तत्र मोक्षफलार्थं नित्यं। तस्य 'अभ्यासः' तत्परता 'भावशुद्धिः' प्राणिषु अद्रोहबुद्धिः। 'एष परिव्राड्धर्म उच्यते' ॥ ३१ ॥

वर्णाश्रमाणामसाधारणधर्ममभिधाय साधारणमभिधातुमाह। अहिंसेति। वर्णिभिराश्रमिभिश्च परकीयाणां मानदारद्रव्यादीनां 'अहिंसा' कर्त्तव्येति शेषः। 'सूनृतं' प्रियं पथ्यञ्च सूनृतं इत्येवंभूता वाणी, सर्वेषु वक्तव्येति भावः। 'सत्यं' अमृषावादः। 'शौचं' बाह्याभ्यन्तरशौचं श्रुतिस्मृतिविहितं, 'दया' दीनानुकम्पनं, 'क्षमा' क्षान्तिः। स्पष्टमन्यत् ॥ ३२ ॥

स्वधर्मानुष्ठाने फलमभिधातुमाह। स्वर्गेति। 'स्वर्गानन्त्याय' स्वर्गञ्च आनन्त्यं मोक्षञ्च स्वर्गानन्त्यं तस्मै प्रभवतीति। 'धर्मोऽयं' अनन्तरोक्तः। 'सर्वेषां वर्णिलिङ्गिनां' भवतीति शेषः। 'तस्य' धर्मस्य 'अभावे' विनाशे अननुष्ठाने 'अयं लोकः' 'सङ्करात्' सङ्कीर्णतया 'नाशं आप्नुयात्' ॥ ३३ ॥

धर्मप्रवर्त्तकदण्डधराभावे दोषं दर्शयन्नाह। सर्वस्यास्येति। 'सर्वस्यास्य' धर्मस्य 'यथान्यायं' सार्वन्यायमनतिक्रम्य 'भूपतिः' विजिगीषुः 'सम्प्रवर्त्तकः' सम्प्रवर्त्तयिता। 'तस्य' भूपतेः 'अभावे' 'धर्मनाशः' दण्डाभावात् धर्मनाशे 'जगच्च्युतिः' जगतो विनाशः स्यात् ॥ ३४ ॥

* वाग्यमो ब्रह्मचारितेति मु०।

वर्णाश्रमधर्मप्रभावमेवाभिधातुमाह। वर्णाश्रमाचारेति। 'वर्णाश्रमाचारयुक्तः' वदाचारतत्परः, 'वर्णाश्रमविभागवित्' इति का कस्य प्रतिपत्तिरिति जानाति। 'पाता' रक्षिता वर्णाश्रमाणां 'पार्थिवः सर्वलोकभाक्'। एकलोकभाग् इति टीकासम्मतः पाठः। एकलोकः स्वर्गः ॥ ३५ ॥

॥ इति वर्णाश्रमधर्मः ॥

दण्डमाहात्म्यमभिधातुमाह। इति यस्मादिति। *'आत्मवान्' अभिहितात्मसम्पद्गुणयुक्तः 'सम्यक्' विजितेन्द्रियो 'नृपः' न केवलं आत्मनः प्रजानाञ्च 'उभौ लोकौ धारयति' दण्डप्रणयनात् इत्यर्थः। 'दण्डीव' यम इव रागद्वेषरहितो दण्डं धारयेत् ॥ ३६ ॥

दण्डधारणप्रकारमभिधातुमाह। उद्वेजयतीति। 'तीक्ष्णो' अन्यायादधिकेन दण्डेन, प्रजाः 'उद्वेजयति'। मृदुना न्यूनेन 'परिभूयते' न भवत्यस्य दण्डे पीड़ेति दण्डाद्भयं नास्तीति परिभूयते। 'दण्डेन' अन्यूनाधिकेन द्वेषः परिभवो वा भवति यस्मात् तस्मात् 'युक्तदण्डः प्रशस्यते' सुविचारप्रणयनादित्यर्थः ॥ ३७ ॥

तदेव द्रढ़यति। त्रिवर्गमिति। 'त्रिवर्गं' धर्मार्थकामान्, 'वर्द्धयति', 'आशु' सत्वरं 'राज्ञो दण्डः यथाविधि' सुविचारप्रणीतत्वात्। 'असामञ्जस्यात्' समञ्जसभावो सामञ्जस्यं माध्यस्थं, रागद्वेषाभ्यां तदभावो असामञ्जस्यं तस्मात् असामञ्जस्यात् 'प्रणीतः' दुष्प्रणीतो दण्डः 'वनस्थानपि' लोकव्यवहारबाह्यानपि 'कोपयेत्' ॥ ३८ ॥

किञ्च लोकेति। 'लोकशास्त्रानुगः' लोकः वर्णाश्रमादिजनपदः, शास्त्रं श्रुतिस्मृत्यादि। 'तदनुगतः' तदनुरूपो दण्डः नेयः दण्ड्यं प्रति विधेयः। उभयानुगतत्वात् सुतरां अनुद्वेजनो भवति। विजिगीषोः श्रिये च भवति। उत्तरार्द्धं स्पष्टं ॥ ३९ ॥

महीपतेर्जगतश्च ध्वंसकारणमभिधातुमाह। परस्परेति। 'पर-

* आत्मन इति मु०।

स्पराभिपततया' भक्ष्यभक्षकत्वेन स्थितस्य 'जगतः'। भिन्नवर्त्मनः 'पृथ-ङ्मार्गस्य दण्डस्येत्यर्थः। 'दण्डाभावे परिध्वंसी मात्स्यन्यायः प्रवर्त्तेत' इति स्पष्टं ॥ ४० ॥

एतदेव द्रढयितुमाह। जगदेतदिति। स्पष्टं ॥ ४१ ॥

एतमर्थमुपसंहरन्नाह। इदमिति। 'इदं' जगत् 'प्रकृत्या' स्वभा-वेन 'विषयैः' स्पर्शादिभिः, 'वशीकृतं' विषयीकृतं, आहारनिद्रा-भयमैथुनादीनां शरीरेष्वेव सहोत्पद्यमानत्वात्। अतएव 'परस्परं' 'परस्परस्त्रीधनलोलुपं' सत्तृष्णमटं 'जगत्' केवलं दण्डभयेन उपपीडितं सत् 'साधुसेविते' मुमुक्षुभिरध्यासिते 'सनातने' नित्ये पुण्ये वा स्वर्गा-नन्त्यगामिनि मार्गे प्रस्थानं करोति ॥ ४२ ॥

एतदेव द्रढयन्नाह। नियतेति। 'अस्मिन्' जगति 'साधुवृत्तः' पर-वशः' 'दुर्लभः' दुष्प्रापः किन्तु दण्डयोगात् सर्व एव प्रायशो नियत-विषयवर्त्ती भवति। यथा कुलस्त्री विरागहेतुभूतव्याध्यविवशत्वा-दिदोषदुष्टं पतिं शास्त्रोक्तदण्डभयेनैव पतित्वेनाङ्गीकरोति ॥ ४३ ॥

दण्डप्रणयनेऽपि विजिगीषोः प्रयोजनमाह। इति परिगणितार्थ इति। 'इति' एवमुक्तप्रकारेण, 'परिगणिताः' निर्णीताः 'अर्थाः' वधा-दिदण्डस्य दोषा गुणाश्च येन सः। अतएव *शास्त्रमार्गानुसारी। 'नियमयति' एवं वर्त्तितव्यमिति नियमं करोति। 'यतात्मा' जिते-न्द्रियः। प्राप्ताः मार्गेषु प्रचारा याभिस्ताः 'प्राप्तमार्गचाराः' 'सरितः' समुद्रं इव 'अपुनरपगमाय' अपुनर्निवृत्तये, 'सम्पदः' लक्ष्म्यः 'तं' राजानं 'विशन्ति' ॥ ४४ ॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां द्वितीयः सर्गः ॥ ० ॥

---

* प्राप्तमार्गेति मु०।

येत्'। 'मन्युना' पीड़ाजनितामर्षेण शोकरहितेन। शेषं स्पष्टं॥ ७॥

अपरञ्च। को हि नामेति। 'कोनाम' जनः, 'कुले' विशुद्धे, 'जातः' उत्पन्नः सन्, 'सुखलेशेन लोभितः' यत्किञ्चित् सुखास्वादप्रलोभितः, 'अल्पसाराणि' दुर्बलानि, 'भूतानि' प्राणिनः, 'पीड़येत्', 'अविचारयन्' दोषविचारमकुर्वन्। यस्तु पीड़येत् स कुलीनो न भवतीति भावः॥ ८॥

एतदेव द्रढ़यितुमाह। आधीति। 'आधयः' मनःपीड़ाः, 'व्याधयः' जराद्याः तैः 'परीताय' समन्ताद्व्याप्ताय, एवञ्च 'अद्य श्वोवा विनाशिने' निःसंशयं विनश्वराय, 'कोहि नाम' विवेकी, 'शरीराय' शरीरसुखसम्पादनार्थं, 'धर्मापेतं' अधर्मिष्ठं, 'समाचरेत्' अविवेकित्वादाचरेदित्यर्थः॥ ९॥

भूयोऽपि अकार्यनिषेधाय वैराग्यं दर्शयन्नाह। आहार्यैरिति। 'आहार्यैः' असहजैः सुगन्धानुलेपनवस्त्रालङ्कारादिभिः, स्वभावादहृद्यं पूतिगन्धमुखखेदाद्युपेतं, 'सर्वं दुःखेन हृद्यतां नीयमानं', 'हि' स्फुटं, 'छायामात्रकमेव' छायामात्रावस्थिति, न चिरस्थायीत्यर्थः। अतः 'इदं' शरीरं *'अम्बुदकबिम्बवत्, साक्षादेवादर्शनं यातीत्यर्थः॥ १०॥

विषयाणामसारत्वं दर्शयन्नाह। महावातेति। 'महावातः' महाआदि मेघमालावत् 'अतिपेलवैः' कोमलैः, 'विषयारिभिः' विषयाः, स्पर्शादय एवाहितकारित्वात् शत्रवस्तैः, 'महात्मानः' विवेकिनोऽपि, 'कथं नाम', 'ह्रियन्ते' वशीक्रियन्ते॥ ११॥

भूयोऽप्यनित्यतां दर्शयन्नाह। जलान्तश्चन्द्रेति। जलमध्यगतचन्द्रप्रतिबिम्बवत् प्राणिनां चपलं जीवितं 'तथाविधं ज्ञात्वा', 'शश्वत्' अनवरतं, 'कल्याणं' तद्धेतुत्वात् धर्मम्, 'आचरेत्'॥ १२॥

एतदेव द्रढ़यितुमाह। जगन्मृगेति। 'जगत्' विश्वं, 'मृगतृष्णातुल्यं' मृगतृष्णिकोपमानं, "वीक्ष्य' दृष्ट्वा, 'इदं' दृश्यमानं, 'क्षणभङ्गुरं' आशु

---

* पद्मोदुदकबिन्दुवदिति मु०।

विनापि, "*सुजनैः' सत्पुरुषैः, विद्यावृद्धैरित्यर्थः । '†सङ्गतं' साहित्यं, 'कुर्यात्', धर्मार्थं सुखार्थञ्च ॥ १३ ॥

सुजनसङ्गतिं प्रशंसन्नाह । सेव्यमानस्त्विति । सुधातल इवेति । श्लोकद्वयं स्पष्टं ॥ १४ ॥ १५ ॥

सुजनसङ्गतस्य फलं प्रदर्श्य दुर्जनसङ्गतं निन्दन्नाह । ग्रीष्मे इति । ग्रीष्मे सूर्यांशवोऽतितीक्ष्णा भवन्ति तैः सम्यक् तप्तं, अतएवेदमनं 'अनाश्रयं', 'वीरुल्लताद्यभावात् 'मरुस्थलमिव', दुर्जनसङ्गतेर्व्वाश्रयो नास्तीति स्थितेरभावात् 'उदग्रं' उग्रं, मरुपक्षे तदग्नीवोष्णाधिक्यं भवतीति दुर्जनैः सम्बन्धं त्यजेत् । कौटल्येनाप्युक्तं 'अनार्यजनसंसर्गं त्यजेत्' इति ॥ १६ ॥

दुर्जनस्वरूपमाह । ‡श्रुतशीलोपसम्पन्नानिति । श्रुतं आन्वीक्षिक्या-दिविद्या, शीलं सत्स्वभावता, ताभ्यामुपसम्पन्नान् 'श्रुतशीलोपसम्पन्नान्', 'अकस्मादेव' कारणं विनापि, 'अन्तः प्रविश्य' विश्वासदर्शनाद्यात्मभावं गत्वा हृदयं प्रविश्य, 'शुष्कदवमिवानलः',§ 'दहति', स्पष्टं ॥ १७ ॥

आशीविषेभ्योऽप्यधिकदुष्टतां दुर्जनस्य दर्शयन्नाह । निश्वासोद्गी-र्णेति । निश्वासेन उद्गीर्णो यो विषकृतभुक् विषानलस्तस्य धूमेन धूम्रीकृतानि आननानि येषां तैः 'आशीविषैः' सर्पैः सह, 'सङ्गं वरं कुर्यात्', किन्तु 'दुर्जनैः', समं निश्चितं 'न कुर्यात्' । सर्पाः कथञ्चिदुप-कारहिता न व्यभिचरन्ति, दुर्जनास्तु व्यभिचरन्त्येवेति भावः ॥ १८ ॥

उपकारिष्वपि अपकारी दुर्जन इति दर्शयन्नाह । दीयत इति । 'स्वच्छहृदयैः' अकलुषितचित्तैः सुजनैः, 'पिण्डः' शुभाहारमयः, 'येनैव पाणिना दीयते', 'मार्जार इव दुर्वृत्तः', 'तमेव' पाणिं, 'विलुम्पति', दौष्ट्यात्, स्पष्टं ॥ १९ ॥

अपरञ्च । असाध्यमिति । 'साधुमन्त्राणां' मन्त्राङ्गानां, 'असाध्यं'

* सज्जनैरिति मु॰ । † 'सङ्गतः' इति मु॰ । ‡ श्रुतः शीलेत्यादीति मु॰ । § शुष्कदवाग्निरिति मु॰ ।

ऽप्रतिविधेयं, 'तीव्रं, तीक्ष्णं, 'वाग्विषं' वाक्स्वरूपं विषं, 'उत्सृजन्' उद्गिरन्, 'दुष्टो दुर्जनपन्नगो दिजिह्वं वदनं धत्ते' स्पष्टं। दोषादेवं-विधो दुर्जनपन्नगः सुदूरतः परित्याज्य इति भावः ॥ २० ॥

प्रसङ्गादागते दुर्जने विधेयमाह। क्रियत इति। 'यभ्यर्चनीयाय' पूज्याय सुजनाय, 'यथाऽञ्जलिः क्रियते' प्रश्रयप्रदर्शनार्थं 'ततः' तस्मा-दपि, 'साधुतरः' स प्रश्रयविशेषः 'दुर्जनाय कार्यो हितार्थिना', प्रती-तमन्यत् ॥ २१ ॥

कारधनादुपकारबुद्धिरप्यस्य भवतु इति जनानुरागार्थमस्य सद्य-वहारविशेषमभिधातुमाह। ह्लादिनीमिति। 'सम्यक्' सूक्ष्मत्वेन, 'जनजिघृक्षया' जनचित्तापहारार्थं, सर्वत्र 'परमां मैत्रीं भावयन्', अर्थात् दुर्जनः, 'सर्वसत्त्वानां ह्लादिनीं सर्वानन्दकारिकां 'लौकिकीं गिरं' लोकव्यवहारिकां वाचं, 'उत्सृजेत्' दद्यादित्यर्थः ॥ ॥ २२ ॥

दुष्टवाक्ये दोषं दर्शयन्नाह। नित्यमिति। हृदि विद्धमिति। स्पष्टं ॥ २३ ॥ २४ ॥

क्रूरवचसां स्वरूपमभिधातुमाह। तीव्राणीति। 'तीव्राणि' दुःस-हानि, 'उद्वेगकारीणि' उद्वेजनीयानि, 'अनयात्मकैर्विरुद्धानि' दु-र्नीतिविद्भिरभिरुदीरितानि, 'वचांसि' दुर्वाक्यानि, 'शस्त्राणीव देहि-नां मर्म्म घ्नन्ति', स्पष्टं ॥ २५ ॥

प्रियवचसां गुणं दर्शयन्नाह। प्रियमेवेति 'प्रियमेव' श्रुतिसुखमेव, 'अभिधातव्यं' प्रयोक्तव्यं, 'सत्सु' सज्जनेषु, 'नित्यं द्विषत्सु च' सततं, देष्टृषु च। 'केकामधुरः शिखीव' कलनादरमणीयो मयूर इव, 'प्रिय-वाक्' मिष्टभाषी जनः, 'कस्य न प्रियः', अपितु सर्वस्यापीत्यर्थः ॥ २६ ॥

अपिच। अलङ्क्रियन्ते इति। 'मदरक्तया' कलखनजनितमदरक्त-या, 'विपश्चितः' पण्डिता विवेकिनः, 'अत्यर्थं' निरतिशयं, 'माधुर्यगुण-युक्तया' मधुरया, 'वाचा'। अन्यत् स्पष्टं। मधुरवागेव विपश्चितोऽ-लङ्करणमिति भावः ॥ २७ ॥

' अपरश्च। मदरक्तस्येति। गुणानुरागीति। ये प्रियाणीति। प्रतीतं ॥ २८ ॥ २९ ॥ ३० ॥

गृहस्थाचारमभिधातुमाह। शुचिरिति। 'शुचिः' बाह्याभ्यन्तरशौचयुक्तः, बाह्यं मृज्जलादिभिः, आभ्यन्तरं सर्वसत्त्वानुग्रहबुद्ध्या। वेदोक्तं समग्रमपि मन्यते यः स आस्तिकः तस्य भाव आस्तिक्यं तेन पूत आत्मा यस्य सः 'आस्तिक्यपूतात्मा'। अवशिष्टं सुगमं ॥ ३१ ॥

... उक्तपूजनक्रममभिधातुमाह। प्रणिपातेनेति। 'गुरून्' आचार्यादीन्, 'प्रणिपातेन' प्रणिपत्य, 'अभिमुखान् कुर्वीत' इत्यनुवर्त्तते। 'सतः' सत्पुरुषान्, 'अनूचानचेष्टितैः' विनीतभावैः। 'देवान्', 'सुकृतकर्मणा' पुण्येनानुष्ठानेन, 'भूत्यै' सम्पदर्थं। देवाः सुकृतेनाभिमुखा भवन्ति न प्रणाममात्रेण ॥ ३२ ॥

' अपरश्च। स्वभावेनेति। 'स्वभावेन' परमात्मीयभावेन, 'मित्रं' मित्रतामुपगतं, 'सद्भावेन' साधुभावेन, 'बान्धवान्' आत्मबन्धुप्रभृतीन्, 'स्त्रीभृत्यं' भार्यानुजीविवर्गं, 'प्रेमदानाभ्यां' दानरहितेन स्नेहेन प्रेमविवर्जितेन दानेन च, 'दाक्षिण्येन' स्निग्धभावेन, 'इतरं' उक्तव्यतिरिक्तं जनं, 'हरेत्' आराधयेत् ॥ ३३ ॥

दानक्रममभिधातुमाह। * गुणानुरागीति। 'गुणानुरागी' पात्रगुणेष्वनुरागवान्, अनेकगुणवद्भ्य एव धनं विसृजेन्नान्यथेति, 'स्थितिमान्' यस्य यावत् प्रतिज्ञातं तदनतिक्रमेण निर्वहणं स्थितिस्तद्युक्तः। 'श्रद्दधानः' दानात् नूनं पुण्यमस्तीति श्रद्धान्वितः, 'दयान्वितः' दीनानाथेष्वपि कारुण्यात् प्रदत्तदानः, अवशिष्टं स्पष्टं ॥ ॥ ३३ क्रोडः ॥

प्रियवाक्सहितमेव दानं कर्त्तव्यमित्यस्यैवार्थस्य प्रशंसामभिधातु-

---

* गुणानुरागी स्थितिमान् श्रद्दधानो दयान्वितः।
धनं धर्माय विसृजेत् प्रियां वाचमुदीरयन् ॥ ३३ क्रोडः ॥

माह। *ये प्रियाणीति। 'ये' श्रीमन्तः, प्रियञ्च भाषन्ते 'प्रयच्छन्ति च' 'सत्कृतिं' सत्कारं, 'ते वन्द्यचरिताः', 'नरविग्रहाः' पुरुषशरीराः, 'देवाः', एवेति। ३३ क्रोडः॥

एतदेव दर्शयितुमाह। अनिन्देति। 'परकृत्येषु' परानुष्ठानेषु, विभिन्नदर्शनेष्वपि, 'अनिन्दा' निन्दा न कार्य्या, 'स्वधर्मपरिपालनं' प्रास्वोक्तस्य स्वधर्मस्यानुष्ठानं, 'कृपणेषु दयालुत्वं' अनाथादिषु अनुकम्पापरत्वं, 'सर्वत्र' सर्वस्मिन् जने, 'मधुरा गिरः', नियमात् वाच्या इति शेषः॥ ३४॥

किञ्च प्राणैरपीति। 'अव्यभिचारिणे' अकपटाय, 'गृहागते परिव्यक्तः' गृहागतेऽरावपि आशु सम्भाषणं, 'शक्त्या दानं' यथाशक्ति दानं, 'सहिष्णुता' सहनशीलत्वं॥ ३५॥

अपरञ्च। बन्धुभिरिति। स्वजनबन्धुप्रभृतीनां 'चित्तानुविधायित्वं' चित्तानुवर्त्तनं, 'महात्मनां वृत्तं', इत्यर्थः॥ ३६॥

एतदनुष्ठानफलमभिधातुमाह। सनातने इति। 'महात्मनां', नित्ये मार्गे 'साधु', 'तिष्ठतां', 'गृहमेधिनां', 'अयम्', एव 'पन्थाः', सम्मतः। 'नियतम्', 'अनेन' पथा, 'गच्छन्', लोकद्वयं प्राप्नोतीत्यर्थः॥ ३७॥

किञ्च। उक्तपथानुसारिणो नरपतेर्विनयगुणेन जगत् आयत्तं भवेत् इत्यर्थः॥ ३८॥

अपरञ्च। क्षमेति। मधुरवचनान्येव माध्वीरायतः 'लालितः' आदायतः पश्चादालालितः सुरक्षितः सन्, 'लोकः' 'संस्थितेः' न्यायमार्गावस्थितेः, 'भेदं' व्यभिचारं, 'न एति' नागच्छति। न्याय्यदण्डः सामसहायः कार्य्यसाधको भवतीति भावः॥ ३९॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां तृतीयः सर्गः॥ ※॥

---

† ये प्रियाणि प्रभाषन्ते प्रयच्छन्ति च सत्कृतिं।
श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः॥ ३४ क्रोडः॥
श्लोकोऽयं मु॰ पु॰ न धृतः।

वर्णाश्रमस्थापनानन्तरं राज्यप्रकृतीनां सप्तानामपि गुणसमूहकृतां सम्पदं दर्शयितुं प्रकृतिरेव तावदाह। स्वाम्यमात्यश्चेति। 'स्वाम्यमात्यौ' उक्तलक्षणौ, 'राष्ट्रं' जनपदः, 'दुर्गं' स्थानीयादि, 'कोशः' रत्नसारादिः, 'बलं' चतुरङ्गं, 'सुहृत्' मित्रं,। 'परस्परोपकारीदं' इति स्वामी अमात्यस्य उत्पादकत्वेन उपकारी, अमात्योऽपि स्वामिनो बुद्ध्यादिसाहाय्येन। तौ राष्ट्रस्य रक्षादिनोपकारकौ, राष्ट्रं कोशादि सम्पादनेन तयोः, दुर्गं रक्षाविधानादिना तेषां, तेऽपि संस्कारादिसम्पादनेन दुर्गस्य, कोशो बव्युपकरणसम्पादनेन तेषां, वर्द्धनरक्षणतीर्थप्रतिपादनादिना तेऽपि कोशस्य, बलं चतुरङ्गं असाध्यसाधनोपकारि पूर्व्वोक्तानां, तेऽपि भरणादिना बलस्य, मित्रं सहायादिना अनन्तरोक्तानां, तेऽपि तथैव च मित्रस्येति। इदं परस्परोपकारि सप्ताङ्गं राज्यं॥ १॥

एतदेव समर्थयन्नाह। एकाङ्गेनापीति। 'एकेनाप्यङ्गेन', 'विकलं', शरीरमिव 'एतत्' राज्यं, 'साधु', यथा स्यात्तथा 'न वर्त्तते'। तस्मात् 'सामग्र्य' सम्पूर्णतां, 'अन्विच्छन्', *'अस्य', 'परीक्षणं', कस्य के गुणाः समग्रा असमग्रा वा इति परीक्षामपि कुर्वीत इति भावः॥ २॥

आत्मसम्पदं समर्थयन्नाह। †लोकाधारा इति। लोकानामाधारस्वरूपाः दुष्प्राप्याः 'दुष्परिग्रहाः', 'आपः संस्कृते आधारे इव 'राज्ञां श्रियः संस्कृते आत्मनि तिष्ठन्ति'। नान्यथेति आत्मसम्पदादिगुणैः आत्मा संस्कार्य इति॥ ३॥

स्वामिना आत्मगुणसम्पत् सम्पादनमेव प्रथमं विधेयमिति दर्शयन्नाह। आत्मानमेवेति। अमात्यादिप्रकृतिभ्यः 'आत्मानं' शरीरमेव, 'गुणसमन्वितं' वक्ष्यमाणगुणोपेतं, 'रक्षेत्'। 'गुणसंयुक्तः'

---

* सुपरीक्षणमिति मु०।

† अयं श्लोकः मु० पु० पञ्चमस्थानीयः।

माह। *ये प्रियाणीति। 'ये' श्रीमन्तः, प्रियश्च भाषन्ते 'प्रयच्छन्ति च' 'सत्कृतिं' सत्कारं, 'ते वन्द्यचरिताः', 'नरविग्रहाः' पुरुषशरीराः, 'देवाः', एवेति॥ ३३ क्रोडः॥

एतदेव दर्शयितुमाह। अनिन्देति। 'परकृत्येषु' परानुष्ठानेषु, विभिन्नदर्शनेष्वपि, 'अनिन्दा' निन्दा न कार्या, 'स्वधर्मपरिपालनं' प्राक्तोक्तस्य स्वधर्मस्यानुष्ठानं, 'कृपणेषु दयालुत्वं' अनाथादिषु अनुकम्पापरत्वं, 'सर्वत्र' सर्वस्मिन् जने, 'मधुरा गिरः', नियमात् वाच्या इति शेषः॥ ३४॥

किञ्च प्राणैरपीति। 'अव्यभिचारित्वे' अकपटाय, 'गृहागते परिष्वङ्गः' गृहागतेऽरावपि आशु सम्भाषणं, 'शक्त्या दानं' यथाशक्ति दानं, 'सहिष्णुता' सहनशीलत्वं॥ ३५॥

अपरञ्च। बन्धुभिरिति। स्वजनबन्धुप्रभृतीनां 'चित्तानुविधायित्वं' चित्तानुवर्त्तनं, 'महात्मनां वृत्तं', इत्यर्थः॥ ३६॥

. एतदनुष्ठानफलमभिधातुमाह। सनातने इति। 'महात्मनां', नित्ये मार्गे 'साधु', 'तिष्ठतां', 'गृहमेधिनां', 'अयम्',एव 'पन्थाः', सम्मतः। 'नियतम्', 'अनेन' पथा, 'गच्छन्', लोकद्वयं प्राप्नोतीत्यर्थः॥ ३७॥

किञ्च। उक्तपथानुसारिणो नरपतेर्विनयगुणेन जगत् आयत्तं भवेत् इत्यर्थः॥ ३८॥

अपरञ्च। क्षमेति। मधुरवचनान्येव पाशास्तैरायतः 'लालितः' आदाबायतः पश्चाल्लालितः सरक्षितः सन्, 'लोकः' 'संस्थितैः' न्यायमार्गावस्थितैः, 'भेदं' व्यभिचारं, 'न एति' नागच्छति। न्याय्यदण्डः सामसहायः कार्यसाधको भवतीति भावः॥ ३९॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां तृतीयः सर्गः॥ ※॥

---

† ये प्रियाणि प्रभाषन्ते प्रयच्छन्ति च सत्कृतिं।
श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः॥ ३३ क्रोडः॥
श्लोकावेतौ मु॰ पु॰ न स्तः।

वर्णाश्रमस्थापनानन्तरं राज्यप्रकृतीनां समानामपि गुणसमूहकृतां सम्पदं दर्शयितुं प्रकृतिरेव तावदाह। स्वाम्यमात्येति। 'स्वाम्यमात्यौ' उक्तलक्षणौ, 'राष्ट्रं' जनपदः, 'दुर्गं' स्थानीयादि, 'कोशः' रत्नसारादिः, 'बलं' चतुरङ्गं, 'सुहृत्' मित्रं,। 'परस्परोपकारीदं' इति स्वामी अमात्यस्य उत्पादकत्वेन उपकारी, अमात्योऽपि स्वामिनो बुद्ध्यादिसाहाय्येन। तौ राष्ट्रस्य रक्षादिनोपकारकौ, राष्ट्रं कोशादिसम्पादनेन तयोः, दुर्गं रक्षाविधानादिना तेषां, तेऽपि संस्कारादिसम्पादनेन दुर्गस्य, कोशो हस्त्युपकरणसम्पादनेन तेषां, वर्द्धनरक्षणतीर्थप्रतिपादनादिना तेऽपि कोशस्य, बलं चतुरङ्गं असाध्यसाधनोपकारि पूर्वोक्तानां, तेऽपि भरणादिना बलस्य, मित्रं सहायादिना अनन्तरोक्तानां, तेऽपि तथैव च मित्रस्येति। इदं परस्परोपकारि सप्ताङ्गं राज्यं॥ १॥

एतदेव समर्थयन्नाह। एकाङ्गेनापीति। 'एकेनाप्यङ्गेन', 'विकलं', शरीरमिव 'एतत्' राज्यं, 'साधु', यथा स्यात्तथा 'न वर्त्तते'। तस्मात् 'सामग्र्यं' सम्पूर्णतां, 'अन्विच्छन्', *'आत्मं', 'परीक्षणं', कस्य के गुणाः समग्रा असमग्रा वा इति परीक्षामपि कुर्वीत इति भावः॥ २॥

आत्मसम्पदं समर्थयन्नाह। †लोकाधारा इति। लोकानामाधारस्वरूपाः दुष्प्राप्याः 'दुष्परिग्रहाः', 'आपः संस्कृते आधारे इव 'राज्ञां श्रियः संस्कृते आत्मनि तिष्ठन्ति'। नान्यथेति आत्मसम्पदादिगुणैः आत्मा संस्कार्य्य इति॥ ३॥

स्वामिना आत्मगुणसम्पत् सम्पादनमेव प्रथमं विधेयमिति दर्शयन्नाह। आत्मानमेवेति। अमात्यादिप्रकृतिभ्यः 'आत्मानं' शरीरमेव, 'गुणसमन्वितं' वक्ष्यमाणगुणोपेतं, 'इच्छेत्'। 'गुणसंयुक्ताः'

---

* सुपरीक्षणमिति सु॰।
† अयं श्लोकः मु॰ पु॰ पञ्चमस्थानीयः।

त्मलाभः। 'ततः' अनन्तरं, 'श्रेयपरीक्षणं' अवशिष्टप्रकृतीनां परीक्षणं 'कुर्वीत' ॥ ४ ॥

गुणसम्पत्सम्पादनार्थमित्येतावदेव समर्थयन्नाह। साधु भूतलदेवत्वमिति। 'साधु' शोभनतरं, 'भूतलदेवत्वं' परमैश्वर्यादिकं कार्यं, किन्तु 'असतामभिदुष्करं', शेषार्द्धं स्पष्टं ॥ ५ ॥

श्लोकत्रयेण आभिगामिकगुणानभिधातुमाह। कुलमिति। 'कुलं' उभयकुलविशुद्धिराभिजात्यं, 'सत्त्वं' व्यसनेऽभ्युदये चाविकारता, 'वयः' यौवनं, 'शीलं' सुस्वभावता, 'दाक्षिण्यं' सर्वत्र सानुकम्पत्वं, 'क्षिप्रकारिता' अदीर्घसूत्रत्वं, '*अविसंवादिता' वाक्छलेन विरुद्धसंवादरहितत्वं, 'सत्यं' अमृषावादः, 'वृद्धसेवा' विद्यावृद्धाराधनतत्परता, 'कृतज्ञता' कृतस्य प्रत्युपकारतत्परता। 'दैवसम्पन्नता' यद्यदिच्छति तत् सम्पन्नं यस्य स दैवसम्पन्नस्तस्य भावः, 'बुद्धिः' अष्टगुणा प्रज्ञा, 'अक्षुद्रपरिवारता'† अक्षुद्रजनपरिजनत्वं, 'शक्यसामन्तता' शक्या वशे कर्तुं सामन्ताः संसक्तमण्डलमर्यादा भूम्यन्तराः अरयो यस्य तद्भावः, 'दृढ़भक्तिता' स्थिरानुरागत्वं, प्रतिपन्ननिर्व्यूढ़िरित्यर्थः। 'दीर्घदर्शित्वं' दीर्घदेशेन दीर्घकालेन च व्यवहितं प्रज्ञाचक्षुषा द्रष्टुं शीलं यस्य तद्भावः, 'उत्साहः' शौर्यादिगुणसंयुक्तता, 'शुचिता' परदारादिनिरीहा, स्थूललक्ष्यता, स्थूलवस्त्रादिभ्यः स्थूलमेव लक्ष्यं सद्भ्यादिभिः करोति न सूक्ष्मं स्वल्पं इत्यर्थः, 'विनीतता' विनयः, 'धार्मिकता' धर्मनिष्ठता, एते 'गुणाः', 'साध्वाभिगामिकाः', संश्रयणीयत्वकारकाः, अनायासेन बहुभिराश्रिता भवन्तीत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

एतदेव दर्शयितुमाह। गुणैरिति। 'गुणैः', एतैः अनन्तरोक्तैः, 'सद्यतं' निश्चयेन, 'अभिगम्यते', परिजनैरित्यर्थः। एवम्भूतः परिजनैरभिगतो राजा नान्यथा। शेषार्द्धं सुगमं ॥ ९ ॥

---

* अविसंवादिता इति मु०।
† अक्षुद्रपरिवारिता इति मु०।

स्वामिप्रकृतिसम्बन्धिनां आभिगामिकगुणानां स्वरूपं गुणैरत्कृष्टतामभिगच्छताञ्च कर्मसचिवादीनाञ्च प्रसङ्गात् स्वरूपमभिधाय प्रस्तुतामात्मसम्पदमभिधातुमाह। वाग्मीति। 'वाग्मी' प्रशस्तवाक्, 'प्रगल्भः' सुरसदृशस्यापि विरुद्ध वक्तीत्यर्थः। 'स्मृतिमान्' वर्षशतेऽपि श्रुतदृष्टस्मारकः, 'उदग्रः' उद्गतायः, प्रांशुरित्यर्थः। 'बलवान्' कामबलसम्पन्नो वृकोदरवत्, 'वशी' जितेन्द्रियः, 'नेता' प्रणेता, 'दण्डस्य' वधपरिक्लेशादिकस्य, अतएव 'निपुणं',* यथा भवति तथा, 'कृतशिल्पः' कृतास्त्रसमकलः, 'सुवग्रहः'† सुखेनैवानीतिप्रसङ्गोऽवगृह्यते निषिध्यते इति॥ १५॥

किञ्च। परामियोगेति। 'पराभियोगप्रसहः' शत्रुकृतविग्रहसहिष्णुः, ‡'सर्वदुष्टप्रतिक्रियः' सर्वापायेषु दुष्टाः प्रतिक्रिया येन स तथा। 'परच्छिद्रान्ववेक्षी'§ शत्रुदोषान्वेषणशीलः, 'सन्धिविग्रहतत्त्ववित्' षाड्गुण्यप्रयोगवित्॥ १६॥

अपरञ्च। गूढ़मन्त्रेति। 'गूढ़मन्त्रप्रचारः' गूढ़ोऽतिगुप्तः मन्त्रः यथाफलकर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिश्चेत्येवंलक्षणो यस्य सः, तथा गूढ़प्रचारोऽन्यैरविदितप्रचारः परेषामसाध्यः स्यात्। 'देशकालविभागवित्' युद्धाश्वसंस्थानादिदेशः, कालश्चायमकालं अनुकूलः अयोऽन्य प्रतिकूल इति विभागं जानाति। 'आदाता सम्यगर्थानां', प्रजादिभ्यः शास्त्रोक्तन्यायेन, तथा 'विनियोक्ता', सत्पात्रकरणेन, 'पात्रवित्', अर्थविनियोगे पुरुषार्थत्रयाभिसन्धिना। पात्राणि त्रिविधानि, धर्माभिसन्धिना ब्राह्मणतपस्विप्रभृतयः, अर्थाभिसन्धिना मन्त्रिपुरोहितादयोत्पादकाः, कामाभिसन्धिना मनोरमा स्त्रियः इत्येवं गुणविभागेन पात्राणि वेत्तीति॥ १७॥

---

* निपुणः इति मु०। † सुविग्रहः इति मु०।
‡ दृष्टसर्वप्रतिक्रियः मु० पु०। § परच्छिद्रानुपेचीति मु०।

अपरञ्च, क्रोधेति। स्पष्टं॥ १८॥

किञ्च। वृद्धोपदेशेति। 'वृद्धोपदेशसम्पन्नः' वृद्धोपदशानुष्ठानज नितसम्पत्तियुक्तः। 'शक्तः' उत्साहशक्तिभिः समर्थः। 'मधुरदर्शनः' रमणीयाकृतिः। 'गुणानुरागी' गुणवत्सुरक्तानुरागः, 'स्मितवाक्' ईषद्धसितोपलक्षितवाक्, एवमयं षड्विंशतिगुणपरिकल्पिता विजिगीषोः 'आत्मसम्पत्', 'प्रकीर्त्तिता'॥ १९॥

आत्मसम्पदो माहात्म्यं दर्शयन्नाह। इत्यादिगुणेति। 'इत्यादिगुणसम्पन्ने', 'लोकयात्राविदि' लौकिकव्यवहारज्ञे, 'स्थिरे' अचपले, 'निर्वृत्तः', निर्वाणसकलोपतापविच्छेदात् 'पितरीव' जनके इव, 'आस्ते' स्थितिं करोति पुत्र इव, 'लोकः' जनपदः, 'स पार्थिवः', गम्य इति॥२०॥

अमुमेवार्थं कथयन्नाह। आत्मसम्पदिति। स्पष्टं॥ २१॥

आभिगामिकगुणमध्ये पठितायाः बुद्धेरुत्साहस्य च गुणान्तरमभिधातुमाह। शुश्रूषेति। 'शुश्रूषा' जन्मान्तरवासनया विद्यासु श्रोतुमिच्छा। ततः 'श्रवणं'। 'ग्रहणं' श्रुतमात्रमेव व्याख्यातस्यादानं। 'धारणं' अवधारणं, 'ऊहः' वितर्कः किमिदमेवंविधमन्यथा चेति सन्देहः। 'अपोहः' विचार्य असङ्कुतस्य परित्यागः। 'अर्थविज्ञानं' अर्थेषु विविधं ज्ञानं सदसद्रूपं। 'तत्त्वज्ञानं' तत्त्वे परमार्थः तत्र ज्ञानं अभिनिवेशः, एते धियो गुणाः॥ २२॥

उत्साहगुणानभिधातुमाह। दाक्ष्यमिति। 'दाक्ष्यं' कौशलं, 'शैघ्र्यं'* क्षिप्रकारिता, 'अमर्षः' अपकारिणां कथमप्यविस्मरणं, 'शौर्यं' अभीरुत्वं एतत् 'उत्साहलक्षणं' अनेन उत्साहो लक्ष्यत इति। 'गुणैः' आभिगामिकैः आत्मसम्पदुक्तैः अनन्तरोक्तबुद्ध्युत्साहगुणैः, 'उपेतः' अन्वितः, 'राजा भवितुमर्हति', महाराजत्वयुक्तो भवतीत्यर्थः॥ २३॥

एतेषां मध्ये गुणत्रयस्य प्राधान्यं दर्शयन्नाह। त्याग इति। 'त्यागः' वदान्यतालक्षणः, 'सत्यं च' 'शौर्यञ्च' यथोक्तलक्षणं। 'एते त्रयः',

---

* शैघ्र्यमिति मु॰ पु॰।

'महागुणाः', महाफलसम्पादकत्वात्। उत्तरार्द्धं स्पष्टं। यत्सर्वं कर्त्तव्यं तदेतत् गुणत्रयमेव सम्पादयतीत्यर्थः॥ २४॥

स्वामिगुणसम्पादनमभिधायामात्यगुणसम्पादनमभिधातुममात्यपुरोहितादीनां यथासम्भवं गुणानाह। कुलीना इति। 'कुलीनाः' शुद्धोभयकुलसमुत्पन्नाः। 'शुचयः' स्वभावतः शौचपराः, 'शूराः' अभीरवः, 'श्रुतवन्तः' आन्वीक्षिक्यादिश्रुतप्राज्ञिनः, 'अनुरागिणः' स्वाम्यनुरागवन्तः, *'दण्डनीतेः प्रयोक्तारः' अर्थशास्त्रप्रयोगकुशलाः। 'सचिवाः' सह चिन्वन्ति स्वामिना सहार्थान् इति सचिवाः अमात्याः स्युः, 'मह्वीपतेः', विजिगीषोरिति॥ २५॥

अमात्यादीनां शुचीनामपि उपधाशोधनं सूचयन्नाह। †उपधाशोधिता इति। उपधास्ततः, धर्मोपधा, अर्थोपधा, कामोपधा, भयोपधा च। सभयो ह्ययमकर्मण्यो राजा, अन्योपादनेन धर्ममुपपादयाम इति प्रत्याख्याने शुचिरिति धर्मोपधा। अभव्योऽयं राजा एनं हत्वा आत्मीयवर्गायाभिलषितार्थं प्रयच्छाम इति तत्प्रत्याख्याने शुचिरिति अर्थोपधा। राजमहिषी कामयमानामुपगच्छाम इति प्रत्याख्याने शुचिरिति कामोपधा। एकोऽमात्यः सचिवानन्यानावाह्य तेषामेकैकं भयप्रदर्शनेन राजवधार्थमुपनयेदिति तत्प्रत्याख्याने शुचिरिति भयोपधा। ताभिः शोधिताः 'उपधाशोधिताः'। 'सम्यग् गाहमानाः फलोदयं', 'तस्य' स्वामिनः, 'सर्वं' कार्यजातं, 'कृताकृतं' किं कृतं किं वा न कृतं, इति 'सानुरागाः' अनुरागयुक्ताः, 'परीक्षेरन्' निरूपयेयुः॥ २६॥

उपधाशब्दनिर्वचनमभिधातुमाह। उपेत्येति। 'उप' समीपं, 'इत्य', 'धीयते' आधीयते ढौक्यते, 'यस्मात्', 'ततः' तस्मात्, 'उपधा इति स्मृता', 'उपायाः' उपजापप्रयोगाः, 'उपधा ज्ञेयाः', 'तयाऽमात्यान् परीक्षयेत्', स्पष्टं॥ २७॥

* दण्डनीतिप्रयोक्तार इति मु० पु०। † उपधाः शोधिताः इति मु०।

अमात्यानां गुणसम्पदमभिधाय मन्त्रिसम्पदमभिधातुमाह। स्वव-ग्रह इति। अमार्गप्रवृत्तममात्यमवगृह्णन्ति प्रभविष्णुतया विहत्य निवारयन्ति ये बन्धुप्रभृतयस्तेऽवग्रहाः शोभनतया अवग्रहा यस्यासौ 'स्ववग्रहः', 'जानपदः' जनपदभवो विजिगीषुः स्वजन्मभूमिवात्सल्यात् तद्विरुद्धं न समाचरति। 'कुलशीलबलान्वितः' आभिजात्य-सुस्वभावकायबलसम्पन्नः, 'वाग्मी' प्रशस्तवाक्, सारभाषीत्यर्थः। 'प्र-गल्भः' अप्रतिहतन्द्रिकः, 'चक्षुष्मान्' शास्त्रमेव प्रशस्तं चक्षुस्तद्वान्, 'उत्साही' उक्तत्रिगुणात्मकोत्साहयुक्तः। 'प्रतिपत्तिमान्' प्रतिपत्तिः उत्पन्नप्रतिभा तया युक्तः॥ २८॥

अपरञ्च। स्तम्भेति। 'स्तम्भः' स्तब्धता, 'चापलं' अप्रतिष्ठितत्वं, ताभ्यां 'हीनः'। 'मैत्रः' मित्रावहितः। क्षुत्पिपासादिक्लेशं सहते इति 'क्लेशसहः', 'शुचिः' पूर्वोक्तचतुरुपधाशुद्धः। 'सत्यं' यथार्थवादः, 'सत्त्वं' व्यसनेऽभ्युदये चाविकारित्वं, 'धृतिः' अविषण्णता, 'स्थैर्यं' स्थिरविघ-त्वं, 'प्रभावः' प्रभुता, 'आरोग्यं' नीरोगता, एतैर्युक्तः॥ २९॥

किञ्च। कृतशिल्पश्चेति। 'कृतशिल्पः' अभ्यस्तकलाकलापः, 'दक्षः' क्षिप्रकारी, 'प्रज्ञावान्' उक्ताष्टगुणबुद्धियुक्तः, 'धारणान्वितः' अवि-स्मरणयुक्तः, 'दृढभक्तिः' अचलानुरागः, 'अकर्त्ता च वैराणां' स्वामि-कृतवैराणामप्रतिविधाता, एवम्भूतः 'सचिवो' भवेत्॥ ३०॥

अन्यानपि मन्त्रिगुणानाह। स्मृतिरिति। धारणान्वित इत्युक्तोऽपि स्मृतिगुणः पुनरुच्यते आदरप्रदर्शनार्थं। 'तत्परतार्थेषु' अर्थेषु रक्षा-दिषु अतितात्पर्यं, 'वितर्कः' बुद्धिगुणमध्ये पठितोऽप्यत्र पुनरुच्यते आदरार्थं। 'मन्त्रगुप्तिः' यत्नाद्मन्त्रगोपनं, अन्यत् सुगमं॥ ३१॥

अमात्यादधिकतरगुणं पुरोहितमभिधातुमाह। त्रय्याञ्चेति। 'शा-न्तिकपौष्टिकं' स्वस्त्ययनादिकं। अवशिष्टं सुगमं॥ ३२॥

प्रसङ्गात् गणकगुणमभिधातुमाह। ताद्दगिति। स्पष्टं॥ ३३॥

अमात्यसाधुताप्रभृतीनां गुणानां शक्तिविशेषेभ्यः प्रत्यक्षतः परि-

ख्यानमाह श्लोकषट्केन। साधुतेति। स्वजनेभ्य इति। गुणदयमिति। उत्साहश्चेति। भक्तिमिति। अस्तब्धतामिति॥ ३४॥ ३५॥ ३६॥ ३७॥ ॥ ३८॥ ३९॥

प्रत्यक्षप्रमाणेन परीक्षामुक्त्वाऽनुमानेनापि अभिधातुमाह। कर्मानुमेया इति। 'परोक्षगुणवृत्तयः' परोक्षा अप्रत्यक्षा गुणस्य रामणीयकादिकस्य वृत्तयः निष्पत्तयः, 'कर्मानुमेयाः', भवन्ति यतः, 'तस्मात्', 'परोक्षवृत्तीनां' कर्मणां 'फलैः' निष्पत्तिलक्षणैः,'कर्म' अनिष्पन्नलक्षणं, 'विभाव्यते' *उपलक्ष्यते, अनुमीयत इत्यर्थः॥ ४०॥

मन्त्रिणां स्वामिनञ्च विधेयमाह। सज्जमानमिति। 'अकार्य्येषु' शास्त्रनिषिद्धत्वात् व्यसनादिषु,'सज्जमानं' आसक्तिं यान्तं, 'निरुन्ध्युः' प्रतिषेधयेयुः आमात्य, 'मन्त्रिणो नृपं' इति स्पष्टं, 'गुरुणामिव' इहलोकपरलोकदायिजनकाचार्य्यादीनामिव, 'एतेषां' मन्त्रिणां, 'वचनं' हितवचनं, 'शृणुयात्', श्रवणमथानुष्ठानपर्य्यन्तं ग्राह्यं 'नृपः' स्वामी॥ ॥ ४१॥

जगतो विनाशाभ्युदययोर्नरेश्वरविनाशाभ्युदयौ भवत इति दर्शयन्नाह। नरेश्वर इति। 'नरेश्वरे' विजिगीषौ, 'निमीलति' विनश्यति सति, 'जगत्सर्वं' मात्स्यन्यायात् निमीलति। 'सूर्य्योदयेऽम्भोजं यथा' सूर्य्योदये पद्ममिव, 'तत्प्रबोधे' नरेश्वरस्याभ्युदये,'प्रबुध्यते' जागर्त्ति, जगदित्यर्थः॥ ४२॥

मन्त्रिणः श्रितस्य च कर्त्तव्यमाह। तद्बोधयेदिति। 'तत्'† तस्मात्, 'जगन्नाथं' भुवनेश्वरं, 'बोधयेत्' उत्पादयेत्, अमात्यादिः। 'सः' स्वामी, पुनः 'यथा' येन प्रकारेण, 'बुध्येत' पञ्चतन्त्रकथादिभिरपि, 'धीसत्त्वोद्योगसम्पन्नैः‡ श्रितैः' सेवकैः पुरुषैः तत्, 'तथा' कार्य्यं॥ ४३॥

जगन्नाथबोधकमन्त्रिणां प्रशंसामभिधातुमाह। नृपस्येति। 'नृपस्य,

---

* विभावयेदिति मु०। † सं इति मु०।

‡ सत्कर्मसु समाहितैः इति मु०।

स्वामिनः, 'ते' मन्त्र्यादयः, 'हि' यस्मात्, 'सुहृदः' बान्धवाः। 'त एव गुरवः' अभ्यर्हिततरा आचार्य्याः, 'मताः' शास्त्रकारिभिः सम्मताः। उत्तरार्द्धं सुगमं ॥ ४४ ॥

एतदेव द्रढयितुमाह। सज्जमानमिति। 'अकार्य्येषु' निषिद्धाचरणादिषु, 'सज्जमानं' आसक्तिं यान्तं नृपं, 'ये सुहृदः' येऽनुरक्तहृदयाः 'वारयन्ति,' 'ते सत्यं नैव सुहृदः', 'गुरवः' महान्तः, 'गुरवः' आचार्य्याः, 'हि' किल, भवन्ति ॥ ४५ ॥

कथमकार्य्येषु सक्तो भवतीत्याह। कृतविद्योऽपीति। 'कृतविद्योऽपि' जनः, 'बलिना' अतिबलवता, 'रागेण' विषयानुरागेण, 'अन्ध' स्वच्छतरं, 'दृश्यते' तन्मयो भवति। 'रागानुरक्तचित्तस्तु' रागोपरक्तचित्तः पुनः, 'किं', नाम, 'असाम्प्रतं' अयुक्तं कर्म्म, 'न कुर्य्यात्' अपि तु सर्व्वमेव ॥ ४६ ॥

किञ्च। पश्यन्नपीति। 'पश्यन्नपि' लोचनाभ्यां सूर्य्यादिकमवलोकयन्नपि, 'भवत्यन्धः', लोकद्वयविरुद्धकार्य्याणामदर्शनात् 'सुहृद्वैद्याः' सुहृद एव वैद्याः, 'निर्म्मलैर्विनयाञ्जनैः' पवित्रैराधिहारिभिर्विनयरूपाञ्जनैर्नेत्ररोगौषधैः, 'चिकित्सन्ति', स्वस्थमन्यत् ॥ ४७ ॥

एतदेव समर्थयन्नाह। राजमानमदान्धस्येति। 'राजमानमदैरन्धस्य', 'प्रभुसङ्कटे' प्रभुसत्तायामापदि, 'स्खलतः' पततः, सुहृदादिचेष्टितं 'हस्तावलम्बो भवति'। पतितो यथा हस्तावलम्बेन धार्य्यते तद्वत् स्वामी स्खलन् मन्त्रिचेष्टितेन धार्य्यते इत्यर्थः ॥ ४८ ॥

ये तु स्वामिनः स्खलितानुपेक्षन्ते तेषां दोषं दर्शयन्नाह। मदोद्धतस्येति। 'मदेन' मत्ततया, 'उद्धतस्य' उन्मार्गप्रवृत्तस्य, 'अन्यायप्रवृत्तस्य' शास्त्रोल्लङ्घनवृत्त्या स्थितस्य, 'नृपतेः' विजिगीषोः, 'सङ्कीर्णस्य दन्तिन इव' उच्छृङ्खलस्य हस्तिन इव, 'नेतारः' मन्त्र्यादयः, 'वाच्यतां' निन्द्यतां, 'खलु' निश्चयेन, 'गच्छन्ति' प्राप्नुवन्ति ॥ ४९ ॥

स्वामिप्रकृतेरमात्यप्रकृतेश्च गुणानभिधाय राष्ट्रप्रकृतेर्गुणेष्वभिधेयेषु

भूमिर्जनपदश्चेति द्विधावस्थितायाः राष्ट्रप्रकृतेरन्तर्भूताया भूमेरेताव-द्गुणसम्पन्नायाः सामर्थ्यं दर्शयन्नाह। भूगुणैरिति। 'भूगुणैः' वक्ष्यमाण-लक्षणैः, 'राष्ट्रं' जनपदः, 'वर्द्धते'। 'तद्वृद्धिर्नृपवृद्धये' राष्ट्रवृद्धा कोषवृद्धिः, कोषवृद्धा दण्डवृद्धिः, तद्वृद्धा मण्डलान्तरग्रहणात् सुतरां नृपस्य वृद्धिरिति। 'तस्मात् गुणवतीं भूमिम्' इत्यादि, प्रतीतं ॥ ५० ॥

भूमिगुणानेवाभिधातुमाह, शस्याकरवतीति। 'शस्यानि' प्रायर-श्चयानि, 'आकराः' सुवर्णाद्युत्पत्तिस्थानानि, तद्विशिष्टा। 'पण्यानि' कुङ्कुमागुरुजीरकादीनि, 'खनयः' वज्रमणिमुक्ताद्युत्पत्तिस्थानानि, 'द्र-व्याणि' दुर्गाद्युपयोगिसारदारुवनानि, तैः 'अन्विता', 'गोहिता' क्षीर-वृद्धिविधायिनी। 'भूरिसलिला' प्रचुरजला,'पुण्यैः' धार्मिकैः, 'जान-पदैः' वर्णाश्रमिभिः, युता ॥ ५१ ॥

किञ्च, रम्येति। 'रम्या' रमणीया, 'सकुञ्जरबला' हस्तिवनोपेता। 'वारिस्थलपथान्विता',स्पष्टं। 'अदेवमातृका' पर्ज्जन्य एव मातृका यस्याः सा देवमातृका पर्ज्जन्यसस्येत्यर्थः। तद्विपरीता, भूरिसलिलत्वेन सरि-त्सरःतडागसङ्कुलत्वेन अपर्ज्जन्यसस्येत्यर्थः। 'इति' एवं प्रकारा, 'भूर्वि-भूतये', भवतीति शेषः ॥ ५२ ॥

भूदोषानभिधातुमाह। *शर्करेति। 'शर्कराः' प्रस्तरशकलानि, 'ऊषरः' क्षारमृत्तिका, 'पाषाणाः' शिलासमूहाः, तैर्युता। 'साटवी'. तात्स्थ्यादाटविकैर्युक्ता, 'नित्यतस्करा' प्रतिरोधकादिभिरविरहिता, 'रूक्षा' अस्निग्धा। अन्यत् स्पष्टं ॥ ५३ ॥

· जनपदगुणानभिधातुमाह, स्वाजीव्य इति। 'स्वाजीव्यः' सुखमाजी-व्यते, 'भूगुणैर्युक्तः' अनन्तरोक्तैर्भूगुणैर्युक्तः। '†सानूपः' सजलभू-मियुक्तः, नानाशस्यप्रभवत्वात्। 'पर्वताश्रयः' दृष्टकाष्ठादिसौकर्य-सम्पादनात्। 'शूद्रकारुवणिक्प्रायः', विधेयत्वात् यथेष्टभोग्यः। अन्यत् स्पष्टं ॥ ५४ ॥

---

* सशर्करा सपाषाणा इति मु०। † साद्रपः इति मु०।

किञ्च, सानुराग इति। 'सानुरागः' स्वामिन्यनुरक्तः, 'रिपुद्वेषी' स्वामिशत्रौ द्वेषवान्, 'पीडाकरसहः' कोशाल्पत्वदोषरूपा पीडा, तत्परिहाराय अधिकमपि करं सहते यः, 'पृथुः' विस्तीर्णः, 'नानादेश्यैः समाकीर्णः' नानादेशीयवाणिज्यकारिभिर्व्याप्तः। 'धार्मिकः' पुण्यप्राचुर्यकरः, धर्मषष्ठांशदानेनोपकरोतीत्यर्थः। 'पशुमान्' क्षीरघृतादिभिरुपकरोतीति, 'धनी' दण्डकरादिभिरुपोष्यः ॥ ५५ ॥

अपरञ्च, ईदृगिति। 'मूर्खव्यसनिनायकः' मूर्खा बुद्धिरहिता व्यसनिनो विषयासक्ता नायका मुख्या यस्यासौ। अयं अभिसन्धानपरो न भवति, अभिसन्धातुञ्च न शक्यते, 'तं' तादृशं जनपदं, 'वर्द्धयेत्', 'तस्मात्' जनपदात्, 'सर्वं' सर्वाङ्गमपि राज्यं, 'वर्द्धते' वृद्धिं याति ॥ ५६॥

राष्ट्रप्रकृतेर्गुणसम्पदमभिधाय दुर्गप्रकृतिमभिधातुमाह। पृथुसीमेति। 'पृथुसीम' विस्तीर्णमुखभूमि, 'महाखातं' महापरिखं, 'उच्चप्राकारगोपुरं' उच्चप्राचीरवत् पुरद्वारं यस्य तं, 'शैलसरिन्मरुवनाश्रयं*' पार्वतौदकमारववानदुर्गाणामन्यतमदुर्गाश्रयं, 'पुरं', 'समाविशेत्', स्पष्टं ॥ ५७ ॥

किञ्च, जलवदिति। 'जलवत्' प्रचुरजलं, 'धान्यधनवत्' धान्यादिशस्यसुवर्णादिरत्नसम्पन्नं, 'दुर्गं', 'कालसहं', निचयसम्पन्नत्वात्। 'महत्' विस्तीर्णं। 'दुर्गहीनो नरपतिर्वाताभ्रावयवैः समः', एतादृशो नरपतिरनवस्थितिर्भवतीत्यर्थः ॥ ५८ ॥

शैलसरिन्मरुवनदुर्गाश्रय इत्युक्तं तदेव व्याख्यातुमाह। औदकमिति। 'औदकं' प्रचुरोदकसम्पन्नं, 'पार्वतं' इति प्रान्तरं गुहा वा इति द्विधैवोक्तं 'वार्क्षं' वृक्षबहुलत्वात् अतिगहनं। एतदपि बहूदकसम्पन्नं, 'ऐरिणं' ऐरिणे निर्जले देशे भवं, 'धान्वनं' निस्तृणजलो देशो धन्वा तत्र भवं, धान्वनं, 'दुर्गं', 'दुर्गोपचिन्तकैः' दुर्गव्यवस्थापकैः, 'शास्त्रमतिभिः' शास्त्राभिज्ञैः, आचार्यैः, 'प्रशस्तं' अनुशिष्टं ॥ ५९ ॥

---

* शैलसरिद्वनवनाश्रयमिति मु॰ पु॰।

दुर्गगुणानभिधातुमाह। जलेति। 'जलं', च 'अन्नं', च 'आयुधानि' धनुरादीनि च,'यन्त्राणि' सर्वतो भद्राणि च, तैः 'आढ्यं' सम्पन्नं, 'जलान्नायुधयन्त्राढ्यं', 'वीरयोधैरधिष्ठितं' धैर्यशालियोद्धृपुरुषैः सतरक्षं, 'गुप्तिप्रधानं' रक्षाबहुलं, 'आचार्याः' शुक्रवृहस्पतिप्रभृतयः, 'समनुमेनिरे' एतादृशदुर्गविषये सम्यक् अनुमानं कृतवन्तः॥ ६०॥

किञ्च। तापसाराणीति। 'तापसाराणि' निबद्धोऽपि पुष्कलक्षादिः यत्रापसार्यते तादृशानि,'दुर्गाणि', तथा 'सानूपजाङ्गला भुवः' जलस्थलप्राया भूमयश्च, स्पष्टमन्यत्॥ ६१॥

कोषप्रकृतेर्गुणसम्पदमभिधातुमाह। बह्विति। 'बह्वादानः' बहुसञ्चयः, 'अल्पनिस्रावः' अल्पव्ययः, 'ख्यातः' निःशेषविषयव्यवहारार्हः, 'पूजितदैवतः' पूजितानि श्रीधनदादीनि दैवतानि यस्मिन् सः, 'ईप्सितद्रव्यसम्पूर्णः' सुवर्णादीप्सितधनसम्पन्नः, 'हृद्यः' मनोरमः, महार्घालङ्कारसम्पन्नत्वात्। 'आप्तैरधिष्ठितः' आप्ताः विश्वस्तास्तैरधिष्ठितो रक्षितः॥ ६२॥

एवंविधगुणः कोषः कोषज्ञानां सम्मत इति दर्शयन्नाह। युक्तेति। 'पितृपैतामहोचितः' पितुरपि पैतामह इति न्यायोपार्जितत्वात्, 'उचितः', च विजिगीषोर्धर्मार्जितत्वात्। 'व्ययसहः' व्ययं सहते यः, नैव क्षीयत इत्यर्थः। स्पष्टमन्यत्॥ ६३॥

कोषविनियोगमभिधातुमाह। धर्महेतोरिति प्रतीतं॥ ६४॥

श्लोकत्रयेण दण्डगुणमभिधातुमाह। पितृपैतामह इति। 'पितृपैतामहः' पित्रादिक्रमायातः। 'वश्यः'* विधेयः, 'संहतः' अविभिन्नः, 'दत्तवेतनः' कृतभरणः, 'विख्यातपौरुषोर्जस्कः'† प्रख्यातपुरुषत्वबलवत्त्वादि यस्य सः। 'कुशलः' सर्वायुधयुद्धकुशलः, 'कुशलैर्वृतः' आप्तैः निपुणैः अधिष्ठातृभिः परिवृतः अनुगतः॥ ६५॥

---

* वंश्य इति मु०। † विख्यातपौरुषोर्जित्य इति मु०।

तथा 'नानाप्रहरणोपेतः' नानाविधधनुराद्यायुधयुक्तः। सुगममन्यत् ॥ ६६ ॥

तथा, 'प्रवासायासदुःखेषु', इत्यादि प्रतीतं। 'अद्वैधक्षत्रियप्रायः',* 'द्वैधं' द्विधाज्ञानं, तत् यस्य नास्ति सोऽद्वैधः अद्वैधः क्षत्रियप्रायः इति क्षत्रियाः स्वभावत एव महासत्त्वा भवन्तीत्यर्थः। 'दण्डः' चतुरङ्गबलं, स एवंविधः 'दण्डविदां' आचार्याणां, 'मतः' मान्यः ॥ ६७ ॥

मित्रप्रकृतेर्गुणसम्पदमभिधातुमाह। त्यागेति। 'त्यागविज्ञानसत्त्वाढ्यं' लब्धत्वसर्वशास्त्रप्रवीणत्वाकुलीनविकारित्वसम्पन्नं। 'महापक्षं' बहुबन्ध्वादिवर्गं। 'प्रियंवदं' प्रियहितवदनशीलं। 'आयतिक्षमं' आगामिकालेऽव्यभिचारि। 'अद्वैधं'† नेतरि शत्रौ च द्विधाभावरहितं। 'सत्कुलं' सति उभयपक्षेऽपि व्यभिचारो नास्ति, तत् कदाचिदपि न व्यभिचरतीत्यर्थः। 'एवंविधं मित्रं कुर्वीत', इति स्पष्टं ॥ ६८ ॥

सत्कुलस्य गुणान् दर्शयन्नाह। कष्टेष्विति। 'कष्टेषु' दारुणेषु अप्रतिविधेयेषु, 'अच्छहृदयः' सहृत्, 'कुलीनः' सत्कुलजातः, 'चतुरस्रतां' ऐकरूप्यं, 'दर्शयति', स्पष्टं ॥ ६९ ॥

मित्रगुणं दर्शयन्नाह। पित्रिति। 'पित्र्यैतामहं' पित्रादिक्रमागतं, 'हृदयानुगं' मर्म्मज्ञं, 'महत्' महत्त्वगुणयुक्तं, 'लघुसमुत्थानं' आडम्बरशून्यं, 'मित्रं इष्यते', विजिगीषुणेति शेषः ॥ ७० ॥

मित्राणि त्रिविधानि भवन्तीति दर्शयन्नाह। दूरादेवेति। 'दूरादेवाभिगमनं' मित्रे समागते दूरादेवाभिमुखगमनं, 'स्पष्टार्थहृदयानुगा वाक्' एतादृशी वाक् वक्तव्या यस्या अर्थः स्पष्टो हृदयानुगतश्च भवति। 'सत्कृत्यप्रदानं' देयवस्तूनां प्रदानं सत्कारपूर्वकं कार्यमिति। 'त्रिविधो मित्रसङ्ग्रहः' इत्यनेनानन्तरोक्तेन उपायत्रितयेन मित्राणि संगृह्यन्ते, मित्राणि भवन्तीत्यर्थः ॥ ७१ ॥

मित्रात् धर्मार्थकामरूपफलमभिधातुमाह। धर्मेति। स्पष्टं ॥ ७२ ॥

---

* अद्वैधक्षत्रियप्राय इति मु०। † अद्वैधमिति मु०।

मैत्रीस्वरूपमभिधातुमाह। आदाविति। 'सतां' साधूनां, 'मैत्र्यः' मित्रताः, 'सरित्समाः' नदीसमानाः। कथमित्याह, 'आदौ तन्व्यः', जलप्रदेशस्यादावल्पत्वात्, 'वृहन्मध्याः', मध्यप्रदेशे बहुजलत्वात्, 'विस्तारिण्यः पदे पदे' स्थाने स्थाने विस्तारयुताः, 'यायिन्यो न निवर्त्तन्ते' निवर्त्तनशीला अपि न निवर्त्तिन्यः, प्रतिपन्ननिर्वाहणशीलत्वात्॥ ७३॥

कारणैरपि मित्रभेदानभिधातुमाह। औरसमिति। इत्थं कारणभेदेन मित्रं चतुर्विधं भवति, 'औरसं' सोदर्यसत्तं स्निग्धं प्रथमं। 'कृतसम्बन्धं' सम्बन्धजनितं द्वितीयं। 'वंशक्रमागतं' पितृपैतामहमिति तृतीयं। 'व्यसनेभ्यः' आपद्भ्यः, 'रक्षितं', चतुर्थं॥ ७४॥

भूयोऽपि मित्रगुणानभिधातुमाह। शुचितेति। 'शुचिता', अर्थव्यये। 'त्यागिता' व्यवहारविषयेऽलुब्धत्वं। 'शौर्यं' विजिगीषोः सहायतादानेऽभीरुत्वं। 'समानसुखदुःखता' विजिगीषुणा सह सुखदुःखभागित्वं। 'अनुरागः', विजिगीषौ। 'दाक्ष्यं' विजिगीषुकार्यसम्पादकत्वं। स्पष्टमन्यत्॥ ७५॥

विशदेन मित्रसम्बन्धमभिधातुमाह। *तदर्थेहानुरागश्चेति। 'तदर्था' विजिगीषुनिमित्ता। 'ईहा', यत्किञ्चिदीहते तत् सर्वं विजिगीषुहितार्थमेवेत्यर्थः। 'अनुरागश्च' विजिगीषुहितसाधने। 'संक्षिप्तं'। एतत् गुणद्वयरूपं, 'मित्रलक्षणं', मित्रत्वे लिङ्गमित्यर्थः। अन्यत् स्पष्टं॥ ७६॥

उपसंहरन्नाह। इति स्मेति। 'इति' उक्तप्रकारेण, 'राज्यं सकलं' समाङ्गं, 'समीरितं' व्याख्यातं। 'अस्य' राज्यस्य, 'परा' उत्कृष्टा, 'प्रतिष्ठा' स्थितिहेतुः, 'धनं' कोशः, 'ससाधनं' साधनं चतुरङ्गो दण्डः तेन सह वर्त्तमानं। 'गृहीतं' प्रविष्टहीनं, 'एतत्' राज्यं, 'नि-

---

* तदर्थे अनुरागश्चेति मु०।

पुणेन मन्त्रिणा', 'त्रिवर्गनिष्पत्तिमुपैति', इति स्पष्टं, 'शाश्वतीं' चाविनश्वरां ॥ ७७ ॥

यथाऽस्य राज्यस्य ससाधनं धनं यदा प्रतिष्ठा स्यात्, निपुणेन मन्त्रिणा प्रतिगृहीतं च तत् त्रिवर्गमुपैति, तथैवान्तरात्मसमवेतस्वामिनाऽधिष्ठितं राज्यं तादृशफलकारि इति दर्शयन्नाह। यथान्तरात्मेति। 'अन्तरात्मा' प्रसिद्धः। 'समश्नुते' व्याप्य तिष्ठति,। पक्षे 'प्रकृतिः' स्वभावः, पक्षान्तरे अमात्यादिका। स्पष्टमन्यत् ॥ ७८ ॥

किञ्च, प्रकृतिभिरिति। उक्तगुणसम्पद्भिः 'प्रकृतिभिः' अमात्यादिकाभिः, 'सम्यगर्पितः' सम्पन्नः, 'जनपदं' राष्ट्रं 'आदरवान्' आदरी, 'पालयेत्' वर्द्धयेत्। 'जनपदपरिपालनात्', परमसम्पद्धेतोःप्रदस्य, 'परमं श्रियः पदं', 'चिरं' बहुकालं 'स्पृशति' 'एकच्छत्रं' पृथिवीपतित्वं प्राप्नोतीत्यर्थः ॥ ७९ ॥

एतदेव समर्थयन्नाह। प्रकृतिगुणसमन्वित इति। 'प्रकृतिगुणसमन्वितः' प्रकृतिगुणसम्पत्प्रकरणोक्तगुणैः कुलशीलादिभिरन्वितः। 'सुधीः' सविद्यः, 'नृपः', 'सुदुर्जयतां' अत्यन्तजयतां, 'व्रजति' प्राप्नोति। अनन्तरं 'सः' नरपतिः, 'रणेषु' समरेषु, 'विद्विषां' शत्रूणां, 'प्रबल इव' प्रचण्ड इव, 'श्वसनः' महावातः, 'पयोमुचां' मेघानां। प्रचण्डपवनेन मेघा यथा खण्डशः क्रियन्ते, तथा प्रकृतिगुणसमन्वितेन राज्ञा शत्रव इत्यर्थः ॥ ८० ॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां प्रकृतिसम्पत्कथनं चतुर्थः सर्गः ॥ ※ ॥

---

अनन्तरं स्वामिनोऽनुजीविनाञ्च गुणसम्पदुक्ता, प्राधान्यात् तेषां पुनः कथनमिति दर्शयन्नाह। *वृत्तस्थमिति। 'वृत्तस्थं वृत्तिसम्पन्नं'। वृत्तमनुष्ठानं, विजिगीषुवृत्तं पृथिवीपालनादिकं, तस्मिन् तिष्ठतीति स तं। 'वृत्तिसम्पन्नं' वृत्तिहेतुत्वात् कोषो वृत्तिस्तत्सम्पन्नं। 'कल्पवृक्षोपमं' ईप्सितफलप्रदं, 'नृपं' स्वामिनं। 'अभिगम्यगुणैर्युक्तं' कुलशीलादिभिः पूर्वोक्ताभिगामिकगुणैः सम्पन्नं, 'अनुजीविनः' मन्त्रिप्रभृतयः 'सेवेरन्' सेवकत्वेन उपतिष्ठेरन् ॥ १ ॥

एतदेव दर्शयन्नाह। द्रव्यप्रकृतीति। 'द्रव्यप्रकृतिहीनोऽपि' कोषप्रकृतिविहीनोऽपि। †'सेव्यः' स्वामी, 'सेव्यगुणान्वितः' आभिगामिकगुणयुक्तः। कस्मादित्याह। यस्मात् स्वामिनः 'कालान्तरादपि', 'श्लाघ्यं' स्पृहणीयतरं, 'आजीवनं' भरणं भवति ॥ २ ॥

असेव्यस्वामिनमभिधातुमाह। अपीति। 'पण्डितः' विवेकी, 'क्षुधा', 'परिगतः' क्षुधार्तोऽपि, 'स्थाणुरिव' छिन्नशाखद्रुम इव, 'आसीत' तिष्ठेत् 'न त्वेव' न कदाचित्, 'अनात्मसम्पन्नात्' अनन्तरोक्तादात्मसम्पद्गुणरहितात्, 'वृत्तिं' आजीवनं, 'ईहेत', ॥ ३ ॥

एतदेव दर्शयन्नाह। 'अनात्मवान्' इति स्पष्टं। नयं द्वेष्टुं शीलं यस्य सः 'नयद्वेषी'। 'वर्द्धयन्नरिसम्पदः' ‡अनात्मवत्त्वेनैवारीणां सम्पदो वर्द्धयति। 'महदैश्वर्यं', 'प्राप्यापि' काकतालीयवत् प्राप्यापि, 'सह तेन विपद्यते' तेनैवैश्वर्येण सह विनश्यति, अतो नानात्मवान् सेव्य इति भावः॥ ४ ॥

एतदेव समर्थयन्नाह। लब्धावकाश इति। 'लब्धावकाशः' प्राप्तसेवावसरः, 'निपुणं' §यथा स्यात्तथा, 'अविकारवान्' स्वामिनि सर्वप्रकारविकाररहितः, 'स्थाने' सचिवादिपदे, 'स्थैर्यं' स्थिरत्वं,

---

* ईत्यर्थहतिसम्पन्ना इति मु०।　　† सेव्यते सद्गुणान्वितः इति मु०।

‡ वर्धयन्नरिसम्पदः इति मु०।　　§ निपुणः इति मु०।

'अवाप्नोति', बुद्धिसाध्येषु अनुष्ठानेषु, 'निश्चितः' ग्रस्तनिश्चयः। इति संक्षिप्तमिदमनुजीविवृत्तं ॥ ५ ॥

अनुजीविना नोभयलोकविरुद्धं आजीवमभिलषणीयमिति दर्शयन्नाह, आयत्यामिति। 'आयत्याम्' आगामिनि काले, 'तदात्वे च' वर्त्तमानकाले च, 'यदाखादयेप्सितं' यत् आखादरमणीयं, 'तत्', क्लिश्यन्नपि क्षुधयेति शेषः। 'कुर्वीत', अर्थाधिकारी, 'न लोकद्विष्टमाचरेत्' न इहलोकविरुद्धमाचरेत् ॥ ६ ॥

कोऽयवान् कल्पवृक्षोऽपि अशुभात्मको म्लेच्छादिर्न सेव्यते इति दर्शयन्नाह। तिलास्रेति। 'तिलाः' शस्यविशेषाः, 'चम्पकपुष्पसंश्लेषात्' तिलमध्यन्यस्तनागचम्पकसम्पर्कात्, 'तदधिवासतां' तद्गन्धित्वं, 'प्राप्नुवन्ति',। ततश्च पीडितेषु तिलेषु चम्पकतैलं भवतीति संसर्गजोऽयं गुणः। 'रसो न भक्ष्यः', गुणैरिति शेषः। 'तद्गन्धः', रसो न भवति किन्तु गन्ध एवेति संसर्गजोऽयं दोषः। एवं 'सर्वे गुणाः' समस्ताः पुरुषधर्माः, 'साङ्गमिकाः' सङ्गमशीलाः। तस्मादविशुद्धः सङ्गः परित्यज्य इति ॥ ७ ॥

एतदेव समर्थयन्नाह। अपामिति। 'अपां' जलानां, 'प्रवाहः' ओघः, *'गाङ्गोऽपि' अमृतमयोऽपि, 'समुद्रं' क्षारं, 'प्राप्य' गत्वा 'तद्रसः' क्षारः, 'भवति', 'अवश्यं' †निःसन्देहं, 'तत्' तस्मात्, 'विद्वान्' पण्डितो विवेकी, 'अशुभात्मकं' अकुलीनं म्लेच्छादिकं, 'नाश्रयेत्' न सेवेत, तत्सङ्गात् तत्सम एव भवतीति ॥ ८ ॥

तदेव द्रढयितुमाह। क्लिश्यन्नपीति। 'क्लिश्यन्नपि' दौर्गत्येन बुभूक्षादिभिः क्लेशं गच्छन्नपि, 'शुद्धं' न्याय्यं, 'जीवनं' जीविकां, 'आचरेत्' आतिष्ठेत्। जीवनस्य शुद्धता यथोक्तसेवाधर्मादिगतत्वं। 'तेन' जीवनेन, 'इह' लोके, 'श्लाघ्यतां' स्पृहणीयतां, 'एति', 'लोकेभ्यश्च' इह परलोकवन्धुलोकेभ्यश्च, 'न हीयते' न च्यवते' ॥ ९ ॥

---

* गाङ्गो वेति मु०। † अपेथ इति मु०।

सेव्यस्वामिस्वरूपमभिधातुमाह। अभिगम्यमिति। 'अभिगम्यं', विन्ध्यपक्षे उन्नतिमत्त्वात्, ईश्वरपक्षे बहूनां मध्ये त्यागशौर्यादिभिर्लब्धकीर्त्तित्वात्। 'स्थिरं',विन्ध्यपक्षे स्वस्थानात्, ईश्वरपक्षे स्थितेः शास्त्रमर्यादाया अविचलत्वात्। 'पुण्यं', उभयतः पुण्ययोगात् महाकुलोत्पन्नत्वाच्च। 'ख्यातं', उभयतो महत्त्वात् महामहिमत्वाच्च। 'साधुनिषेवितं' *साधुभिः सिद्धिमिच्छुभिः समधिष्ठितं। 'विन्ध्यमिवेश्वरं सेवेत', स्पष्टमन्यत्। १०।

अभिमतगुणः स्वामी न प्राप्यते इत्याशङ्क्याह। दुरापमिति। 'दुरापमपि' दुष्प्रापमपि, 'अस्मिन्' जगति, 'यद्वस्तु' धर्मार्थकाममोक्षादिकं, 'अभिवाञ्छति' अभिलषति, अर्थात् उद्यमी पुरुषः। 'मेधावी' प्राज्ञः, 'तत्तदाप्नोति', शिष्टं स्पष्टं। ११।

आभिगामिकगुणोपेतस्वामिप्राप्त्यर्थं अनुजीविगुणानभिधातुमाह। आरिराधयिषुरिति। 'अनुजीवी' सेवकः, 'महीपतिं', 'सम्यक्' निरुपचरितत्वेन, 'आरिराधयिषुः' आराधयितुमिच्छुः सन्, 'विद्याविनयशिल्पाद्यैः' आन्वीक्षिक्यादिशास्त्रविधेन्द्रियजयस्वकलाव्याख्यानप्रभृतिभिर्गुणैः, 'आत्मानं' 'उपपादयेत्' सम्पन्नं कुर्यात्। १२।

श्लोकद्वयेनैतदेव स्पष्टयन्नाह। कुलविद्येति। पूर्वार्द्धं स्पष्टं। 'वपुः' शरीरं, यथोक्तप्रमाणं, 'सत्त्वं' उत्साहलक्षणं, 'बलं' महाप्राणता, 'आरोग्यं' रोगाभावः, 'स्थैर्यं' प्रतिष्ठितत्वं, 'शौचं' उपधाशुद्धिः, 'दया' कारुण्यं, एभिर्गुणैः 'अन्वितः'। १३।

किञ्च, 'पैशुन्यं' खलता, 'द्रोहः' विश्वासघातित्वं, 'सम्भेदः' संहतभेदनशीलता, 'शाठ्यं' नैकृत्यं, 'लौल्यं' आहारादिलोलुपत्वं, 'अनृतं' असत्यं,तानि अतिगच्छति तैः रहित इत्यर्थः। 'स्तम्भः' स्तब्धता, प्रश्रयराहित्यमित्यर्थः, 'चापलं' अप्रतिष्ठितत्वं, ताभ्यां हीनः। 'चकारादुक्तगुणैर्युक्तः सेवकदोषैर्विहीनश्च यः स 'सेवनं कर्त्तुमर्हति', स्पष्टं। १४।

---

* सिद्धैर्निषेवितमिति मु०।

अलङ्करणभूतान् सेवकगुणानभिधातुमाह। दक्षतेति। 'दक्षता' कौशलं आशुकारित्वञ्च। 'भद्रता' भद्रकारित्वं, 'दार्ढ्यं' स्थिरस्नेहता, 'क्षान्तिः' क्षमा,'क्लेशसहिष्णुता' क्षुधाद्यादिबाधासहनशीलत्वं। 'सन्तोषः' अविषादिता, 'शीलं' सत्स्वभावः, 'उत्साहः' शौर्य्यामर्षदाक्ष्यलक्षणः, स्पष्टमन्यत्॥ १५॥

प्रधानतरं सेवकगुणं दर्शयन्नाह। अर्थेति। अर्थार्थी जीवलोकोऽयमित्यर्थशौचं दुष्करं, न चानेन विश्वासः स्यादित्याह, 'अर्थशौचपरः', इति, 'स्वयं', 'विश्वासयेत्' स्वस्मिन् विश्वस्तं कुर्यात्, विश्वस्ता सेवा सम्पद्यत इति भावः। अवशिष्टं प्रतीतं॥ १६॥

अनुजीविवृत्तं सेवाधर्मविषयमभिधातुमाह। प्रविश्येति। 'प्रविश्य', प्रियहितद्वारेण राजसभां। 'सम्यगुचिते' प्रतीहारनिर्द्दिष्टे, 'स्थाने', 'तिष्ठन्', वक्ष्यमाणन्यायेन "*सुवेषवान्' निर्मलानुद्धतवेशवान्। 'विनयान्वितः' प्रश्रयवान्, स्पष्टमन्यत्॥ १७॥

तत्र सभायां यत् कर्त्तव्यं तदभिधातुमाह। परेति। 'परस्य' अन्यसेवकस्य, 'स्थानं' प्रदेशं, 'आसनं', च 'क्रौर्य्यं' क्रूरभावं, 'औद्धत्यं' असामान्यवेशत्वं, 'मत्सरं' विद्याशौर्य्याद्यसहनत्वं, 'ज्यायसा' अधिकेन सह, 'विरुद्ध्य कथनञ्च' विरोधपूर्व्विका कथा, 'न कुर्यात्', अनुजीवीत्यर्थः॥ १८॥

किञ्च, विप्रलम्भेति। पूर्व्वार्द्धं स्पष्टं। 'पुत्रेभ्यः' स्वामिपुत्रेभ्यः, 'वल्लभेभ्यश्च' प्रियपार्श्वचरेभ्यः, 'नमस्कुर्यात्',। ते हि प्रश्रयेणाराधिताः स्वामिनमनुकूलं कुर्व्वन्तीति भावः॥ १९॥

अपरञ्च, न नर्मेति। 'नर्मसचिवाः' विदूषकामात्याः, यैः सह स्वामी नर्मालापं करोति, अवशिष्टं स्पष्टं। २०।

अपरञ्च, भर्त्तुरिति। 'अन्वासने' समीपस्थाने, 'तिष्ठन्',। 'किं','अयं'

---

* सु वेषवान् इति मु॰।

खामी, 'कुर्यात्', इति 'अस्यास्यं विलोकयन् तिष्ठेत्', स्पष्टमन्यत् ॥२१॥

किञ्च, क इति। स्वामिना 'कोऽत्र' इत्यादिष्टः 'अहं', अत्र तिष्ठामि 'इति', 'सम्यक् आज्ञापयेति च', ब्रूयात्। 'आज्ञां', दत्तां 'यथाशक्ति'* अलङ्घनक्रमेण, 'अविलम्बितं' सत्वरं, 'अवितथीकुर्यात्', एवं करोमीति सत्यसम्पादनेनेत्यर्थः ॥ २२ ॥

किञ्च, उच्चैरिति। उच्चैः प्रहसनादिकं वर्जयेदिति प्रतीतं ॥ २३ ॥

भावज्ञावसरे यदभिजल्पितव्यं तदुपदेष्टुमाह। प्रविश्य सानुरागस्येति। 'सानुरागस्य' अनुरागवतः, स्वामिनः 'चित्तज्ञसम्मता' अपरेषामपि चित्तज्ञानां सम्मतः, 'समर्थयंश्च तदर्थं' स्वामिपक्षं संस्थापयन्, 'भावितः' एवः सन्, 'साधु भाषेत', स्पष्टमन्यत् ॥ २४ ॥

प्रस्तावान्तरमभिधातुमाह। तन्नियोगेनेति। 'तन्नियोगेन' स्वामिनियोगेन, 'अर्थे', वाक्यस्य, 'सुपरिनिश्चितं' सुनिर्णीतं, 'सुखप्रवृत्तगोष्ठीषु' सुखार्थं प्रवृत्ता या गोष्ठ्यः परिषदः तासु, 'विवादे', शास्त्रोक्तजल्पे, 'वादिनां', मनोषिणामपि 'मतं' अभिप्रायं, च 'ब्रूयात्', ॥ ॥ २५ ॥

अभाषणीयमभिधातुमाह। विज्ञानमपीति। 'भर्त्तुः क्षिप्तोत्तरं वचः' येन भर्त्ता निरुत्तरो भवति। 'प्रवीणोऽपि' भाषणे कुशलोऽपि, 'अभिमानितां' स्वामिविषयिणीं। अभिमानात् न स्वामी निरुत्तरः कार्यः इति भावः। स्पष्टमन्यत् ॥ २६ ॥

विद्याशिल्पविषये यत्र ब्रूयात् तदभिधातुमाह। यदप्युच्चैरिति। 'उच्चैः' अतिशयेन, 'यदिजानीयात् तदपि नोच्चैः', 'कोर्त्तयेत्' किञ्चिदत्र जानामीति ब्रूयात्, 'कर्मणा' क्रियया, 'तस्य वैशिष्ट्यं कथयेत्', न वाचा तथापि 'विनयान्वितः' प्रश्रययुक्तः सन्, ज्ञानगर्व्वो न युक्त इति भावः ॥ २७ ॥

अपरस्यापि कार्य्यविशेषात् भाषणमभिधातुमाह। आपदीति।

---

* यथाशक्त्या इति मु०।

'व्यापदि' परप्रयुक्तातीक्ष्णादिप्रारब्धायां, 'उन्मार्गगमने' स्वामिनः शास्त्रविरुद्धाचरणे, 'कार्यकालात्ययेषु' स्वामिनः कार्याणामनुगुणका-लातिक्रमेषु, 'च', स्पष्टमवशिष्टं ॥ २८ ॥

किञ्च, प्रियमिति। 'प्रियं' अभीष्टं, 'पथ्यं' हितं, 'तथ्यं' सत्यं, यत् भवेत् तत् 'धर्मार्थमेव वदेत्', । 'अश्रद्धेयं' श्रद्धातुमयोग्यं, '*असभ्यं' अश्लीलादि, 'परोक्षं', यदश्रद्धेयमिति सम्बन्धः। 'कटु' श्रुतिकटु, 'उत्-सृजेत्, न ब्रूयादित्यर्थः, ॥ २९ ॥

किञ्च, परार्थमिति। प्रविश्य सानुरागस्य चित्तं चित्तज्ञसम्मत इत्या-पद्यपि 'परार्थं', स्वामिनं विज्ञाप्य, 'स्वार्थं च साधयेत्', 'देशकालज्ञः' यस्मिन् देशे स्थितः स्वामी कार्यम् करोति यस्मिंश्च काले तौ जानाति इति तज्ज्ञः अनुजीवी, तत्र देशे काले चार्थं साधयेत्। स्पष्टम-न्यत् ॥ ३० ॥

अपरञ्च, गुह्यमिति। 'गुह्यं' गोपनीयं, 'कर्म' शत्रुविषये अभि-चारादिकं, 'मन्त्रञ्च', भर्तृसम्बन्धिनं 'न प्रकाशयेत्', तथा 'भर्तुर्वि-द्विष्टिं' राज्यभ्रंशादिकं, 'विनाशं' मरणं, स्पष्टमन्यत् ॥ ३१ ॥

किञ्च, स्त्रीभिरिति। कामः शुद्धो न भवतीति शङ्कानिरासार्थं 'स्त्रीभिः', तत्सङ्गाततपातकशङ्कानिरासार्थं 'पापैः' पातकिभिः, अ-हितगत्यागमशङ्कानिरासार्थं 'वैरिदूतैः', 'निराकृतैः' दोषात् स्वामि-ना दूरीकृतैः सह, 'एकार्थचर्या' एकमर्थमुद्दिश्य सहचर्या, 'सा-हित्य' सङ्गतं, 'संसर्गं च' सर्वदा मिलिताऽवस्थानं, 'विवर्जयेत्' ॥ ३२ ॥

किञ्च, वेशेति। 'पृथिवीपतेः', 'वेशः' नेपथ्यादिः, 'भाषा' स्वामिना व्युत्पादिता, एतद्द्वयस्य 'अनुकरणं', 'न कुर्यात्', 'तद्गुणैः' राजगुणैः, 'सम्पन्नोऽपि', 'मेधावी' प्राज्ञो ऽनुजीवी, 'न च स्पर्द्धेत', तद्गुणैर्विद्धो राजाऽन्यथा भवतीत्यर्थः ॥ ३३ ॥

---

* असत्यमिति मु०।

किञ्च, रागेति। 'भर्त्तुः' स्वामिनः, 'रागः' अनुरक्तता, 'अपरागः' विरक्तता, तौ, 'जानीयात्', 'कुशलकर्मकृत्' अन्यैरपि कुशलैर्यत् कर्म-कृतं तत् कर्म करोति यः। नहि कर्मकरणाभावे रागापरागौ ज्ञातुं शक्येते। काभ्यां जानीयादित्याह, 'इङ्गिताकारलिङ्गाभ्यां' इङ्ग्यते ज्ञायते हृदयस्थोऽर्थो येन तदिङ्गितं अन्यथावृत्तिः, पूर्वरुत्तायाः प्रसन्नादिकाया आकृतेरान्तरग्रहणं 'आकारः', तयोर्लिङ्गे चिह्ने ताभ्यां। 'इङ्गिताकारतत्त्ववित्', इति अनुजीविविशेषणं ॥ ३४ ॥

उक्तलिङ्गस्वरूपमभिधातुमाह। दृष्ट्वेति। 'दृष्ट्वा प्रसन्नो भवति', इति आकारलिङ्गं। 'वाक्यं गृह्णाति चादरात्', इति इङ्गितलिङ्गं। स्पष्टमन्यत् ॥ ३५ ॥

किञ्च, विविक्तेति। 'विविक्तदर्शनस्थाने' एकान्तदर्शने तादृशस्थाने च, 'रहस्ये' गोपनीये कार्ये, 'न शङ्कते', विश्वासयोगात्। 'तदर्थौ' अनुजीविविषयिणौ, 'तत्कृतां' अनुजीविकृतां, 'सङ्कथामनुवैराकर्णयति', ॥ ३६ ॥

किञ्च, श्लाघते इति। अन्येषु 'श्लाघनीयेषु' कीर्त्त्यमानेषु, स्वामी 'श्लाघते'। 'श्लाघ्यमानञ्च' अन्यैः कीर्त्त्यमानमनुजीविनं, 'नन्दति' अभिनन्दति, 'कथान्तरेषु', अन्यैः क्रियमाणेषु ईदृश एवासौ इति 'स्मरति'। यादृशोऽयं तादृशो नान्य इति 'प्रहृष्टः', 'गुणान्' तद्गुणान् 'कीर्त्तयेत्', इति स्पष्टं ॥ ३७ ॥

अपरञ्च, सहत इति। '*अपथ्यं' अहितं, '†उक्तोऽपि' अनुजीविना 'सहते' समर्थयति, 'निन्दां', तत्कृतामपि 'नानुमन्यते', 'करोति वाक्यं', अनुजीविना 'प्रोक्तं,' 'तद्वचः' अनुजीविवचनं, 'बहु मन्यते', ॥ ३८ ॥

अनुरक्तस्य स्वामिनो लक्षणमुक्त्वा विरक्तस्य तदभिधातुमाह। उप-

---

* सहते पथ्यमिति मु०। † उक्तमिति क०।

कार्य्येष्विति। 'उपकारेषु प्रकृतेष्वपि', अनुजीविना कृतेषु, विस्मृतत्वात् 'माध्यस्थं', एव 'दर्शयति', स्पष्टं शेषार्द्धं ॥ ३९ ॥

किञ्च, विपक्षमिति। 'विपक्षं' शत्रुभूतं अनुजीविनं, 'उत्थापयति' उद्वेजयति, 'विनाशं च', विपक्षादिभिः क्रियमाणं 'उपेक्षते', 'कार्य्ये', तत्साध्ये समुपस्थिते, 'संवर्द्धयत्याशां' कार्य्यनिष्पत्तौ सत्यां दारिद्र्यमोक्षं ते करिष्यामीत्याशां संवर्द्धयति। 'फले च', साधिते, 'कुरुतेऽन्यथा' त्वया नैतत् साधितमिति, ॥ ४० ॥

अपरञ्च, यद्वाक्यमिति। स्वामी अनुजीविविषये 'यत् किञ्चित् मधुरं वाक्यं', प्रयुङ्क्ते 'तदपि अर्थेन निठुरं' यथा भद्र त्वया अहितैषिणा विपक्ष उपेक्षितो ममैव समग्रं यशो दातुं इति मधुरं भाषते, तदर्थस्तु विपक्षपक्षपाती भवान् इति। तथा 'आत्मप्रशंसास्तु', अनुजीविना कृतासु, 'परीवादं' निन्दादिकं, 'केवलमाचरति', ॥ ४१ ॥

किञ्च, अकोपेऽपीति। मा किमप्ययमनुजीवी प्रार्थयतु इति 'अकोपेऽपि', 'सकोपाभः' कुपित इवाभाति। 'प्रसन्नः', कैतवेन 'निप्प्रसन्नः', '*भवति', 'अकस्मात् व्रजति', अकादयं मद्दृष्टिपथेऽवतिष्ठते इति स्पष्टमन्यत् ॥ ४२ ॥

अपरञ्च, आघट्टयतीति। †'मर्म्माणि' दुश्चरितानि, 'आ' समन्तात्, 'घट्टयति' स्पृष्टमेव वक्ति, '‡गुणान न बहुमन्यते' प्रासस्थानं अनुजीविप्रस्तावितं न मन्यते न प्रसतीत्यर्थः। 'सम्भावयति दोषेण' आत्मनो दुष्कृतं गोपायितुं अविद्यमानेनापि दोषेण अनुजीविनं योजयति। 'वृत्तिच्छेदं च करोति', स्पष्टं ॥ ४३ ॥

किञ्च, साधूक्तमिति। '§यद्वाक्यं' अनुजीविवाक्यं, 'साधूक्तमपि', 'अन्यथा समर्थयति' असाध्विति योजयति। 'अपर्व्वणि' अयथास्थान

---

* वदतीति मु०। † मन्त्राणि इति मु०।

‡ गुणान् प्रासं प्रस्थानं इति मु०। § मद्वाक्यमिति मु०।

एव, 'कथाभङ्गं करोति' तूष्णीम्भावमापद्यते । 'विरक्तीभवन्' अस-न्तोषमभिगच्छन्नित्यर्थः ॥ ४४ ॥

किञ्च, उपास्यमान इति । 'सततञ्च विचेष्टते' सुप्त इव वर्त्तते, तत् सेवां निष्फलां कर्त्तुमित्यर्थः । शिष्टं सुगमं ॥ ४५ ॥

अपरञ्च, इत्यादीति । 'इत्यादि' इत्युक्तमादौ कृत्वा अन्यदपि अनुरक्तविरक्तलक्षणं विद्यते, तदपि लोकतो ग्राह्यं । ततश्च 'रक्तात्', स्वामिनः, 'वृत्तिं समीहेत', अनुजीवी, '*विरक्तञ्च परित्यजेत्', नि-ष्फलत्वात् अनर्थहेतुत्वाच्च ॥ ४६ ॥

अस्यापवादमभिधातुमाह । निर्गुणमिति । श्लोकार्थः सुगमः । स-तस्य व्यसनतयाऽस्य बह्वपकरोतीति भावः ॥ ४७ ॥

आपत्सूपकारस्य गुणं दर्शयितुमाह । †स्वस्थवृत्तेष्विति । 'स्वस्थ-वृत्तेषु' अनाकुलेषु प्रभुषु, 'सत्त्वाद्याः' अनुजीविगुणाः, 'अभिव्यक्ततां', नैव यान्ति' न प्रकाशन्ते, किन्तु ‡'विरोधे', समुपस्थिते 'धर्मधुर्याणां', 'सेवां' अनुजीविनां, 'नामातिरिच्यते' यथाऽनेनानुजीविना विपक्ष-विरोधी स्वामी रक्षित इति श्रेयानुजीविमध्ये तस्य नामातिरिच्यते पौर्य्यातिरिक्तं भवतीत्यर्थः ॥ ४८ ॥

एतदेव समर्थयन्नाह । श्लाघ्येति । 'महतां' स्वाम्यादीनां, 'उपका-रिता' आपत्सु परित्राणादिका, 'स्वल्पापि', 'काले' कालप्रभावे, 'सम-योदयं' महाभ्युदयसम्पन्नं, 'कल्याणं' अभ्युदयं, 'आधत्ते' करोति ॥ ४९ ॥

केवलमनुजीविवृत्तमभिधाय बन्धुमित्रसाधारणमभिधातुमाह । अकार्य्ये इति । 'अकार्य्ये' शास्त्रनिषिद्धाचरणे, 'प्रतिषेधः' निवारणं, 'कार्य्ये' धर्मार्थफले, 'अनुवर्त्तनं' क्रियतामेतदित्यनुष्ठानं । 'संक्षेपात्' समासतः, 'बन्धुमित्रानुजीविनां', 'इति सद्वृत्तं' एतत् शोभनं चरितं, ॥ ५० ॥

प्रसङ्गतो बन्धुमित्रवृत्तमुद्दिष्टमपि भूयोऽप्यनुजीविनां वृत्तमभिधातु-

* विरक्तञ्चेति मु० । † स्वस्थवृत्तेष्विति मु० । ‡ विपत्स्विति मु० ।

माह, पानेति। 'पानस्त्रीद्यूतगोष्ठीषु', मद्यकामं योगपानैः, परस्त्रीकामं अनार्याङ्गनाभिः अमेध्याभिः, द्यूतकामं कापटिकपुरुषैः नोद्वेजयेयुरिति बुद्ध्या 'अभितः' चतुर्दिक्षु, स्थिताः 'चराः' अनुजीविनः, 'बोधयेयुः' आख्यानकादिभिरित्यर्थः। ततः 'प्रमाद्यन्तं' राजप्रणिधौ निरुद्वेगं, *'मालिकादिभिः' सामादिभिः, 'उपायैः', ॥ ५१ ॥

किञ्च, राजानमिति। 'विवर्त्मसु' विरुद्धाचरणेषु, 'सज्जमानं' आसक्तिं गच्छन्तं, 'राजानं', 'ये हि†' अनुजीविनः, 'उपेक्षन्ते' न निवारयन्ति, 'अकृतात्मानः' असंस्कृतात्मानः, स्पष्टं शिष्टं ॥ ५२ ॥

राजोपासनाक्रममभिधातुमाह। जयेति। 'जयजीव', इत्यादिवचनं स्वामिसमाह्वानप्रभृतिकार्यावसरे वक्तव्यमेव। शिष्टं सुगमं ॥ ५३ ॥

अनुजीविनां संक्षिप्तगुणानभिधातुमाह, भर्तुरिति। पूर्वार्द्धं स्पष्टं। 'हि' यस्मात्, 'रक्षांस्यपि' क्रूरकर्मकारीण्यपि, 'गृह्यन्ते' वशीक्रियन्ते, 'नित्यं', 'छन्दानुवर्त्तिभिः', सेवकैः मनुष्यास्तु गृह्यन्त एवेत्यर्थः। छन्दानुवर्त्तनं वशीकरणं ॥ ५४ ॥

परचित्तवृत्तयो दुर्ग्राह्या भवन्तीत्याशङ्क्याह। धीसत्त्वेति। 'धीः' अष्टगुणा प्रज्ञा, 'सत्त्वं' व्यसनेऽभ्युदये चाविकारित्वं, 'उद्योगः' उद्यमः, एतद्गुणत्रय'युक्तानां', 'महात्मना' आत्मसम्पदुपेतानां, 'किं', नाम 'दुरापं' दुष्प्रापं, अपितु सर्वमेव प्राप्यं। शेषार्द्धं स्पष्टं ॥ ५५ ॥

उक्तगुणहीनस्तु न कुतश्चित् किञ्चिदासादयतीति दर्शयन्नाह। अलसस्येति। प्रतीतं ॥ ५६ ॥‡

एवमनुजीविवृत्तमभिधाय स्वामिवृत्तमभिधातुमाह। आजीव्य इति। 'आजीव्यः' अनुजीवनीयः, 'सर्वभूतानां' सर्वप्राणिनां दाना-भयरक्षणादिभिः, 'राजा' प्रजापतिः, 'पर्जन्य इव' जीमूत इव, '§भवेत्' 'निराजीव्यं' वृत्त्यभावात्, 'एनं' राजानं, 'त्यजन्ति',

* नाडिकादिभिरिति मु०। † येत्नीति कु०।
‡ 'ये शूराः' अप्रियापि' इति श्लोकावेतौ शो० का० सटीकपु० न स्तः।
§ भवति इति पु०।

'*शुष्कं' निर्जलं, 'सर इव' तड़ागमिव, 'खगजाः' पक्षिणो हंसादयः। तस्मात् राज्ञा दानशीलेन भवितव्यं। स्वामी शक्तिसम्पन्नोऽप्यदाता चेत् न सेव्यत इत्यर्थः ॥ ५९ ॥

एतदेव समर्थयन्नाह। कुलमिति। 'कुलं' सोमसूर्य्यवंशप्रभवं, 'वृत्तं' रामयुधिष्ठिरवत् सदनुष्ठानं, '†श्रुतं' सर्वशास्त्रमारङ्गमत्वं, 'शौर्य्यं', परशुरामसमानं, 'सर्वमेतत्', 'न शक्यते' आश्रयणीयत्वेनेखेमारोप्यते, एभिर्गुणैरेव स्वामी नाश्रयणीयो भवतीत्यर्थः। शेषार्द्धं स्पष्टं ॥ ६० ॥

प्रसङ्गात् सधनप्रशंसां श्लोकद्वयेनाह, लक्ष्मीरेवेति। उत्थिता एवेति। स्पष्टं ॥ ६१ ॥ ६२ ॥

भूयोऽपि स्पष्टयन्नाह। यथार्थीति। 'यथार्थी' जीविकोपकरणप्रार्थयिता, 'जीवलोकः' जीवचयः, 'ज्वलन्तं' दानशक्त्या प्रज्वलन्तं पार्थिवं, 'उपसर्पति' समीपं गच्छति, एवमर्थार्थी परिजनोऽपि। अतएव 'वत्सः' तर्णकः, 'क्षीणक्षीरां' दुग्धहीनां 'मातरं', 'त्यजति' ॥ ६३ ॥

भृत्यभरणमभिधातुमाह। अज्ञापयन्निति। 'आत्मज्ञापयन्' पाकयापनमकुर्वन्, 'नृपः', 'भृत्यानां' भरणार्हाणां, '‡अनुवर्त्तिना' इच्छानुविधायिना अनुजीविना, 'कर्मणामानुरूप्येण' 'वृत्तिं' जीविकां, 'समनुकल्पयेत्' दद्यात् ॥ ६४ ॥

भृत्तिविलोपे दोषं दर्शयन्नाह। कान्त इति। स्पष्टं ॥ ६५ ॥

अपात्रे दाननिषेधमभिधातुमाह। अपात्रवर्षमिति। 'अपात्रवर्षं' असत्पात्रे धनदानं, 'जातु' कदाचिदपि, 'न कुर्य्यात्', यतस्तत् 'सद्विगर्हितं' सद्भिर्निन्दितं, निष्फलत्वात्। तथाच 'अपात्रवर्षणात् किमन्यत् स्यात् 'कोशक्षयादृते',केवलं कोशक्षय एव स्यादित्यर्थः ॥ ६६ ॥

---

* शुष्कवर्षमिति मु०। † श्रुतमिति मु० पु० नास्ति।
‡ अनुजीवनामिति मु०।

पात्रस्वरूपसूचनपूर्वकं तत्सङ्ग्रहार्थमाह। कुलमिति। 'कुलं' शुद्धोभयपक्षतां, 'विद्याश्रुतं'* आन्वीक्षिक्यादिश्रवणं, 'शौर्यं' अभीरुत्वं, 'शौशील्यं' सुशीलतां, 'भूतपूर्वतां' पितृपैतामहागततां, 'वयोऽवस्थां' यौवनावस्थां, 'समीक्ष्य' निरूप्य, 'स्वादियेत' सुन्दरं पात्रं गृह्णीयात्। 'महात्मवान्' 'विजिगीषुः' ॥ ६७ ॥

पात्रभूतानामनादरे दोषं दर्शयन्नाह। कुलीनानिति। 'कुलीनान्' महाकुलप्रसूतान्, 'नावमन्येत,' 'सम्यग्वृत्तान्' सदाचारान्, 'मनस्विनः' प्रज्ञायुक्तान्। यस्मात् 'अवमन्तारं', 'एते' जनाः, 'मानहेतुना', 'त्यजन्ति' परिहरन्ति, 'घ्नन्ति च' निपातयन्ति च, तस्मान्माननीयान्नावमन्येत ॥ ६८ ॥

मध्यमाधमानां गुणस्फुरणमभिधातुमाह। गुणैरिति। 'उदारैः' उत्तमैः, 'गुणैः', 'संयुक्तान्', अनुजीविनः, 'प्रोन्नयेत्' प्रकर्षेण उन्नतिं नयेत्, मध्यमोत्तमा अपि स्वतोऽवश्यमुन्नतियोग्या न भवन्ति। कुत इत्याह, 'महत्त्वं' महतीं उन्नतिं, 'प्राप्नुवन्तः', 'ते', 'नरेश्वरं' स्वामिनं, 'वर्द्धयन्ति' वृद्धिं नयन्ति, कृतज्ञतयाऽर्थसामर्थ्यात् ॥ ६९ ॥

विवेकयुक्तेन भवितव्यमित्यभिधातुमाह। उत्तमेति। 'उत्तमाभिजनोपेतान्' महाकुलीनान्, 'नीचैः सह न', संवर्द्धयेत् नियोगेनाऽभियोजयेदित्यर्थः। 'हि' यस्मात्, 'क्षमोऽपि' क्षीणोऽपि, 'विवेकज्ञः', 'संश्रयणीयतां' वक्राश्रयत्वं राजत्वं, 'याति', ॥ ७० ॥

अविवेकित्वस्य दोषं दर्शयन्नाह। निरालोके हीति। 'निरालोके' हेयोपादेयोपदेशकविवेकशून्ये, 'तत्रास्मिन्' प्रसिद्धे, 'लोके' जगति, 'पण्डिता नासते' विवेकिनो नावतिष्ठन्ते, 'यत्र', 'जात्यस्य मणेः' मणिविशेषस्य। शिष्टं स्पष्टं ॥ ७१ ॥

यथा विवेकिसहृदयौचित्यादिनियोग इष्यते, तथा सत्पात्रेषूपपत्तिश्चेति दर्शयन्नाह। विश्राम्यन्तीति। 'कल्पतराविव', 'यत्र' श्री-

---

* विद्याश्रुतमिति मु०।

मति स्वामिनि, 'महात्मानः' सकलगुणशालिनः समीहितसम्पादकाश्चानुजीविनः, 'विश्राम्यन्ति' अवस्थितिं कुर्वन्ति, 'स श्रीमान्' स्वामी, 'श्लाघ्यं' सुहृद्भोग्यं यथा भवति तथा, 'जीवति', यतः '*सत्सम्भोगफलाः श्रियः,' श्रियां फलमेतदेव यत् सद्भिः सम्भुज्यन्त इति। तथाच कौटल्योक्तिः 'अलब्धलाभार्था लब्धपरिरक्षणी रक्षितविवर्द्धनी वर्द्धिततीर्थेष्वयप्रतिपादनी प्रतिपत्तिः' इति ॥ ७२ ॥

एतदेव द्रढयितुमाह। लक्ष्म्या इति। 'अभीवतां' श्रीमतां राज्ञां, 'विकासिन्या' विस्तारिण्या, 'तया लक्ष्म्या' निष्फलया विभूत्या, 'किं' फलं, 'या' विभूतिः, 'बन्धुभिः सुहृद्भिश्च', 'विश्रब्धं' यथेष्टं यथा तथा, 'न भुज्यते', स्पष्टं ॥ ७३ ॥

अध्यक्षप्रचारं अभिधातुमाह। आयद्वारेषु इति। '† आयद्वारेषु आगममार्गेषु, 'सर्वेषु' वक्ष्यमाणेष्वपि, 'आप्तान्' अध्यक्षान्, 'परीक्षितान्' उपधाशोधितान्, 'कुर्य्यात्', '‡ तैस्तु' आप्तैः पुनः, करग्रभृतैः, 'भास्वान्' आदित्य', 'अब्धेः' सिन्धोः, 'उदकमिव', 'धनमाददीत', ॥ ७४ ॥

किञ्च, अध्यक्षेति। 'अध्यक्षकर्मसु' निश्चितकर्मनिचयान्, 'तज्ज्ञान्' कर्मविदः, 'सुधीन्' उपधाशुद्धान्, § 'सुज्ञानसङ्कृतान्' निबन्धलेखकाद्युपयुक्तपुरुषसहितान्, 'उद्योगसम्पन्नान्' अप्रमादिनः, सर्वकर्माध्यक्षान्' 'कुर्य्यात्', स्वामीत्यर्थः ॥ ७५ ॥

अपरञ्च, य इति। 'यः' अध्यक्षः, 'यद्वस्तु' यत् कर्म्मादिकं, ‖ 'जानाति', 'तं', 'अर्थेषविषयप्राप्तौ' शब्दस्पर्शरूपरसगन्धप्राप्तयर्थे, 'इन्द्रियार्थे' इन्द्रियविषये, 'इन्द्रियमिव', 'तत्रैव ¶ नियोजयेत्' स्पष्टं ॥ ७६ ॥

किञ्च, कोष्ठेति। 'कोष्ठागारे' उदरपूरणार्थकधान्यादिधनागारे, 'अभियुक्तः' तत्परः, 'स्यात्', विजिगीषुरित्यर्थः। 'हि' यस्मात्, 'जीवितं तदायत्तं', कोष्ठागारेण विना क्षणमपि न जीव्यते। 'नात्ययं'

---

* सत्यभोगेत्यादि मु०। † आपद्द्वारेष्विति मु०।
‡ सेव्य इति मु०। § सुज्ञानसम्पतानिति मु०। ‖ विज्ञानातीति मु०।
¶ तत्र विनीयादि मु०।

नाधिकं, 'व्ययं कुर्यात्', 'प्रत्यवेक्षेत चान्वहं', स्वयं विजिगीषुः नाध्यक्ष-द्वारेण ॥ ७७ ॥

अनन्तरोद्दिष्टानि आयद्वाराण्यभिधातुमाह। कृषिरिति। 'कृषि' कुसीदेन सता राजकुटुम्बिकता च। 'वणिक्पथः', द्विविधः स्थल-पथो जलपथश्च। 'दुर्गं' राजधान्यां परिखावेष्टितं सेनादिसन्नि-वेशनस्थानं। 'सेतुः' आलिः, 'कुञ्जरबन्धनं' हस्तिधारणस्थानं, 'खनिः', रत्नादिखननात्, 'आकरः', सुवर्णादीनां आसमन्तात् करणात्। *'वनादानं', सारदारादीनां वृक्षाणामादानात्, 'शून्यानां च निवे-शनं', एतदष्टममायद्वारमिति ॥ ७८ ॥

किञ्च, अष्टवर्गमिति। 'विवर्द्धयेत्' विशेषेण वृद्धिं नयेत्। किमर्थं कैरित्याह। 'जीवनार्थं' वृत्त्यर्थं, 'आजीवैः', †'करणाधिपैः' अध्यक्षैः, स्पष्टमन्यत् ॥ ७९ ॥

अपरञ्च, तथेति। 'यया वृत्त्या' पशुपाल्येन वाणिज्यया वा, 'प्रव-र्त्तेत', 'तस्यां' वृत्तौ, 'न संरोधं कुर्यात्', प्रवर्त्तयेदेव। विशेषेण तु 'पशूपजीविनां' न संरोधं कुर्यादिति ॥ ८० ॥

जगतो भोगोपदेशं दातुमाह, यथेति। 'यथा', कश्चित्, 'सस्यं' 'कण्टकिशाखया', सर्वतः परिवार्य कृतया 'निपुणं', यथा तथा 'रक्ष-ति' पश्वाद्युपद्रवात् पालयति। 'पालाय सगुडः कार्यः', फलार्थी च सगुडं करोति चौरादिनिषेधार्थं। 'तद्वत्' तेनैव प्रकारेण, 'भोग्यम्', 'इदं जगत्' प्रजास्वरूपं जगत्। कण्टकिशाखासमानं दण्डप्रणयनं। तेन पश्वादिसमानेभ्यः आयुक्तकविपचाटविकतस्करेभ्यो रक्षितं सम्भो-ग्यं भवतीत्यर्थः ॥ ८१ ॥

एतदेव समर्थयन्नाह। आयुक्तकेभ्य इति। 'आयुक्तकेभ्यः' अध्यक्षा-दिभ्यः, 'चौरेभ्यः' स्वपरमण्डलस्थेभ्यः, 'परेभ्यः' शत्रुभ्यः, 'राजवल्लभात्' देवीकुमारादेः, 'पृथिवीपतिलोभात्', 'प्रजानां पञ्चधा भयं' ॥ ८२ ॥

---

*धनादानमिति मु०।　　†करणाधिकैरिति मु०।

पञ्चप्रकारं प्रजाभयं यथा न भवति तथा कार्यमित्याह। पञ्चप्रकारमिति। *'इत्येतत्' अनन्तरोक्तं, 'पञ्चप्रकारं भयं', †'अपोह्य' भीतिमपनीय, '‡नृपतिः' स्वयं, 'काले', आदानयोग्ये 'त्रिवर्गपरिवृद्धये' धर्मार्थकामवृद्ध्यर्थं। §'फलं' धान्यहिरण्यादिकं 'आददीत'॥ ८३॥

दृष्टान्तप्रदर्शनेन प्रजापालनमुपजीवनमभिधातुमाह। यथा गोरिति। 'यथा गौः पाल्यते काले', पिण्याककवलजलादिना 'काले दुह्यते च', 'तथा प्रजा'। कालविशेषे प्रजानां धान्यसुहिरण्यादिदानेन पालनं,कालान्तरे च ताभ्यो भागकरादानादिना दोहः सम्पद्यते। अत्र द्वितीयो दृष्टान्तः, '‖यथा पुष्पप्रदा लता', पुष्पमालार्थिना मालाकारेण 'सिच्यते', 'पुष्यते' उपचीयते, 'च', तद्वत् इयं प्रजा पाल्यते उपचीयते चेति॥ ८४॥

अयुक्तकरप्रजापीडननिवारणार्थमाह। आश्वासयेदिति। 'उपचितान्' प्रजापीडया प्रवृद्धान्, अध्यक्षान्, 'साधु' यथा तथा, आखावयेत्' दण्डप्रणयनेन अपहृतधनान् कुर्यात्, 'दुष्टव्रणानिव', यथा दुष्टव्रणाः स्राविताः सुखाय भवन्ति तथा तादृशा अध्यक्षाः। ¶'आसन्नाले च वर्त्तेरन्', इत्यादि। यथा वह्निः किं करिष्यत्ययमिति विलम्बितोपहतिः परित्यक्तः, पाकादिकारको न भवति तथा महीपतिरपि। सयुक्त्या सेवितः फलदो भवतीति भावः॥ ८५॥

राजविद्रोहाचरणे दोषमाह। स्वल्पमपीति। स्पष्टं॥ ८६॥

नृपतेः कोषविषयकमनुष्ठानमाह। **आप्तैरिति। 'आप्तैः' विश्वास्तैः, 'अधिष्ठितं' परिपालितं, 'कोषं सदा संवर्द्धयेत्', 'काले च' कालविशेषे, 'व्ययं कुर्यात्', स्पष्टमन्यत्॥ ८७॥

---

*-अप्येतदिति मु०। †अपोह्यमिति मु०। ‡नृपतेरिति मु०।
§ धनमिति मु०। ‖ सिच्यते चीयते चैव लता पुष्पफलार्थिनेति मु०।
¶ आमुन्नाले चेत्यादि मु०। **आप्तैः संवर्द्धयेत् कोषं सदा तज्ज्ञैरधिष्ठितमिति टीका सम्मतक्रमस्य विनिमय मुद्रितमूले "संवर्द्धयेत् सदा कोषमाप्तैः" इत्यादि।

धर्मार्थव्ययप्रशंसामाह। *धर्मेणेति। 'धर्मेण' धर्मार्थं, 'क्षीणकोषस्य' निर्धनस्य राज्ञः, 'कृशत्वमपि शोभते', शेषार्द्धं स्पष्टं॥ ८८॥

सङ्क्षिप्तमर्थशास्त्रोपदेशमभिधातुमाह। बृहस्पतेरिति। 'बृहस्पतेः', †'शास्त्रस्य निर्णयः' क इत्याह। 'अविश्वासः', इति, कस्यचिदात्मरतमपि न विश्वसेत्, चित्तानित्यत्वात्। अविश्वासधर्मिणां हि मनुष्याणां सर्वथा संव्यवहाराभावः प्राप्नोति ‡'यथाऽसंव्यवहारवान्', भवति अविश्वासश्च तथा कर्त्तव्य इति भावः॥ ८९॥

किञ्च, विश्वासयेदिति। दण्डोपनयनात् भीतान् 'अविश्वस्तान्', अध्यक्षान् 'विश्वासयेत्', स्वयं च 'विश्वस्तान्', अपि 'नातिविश्वसेत्', 'यस्मिन्' अध्यक्षे, स्वामी 'विश्वासमायाति', 'विभूतेः भाजनैव सः', इत्ययमनुजीविनामुपदेशः॥ ९०॥

किञ्च प्रादुर्भवन्तीति। 'यस्मात् चित्ताणि', 'अनुक्षणं' प्रतिमुहूर्त्तं, 'अर्थसमं' समर्थैः कार्यैः सह, 'प्रादुर्भवन्ति' अन्यथा भवन्ति, तस्मादित्यादि स्पष्टं॥ ९१॥

एवम्भवर्णयन्नाह। उद्योगादिति। स्पष्टं॥ ९१॥§

उपसंहरन्नाह। अनुगतेति 'अनुगतपरितोषितानुजीवी' अनुगताविधेयतराः परितोषिता दानमानादिभिरनुजीविनो येन सः। 'मधुरवचश्चरितानुरक्तलोकः' मधुरवचश्चरितैरनुरक्तो लोको यस्य सः। 'सुनिपुणपरमाप्तसक्तवन्त्रः' सुनिपुणं यथा भवति तथा परमाप्तेषु सक्तान्त्रो राज्यभारो येन सः। शिष्टं स्पष्टं॥ ९२॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां स्वानुजीविवृत्तं पञ्चमः सर्गः॥ ※॥

---

* धर्मार्थमिति मु॰। † शास्त्रार्थनिश्चय इति मु॰।
‡ यथाथ व्यवहारवानिति मु॰। § उद्योगादनिवृत्तस्य सुसहायस्य धीमतः। छायेवानुगता तस्य नित्यं श्रीः सहचारिणी॥ ९१॥ क्षेपकः।

प्रकृतिसम्पत्करणे स्वामिप्रकृत्यभिनामिकात्मसम्पत्तिगुणसम्पाद-नेनात्मा लब्धः, अमात्यप्रभृतीनां च स्वस्वगुणसम्पादनेन चात्मलाभः सम्पन्नः, एवं सप्ताङ्गराज्यस्यात्मलाभे सम्पन्ने तत्पालनस्यावश्यं वक्तव्यत्वात् तदिदानीमभिधातुमाह।

लोके इति। 'लोके' लोकव्यवहारे, लोकव्यवहारस्य देशभेदे कालभेदे च स्वतन्त्रः स्वतन्त्रो भवति, यथा मध्यदेशे एको धर्मः, पारसीकादिषु चान्यः, तथा सत्ययुगेऽन्यः, त्रेतादियुगेषु चान्यः, इति लोकव्यवहारे, 'वेदे', शास्त्रे 'च', 'कुशलः', लोकव्यवहारं वेदांश्च निरीक्ष्य उभयाविरुद्धं व्यवहरेदिति भावः। तथा लोके वेदे च 'कुशलैः' निपुणैः, अनुजीविभिः, 'मन्त्रिवारितः' सहमिलितः, 'आदृतः' आदरपरः, 'नृपः', विजिगीषुः *'सबाह्याभ्यन्तरं' बाह्याभ्यन्तरविभागेनावस्थितं, 'राज्यं चिन्तयेत्', स्पष्टं॥ १॥

राज्यस्य बाह्याभ्यन्तरविभागं दर्शयन्नाह। आभ्यन्तरमिति। 'आभ्यन्तरं', राज्यं विजिगीषोः 'स्वं शरीरं, एव 'बाह्यं' राज्यं 'राष्ट्रं', एव 'उदाहृतं', स्पष्टं। 'अन्योन्याधारसम्बन्धात्', राज्ञा विना राष्ट्रं राष्ट्रेण विना राजा न वर्त्तत इत्यर्थः। यस्मात् 'एकमेवेदं', 'इष्यते' इति प्रतीतं॥ २॥

एतदेव दर्शयन्नाह। राष्ट्रेति। 'राष्ट्राक्रान्तास्तु सर्वेषां' अमात्यादीनां, 'राष्ट्राद्भवति सम्भवः', राष्ट्रात् कोशः, कोशाच्चतुरङ्गो दण्डः, राष्ट्रस्य भूम्येकान्तरं मित्रं राज्ञ एव स्थानीयं दुर्गं राष्ट्रादेव जानपदारयोऽमात्याः। 'प्रसाधयेत्' लाभं पालनञ्च कुर्यादित्यर्थः। स्पष्टमन्यत्॥ ३॥

राज्ञः स्वशरीरपालनमपि धर्माय भवतीति दर्शयन्नाह। लोकानुग्रहमिति। पूर्वार्द्धस्यार्थः सुगमः। 'राज्ञः', †'संरक्षणं' प्रजासंर-

---

* सबाह्याभ्यन्तरं नृप इत्यस्य परिवर्त्ते स बाह्याभ्यन्तरं तथेति मु०।

† राज्ञः संशरणमिति मु०।

स्वमेव, *'धर्मः' नान्यः। 'शरीरं धर्मसाधनं', धर्मार्थिना विजिगीषुणा स्वशरीरमेव यत्नेन रक्षणीयमित्यर्थः ॥ ॥ ॥

प्रजारक्षणे चौरादिहिंसा हिंसा न भवतीति दर्शयन्नाह। 'धर्म्यामिति। 'धर्म्यां' धर्मादनपेतां, 'हिंसा', 'आरेभिरे' आरब्धवन्तः, 'ऋषिकल्पाः' ऋषितुल्याः, 'महीभुजः' राजानः। यथा महर्षयो यज्ञेषु पश्वालम्भनरूपं धर्म्यं कुर्वन्ति तथा राजर्षयोऽपि चौरादिनिग्रहरूपां धर्म्यां हिंसां कुर्वन्ति। शेषाऽर्द्धं सुगमं ॥ ५ ॥

किञ्च, धर्मसंरक्षणपर इति। स्पष्टं ॥ ६ ॥

धर्मस्वरूपमभिधातुमाह। यमार्या इति। स्पष्टं ॥ ७ ॥

किञ्च, धर्माधर्माविति। 'मद्विपक्षिणः' प्रतीपभवकारिणः। स्पष्टमन्यत् ॥ ८ ॥

दुष्टलक्षणमभिधातुमाह। राज्योपघातमिति। स्पष्टं ॥ ९ ॥

दूष्येषु कर्त्तव्यमभिधातुमाह। †दुष्टानिति। 'उपांशुदण्डेन' गुप्तविषदानयोगशस्त्रेण प्रच्छन्नवधरूपेण,। ‡'प्रदुष्य च प्रकामं हि' प्रहारोपायैः दोषयुक्तान् कृत्वा। शिष्टं स्पष्टं ॥ १० ॥

अपरञ्च, राजेति। 'रहसि' एकान्तमध्यमकक्षायां, §'दुष्टं' उक्तलक्षणं, 'उपमन्त्रयेत्' समाकारयेत्। 'गूढशस्त्राः' प्रच्छादितशस्त्रकाः, 'तत्पश्चात्' तेषां पश्चात्, 'आसन्नगताः' प्रागेव राज्ञा ते संहतिं नीताः प्रतीपत्वेन स्थापिताः ॥ ११ ॥

किञ्च, ||विश्वस्त इति। 'द्वाःस्थाः' प्रतीहाररक्षिणः, 'शस्त्रग्राहकाः', 'कक्षान्तरं गतान्', स 'विश्वस्तान्', 'विचिन्वीयुः' शोधयेयुः। 'ते' च शस्त्रग्राहकाः, दृष्टाः सन्तः, 'प्रयुक्ताः स्मः', स्वामिवधाय दुष्टैः 'इति स्फुटं ब्रूयुः' ॥ १२ ॥

---

* धामेति मु०। †दूष्यानिति मु०। ‡ चादर्श वा प्रकाशं चेति मु०। §दूष्यमिति मु०। ||विश्वस्तानिति मु०।

अन्यच्च, इतीति। 'राजशल्यं' द्रव्यादिकं, 'समुद्धरेत्' छेदयेत्, स्पष्टमन्यत्॥ १३॥

प्रजावृद्धिः फलाय भवतीति दर्शयन्नाह। यथेति। स्पष्टं॥ १४॥

दुष्टदमनात् प्रजारक्षणं भवतीत्युक्तं तच्च शास्त्रोक्तं श्रेय इति दर्शयन्नाह। उद्वेजयतीति। 'तीक्ष्णेन' अन्यायादधिकेन दण्डेन, 'उद्वेजयति', प्रजा इति शेषः। 'मृदुना' अनुकम्पया प्रमाणहीनेन, 'परिभूयते', भयाभावात्। 'तस्मात्' तेन कारणेन, 'यथार्हतः' यो यद्दण्डयोग्यस्तदनुसारेण, 'पक्षमनाश्रितः' अपक्षपाती सन्, 'दण्डं नयेत्', ॥ १५॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां कण्टकशोधनं नाम षष्ठः सर्गः॥ ६॥

---

## सप्तमः सर्गः।

कण्टकशोधनशेषमेवात्मजरक्षणमभिधातुं, अरक्षिताः पुत्राः कण्टकीभवन्ति पितुः प्रजानाञ्चेति दर्शयन्नाह। प्रजात्मश्रेयसे इति। 'प्रजात्मश्रेयसे' प्रजानां आत्मनश्च मङ्गलाय, 'राजा' विजिगीषुः, 'आत्मजरक्षणं कुर्वीत',। कुतस्तद्रक्षणमिति 'लोलुभ्यमानाः', 'ते' पुत्राः, स्पष्टमन्यत् ॥ १ ॥

किञ्च, राजपुत्रा इति। 'अभिमानिनः' अहमेव राज्यार्हः इत्यभिमानसम्भावनया युक्ताः, 'भ्रातरं', राज्ययोग्यं, 'पितरं', राजानं,। स्पष्टमन्यत् ॥ २ ॥

किञ्च, राजपुत्रैरिति। 'मदोन्मत्तैः' अभिहितमदात् जातोन्मादैः, 'प्रार्थ्यमानं' अभिलष्यमाणं, 'इतस्ततः' सर्व्वतः अभियोगात्, शेषः सुगमः ॥ ३ ॥

अपरञ्च, रक्ष्यमाणा इति। प्रतीतं ॥ ४ ॥

राजपुत्राणां रक्षाप्रकारं सङ्क्षिप्तमभिधातुमाह, विनयोपग्रहानिति। 'विनयोपग्रहान्' विनयो द्विविधः कृतकः सहजश्च। विद्यावृद्धसंयोगजनितः कृतकः, जन्मान्तराभ्यासभावनाज्जातः सहजः स्वाभाविकः। द्विविधविनये उपग्रहो बन्धनं येषां ते तान्। अवशिष्टं सुगमं ॥ ५ ॥

विनीतपुत्रस्य यौवराज्याभिषेचनमभिधातुमाह, विनीतमिति। 'उद्धृत्त' दुःशीलं, 'दुष्टं गजमिव', 'सुखबन्धनं', ग्राम्यसुखोपरोधेन राजकुमारः पितरं नाभिहन्तीत्येवंविधं सुखबन्धनं, 'कुर्वीत'। शेषः सुगमः ॥ ६ ॥

दुर्वृत्तस्यापि राजपुत्रस्यापरित्यागमाह, राजपुत्र इति। स्पष्टं ॥ ७ ॥

उक्तप्रकारस्य राजपुत्रस्यापरित्यक्तस्य शासनप्रकारमभिधातुमाह, व्यसन इति। सुगमं ॥ ८ ॥

राजपुत्ररक्षणमभिधाय राजात्मरक्षणं तावदाह। याने इति। 'याने' शिविकादौ, 'शय्यासने' पर्यङ्कादिके सिंहासने विष्टरकादौ, 'याने' यानीयादौ, 'भोज्ये' 'आहारादौ' 'वस्त्रे' वसनोत्तरीयादौ, 'विभूषणे' अलङ्करणादौ, 'सर्व्वत्रैव' आर्य्यस्त्रीसङ्गादौ, 'अप्रमत्तः' सावधानः, 'स्यात्', न विश्वसेदित्यर्थः, '*उज्जृम्भेत विषदूषितं', तं ज्ञात्वा परिहरेदित्यर्थः॥ ८॥

विषप्रतीकारार्थमाह, विषघ्नैरिति। 'विषघ्नैरगदैः' श्वेतपुष्कर-पुष्पाहत्यादिभी रचितैर्जलैः, 'स्नातः', एवंविधजलैः स्नातस्य स्नाने गुणा-नि सर्व्वविषाणि न प्रसरन्तीति कौटल्योपदेशात्। 'विषघ्नमणिभूषित.' गरुडोद्गारमणिनाऽलंकृतः। तथाचोक्तं 'रचितो गरुडोद्गारमणि-र्यस्य विभूषणं। स्थावरं जङ्गमं तस्य विषं निर्व्विषतां व्रजेत्' इति। 'परीक्षितं', वक्ष्यमाणप्रकारेण, 'अश्नीयात्', राजा 'जाङ्गुलिविद्भिर-न्वितः' महानुभावस्तद्विद्यान्ताश्रुतविषविद्याविशारदविषवैद्यर्यैः परिवृतो राजा भोजनं कुर्य्यादित्यर्थः॥ १०॥

विषदूषिताग्रपरीक्षामभिधातुमाह, भृङ्गराज इति। 'भृङ्गराजः' दाक्षपक्षी गोमुच्छकः, 'शुकः सारिका च', इति त्रयः पक्षिणः प्रसिद्धाः। शेषार्द्धं स्पष्टं॥ ११॥

किञ्च, चकोरस्येति। 'चकोरस्य' लोहिताक्षपक्षिविशेषस्य, 'विर-ज्येते' रागरहिते भवत इत्यर्थः। 'क्रौञ्चः' लोहितमस्तकः पक्षिवि-शेषः, 'सुभृशं', यथा तथा, 'माद्यति', मदया इव। 'कोकिलः', मत्तो भूत्वा 'म्रियते' प्राणान् परित्यजति। शेषः सुगमः॥ १२॥

अपरञ्च, नित्यमिति। स्पष्टं॥ १३॥

अन्यच्च, मयूरेति। 'मयूरस्यतोत्सर्गे', मयूरः प्रसिद्धः, पृषतः चित्र-मृगविशेषः, भवने तयोरुत्सर्गः सर्पनाशाय भवति इत्यर्थः॥ अन्यत् प्रतीतं॥ १४॥

---

* वर्ज्जेतेति मु०।

अपरञ्च, भोज्यमिति। स्पष्टं ॥ १५ ॥

विषदिग्धान्नप्रदानेनाग्नेः पश्चिमाञ्च स्वरूपवैलक्षण्यमभिधातुमाह, धूमेति। 'वह्नेः', 'धूमार्चिषोर्नीलता' धूमस्यार्चिषां च नीलता, 'शब्दस्फोटश्च', 'स्फुटं' 'जायते', शेषार्द्धं सुगमं ॥ १६ ॥

विषदिग्धान्नस्वरूपमाह, अखिन्नतेति। 'अखिन्नता' तीव्रेण वह्निनापि खिन्नता न भवतीति, 'मादकत्वं' मदजनकता, *'आशु शैत्यं' सत्वरमुष्णतापगमः, 'विवर्णता' श्यामता, 'अन्नस्य' शाल्यादेः, 'विषदिग्धस्य', 'उष्मा' वाष्पः, 'स्निग्धमेचकः' नीलोज्ज्वलः ॥ १७ ॥

विषदूषितव्यञ्जनस्य स्वरूपमाह, व्यञ्जनस्येति। 'क्वथने', अग्निं विना, शेषः सुबोधः ॥ १८ ॥

विषदूषितरसद्रव्यस्य स्वरूपमभिधातुमाह, छायेति। 'रसे' क्षीरजलादौ, 'छाया' दीप्तिः, †अधिका 'हीना वा' ‡'राजदूर्द्धं' दीप्तिमच्छिरस्कां, 'फेनमण्डलमेव, च', दृश्यते ॥ १९ ॥

विषदूषितरसविशेषाणां सरसद्रव्यविशेषाणां च वर्णविशेषानभिधातुमाह, रसस्येति। 'रसस्य' इत्यादिरसस्य, शिष्टं प्रतीतं ॥ २० ॥

आर्द्रस्येति। 'आर्द्रस्य' हरितस्य आम्रफलादेः, 'प्रक्लानभावः', वृन्तप्रदेशे। 'पाकं विना §क्वाथविलीनभावः' अपक्वात्पक्वता, शेषः सुगमः ॥ २१ ॥

अपिच, शुष्कस्येति। 'विषोपदेहात्' विषसम्पर्कात्, 'शुष्कस्य' 'सर्वस्य' कटकादेः, 'विशीर्णता' म्लानता, 'अशुचिवर्णता च', भवति। स्पष्टमुत्तरार्द्धं ॥ २२ ॥

अपरञ्च, प्रावारेति। 'प्रावारास्तरणानां' प्रावरणानि कम्बलादीनि आस्तरणानि सरोमकार्पासतूलकादीनि तेषां, 'श्यामैः' मलिनैः,

* आशु शैत्यमिति मु०। † अतिरिक्तेति मु०।
‡ राजिरूर्द्धेति मु०। § क्वाथविनीतभाव इति मु०।

2 A 2

3298.

'मण्डलैः' 'व्याकीर्णता' व्याप्तता, *'तन्तूनां' तन्तुभिर्विरचितानां, 'पक्षिणां' विशिष्टपक्षिलोमनिर्म्मितानां, 'लोम्नां' अविलोमविरचितानां '† भ्रंशः' शातनं, 'स्यात्', 'विषाश्रयात्' विषोपदेहादित्यर्थः ॥ २३ ॥

अपिच, लोहानाञ्चेति। 'लोहानां' सुवर्णादीनां, 'मणीनां' प्रवालादीनां, विषोपदेहात् 'मलपङ्कोपदिग्धता' कलङ्ककीटलिप्तता'। 'प्रभावः' वीर्य्यं, 'स्नेहः' स्निग्धभावः 'गुरुता' भारः, 'वर्णः' लोहितपीतादिः, 'स्पर्शः' सुखस्पर्शत्वं, एतेषां च 'वधः' विनाशः। 'तथा', संस्कृतविषाश्रयादेव, नहि सामान्यविषेण लोहमणीनां प्रभावो विनाशयितुं शक्यते ॥ २४ ॥

श्लोकद्वयेन विषदायिनामपि लिङ्गान्यभिधातुमाह, संशुष्केति‡। 'संशुष्कश्यामवक्त्रत्वं' स्वदोषदण्डभावनया मुखस्य शुष्कत्वं विवर्णत्वं च भवतीत्यर्थः। '§वाग्भङ्गः', स्पष्टार्थं वक्तुं न शक्नोतीत्यर्थः। 'जृम्भणं मुहुः', समीपस्थितस्यैव भवति। 'स्खलनं' समेऽपि मार्गे गतिभङ्गः, 'वेपथुः' कम्पः, शीतस्याभावेऽपि 'स्वेदः', प्रवातेऽपि 'आवेगः' उद्विग्नता, निमित्ताभावेऽपि, 'दिग्विलोकनं', दण्डप्रयोक्तृपुरुषागमनशङ्कया। अपिच, स्वकर्म्मणीति। 'स्वकर्म्मणि' स्वपाकपेयाद्यनुष्ठाने। 'स्वभूमौ' स्वीयगृहादौ, 'अनवस्थानं', दोषपरिहारबुद्ध्याऽहमत्र नावस्थित इति सङ्कल्पेन। 'एतानि', इत्यादि सुप्रतीतं ॥ २५। २६ ॥

विषप्रयोगप्रतिषेधार्थमाह, औषधानि चेति। 'औषधानि', 'तत्कल्पकैः' चिकित्सकैः, यथायोगं 'पानं' पेयोद्भवं, 'पानीयमेव च', 'तत्कल्पकैः', 'समास्वाद्य' प्रतिभ्याद्यास्वादं ग्राहयित्वा, 'भोजनानि प्राश्नीयात्', राजा ॥ २७ ॥

अपिच, प्रसाधनादीति। 'प्रसाधनं' अलङ्कारः, आदिशब्दात्

---

* तन्तूनामिति मु०। † भ्रंश इति मु०।
‡ मुखस्य श्यामवर्णत्वं इति मु०। § स्वरभेद इति मु०।

विलेपनमाल्यादि । 'यत्किञ्चित्' अन्यदपि वस्तु, 'ताम्बूलं', 'तदपरीक्षि-तमुपभुक्तं', मन्त्र्यादिभिः 'परिचारकाः' सेवकाः, 'उपनिन्युर्नरेन्द्राय', नान्यथा । १८ ॥

अपरञ्च, परस्मादिति । 'अभिरक्षिभिः' रक्षानियुक्तैः, स्पष्टमन्यत् ॥ १९ ॥

किञ्च, यानमिति । पूर्व्वोक्तं यानं । 'अविज्ञातेन', अयथानुपूर्व्वं वा 'सङ्कटेन' अविस्तीर्णेन, 'मार्गेण', 'न व्रजेत्', परकृताभिसन्धान-प्रतिषेधार्थं । २० ॥

परप्रयुक्ततीक्ष्णरसादिप्रतिषेधमाह, दीक्षितादृष्टेति । 'दीक्षिता-दृष्टकर्म्माणं' स्वामिना दीक्षितमप्यदृष्टं दुष्कर्म्म यस्य तं, 'आप्तं' विश्वा-सयोग्यं, 'वंशक्रमागतं' पितृपैतामहं, 'संविभक्तं' कृतभोजनादिसंवि-भागं, 'जनं', 'आसन्नवर्त्तिनं', राजा आत्मरक्षार्थं 'कुर्व्वीत', ॥ २१ ॥

ये आसन्नवर्त्तिनो न कर्त्तव्यास्तानभिधातुमाह, अधार्म्मिका इति । 'अधार्म्मिकाः' पापिष्ठाः, 'क्रूराः' हिंस्राः, 'दुष्टदोषाः' प्रत्यक्षीकृतमहा-विरुद्धाचाराः, 'निराकृताः' दोषादेव दूरीकृताः, 'परेभ्योऽभ्यागताः' शत्रुसमीपतः समागताः, ये तान् 'एतान्', सर्व्वान् 'दूरादेव विव-र्जयेत्', ॥ २२ ॥

जलपथे आत्मरक्षार्थमाह, महावातेति । 'महावातसमुद्धूता' महावातैरस्थिरतरा, 'अपरीक्षितनाविका' अयुक्तनाविका, '*अन्य-नौप्रतिबद्धान्ता' अन्यनौसमाक्रान्ता, 'आतुरा' दुर्घटितत्वादनवस्थिता, 'नौमियात्' नारोहेत् ॥ २३ ॥

जलक्रीडायामपि आत्मरक्षार्थमाह, परितापिष्विति । 'परिता-पिषु' परितापवत्सु ग्रीष्मकालेषु, 'प्लवन्', तरणमित्यर्थः स्पष्टमन्यत् ॥ २४ ॥

---

* अन्यनौप्रतिबद्धा वा इति मु० ।

वनविहारमभिधातुमाह, गहनानीति। 'गहनानि' लतासम्बस-म्बद्धानि वनानि, 'विशुद्धं, शुचिभिर्वहिरन्तश्च कृतशोधनं, 'उद्यान-वनं', 'मधुरं वयोऽनुरूपञ्च', यथा भवति तथा 'विहरन्' विलसन्, 'न माद्येत्', मन्दं मन्दं गच्छेत् स्पष्टमवशिष्टं ॥ ३५ ॥

मृगयायानमभिधातुमाह, सुविनीतेति। *'सुविनीतसुवेशपृष्ठयानः' सुशिक्षितशोभनवेशबद्धहस्त्यश्वपृष्ठयायी, 'सुखगम्यां' सुप्रवेशां, 'उचि-तां' उपयुक्तां, 'लक्ष्यसिद्धौ' लक्ष्यसिद्ध्यर्थं, 'सुपरोक्षितरक्षितान्तसीमां' सुविज्ञातप्रान्तभागां, 'मृगाटवीं' शरव्यजीववृक्षलामरण्यानीं, 'लघु-कोष्ठः' क्षिप्रहस्तः, मृगयू राजा 'उपेयात्', ॥ ३६ ॥

परगृहप्रवेशे सङ्क्षोभमभिधातुमाह, कारयेदिति। 'आदौ' प्रथमे, 'भवनशोधनं कारयेत्', तीक्ष्णादिनिरासार्थं। †'मातुरन्ति-कमप्युप्रविविक्षुः' जननीसन्निधिमुपवेष्टुमिच्छुः,'आप्तशस्त्रानुगतः' विश्व-स्तशस्त्रधारिपुरुषैरनुगतः। स्पष्टमन्यत् ॥ ३७ ॥

राजगमननिषेधकसमयमाह, पांशूत्करेति। सुगमं ॥ ३८ ॥

राजनिर्गमप्रवेशावभिधातुमाह, निर्गमे चेति। 'सम्यगाविष्कृ-तोन्नतिः', शरीरसौष्ठवप्रदर्शनार्थं, 'समन्ततः' सर्व्वतः, 'प्रोत्सारित-जनं' अपसारितलोकं, 'राजमार्गं गच्छेत्', इत्यादि स्पष्टं ॥ ३९ ॥

यात्रोत्सवसमाजेषु जनतायुतप्रदेशेषु च राजगत्यागमननिषेध-मभिधातुमाह, यात्रेति। स्पष्टं ॥ ४० ॥

निशीथप्रणिधीनभिधातुमाह, निषेवित इति। ‡'वर्षवरैः' षण्ढैः, 'कञ्चुकोष्णीषधारिभिः' वारवाणशिरोवेष्टनधारिभिः, शिष्टं स्पष्टं ॥ ४१ ॥

अन्तःपुरामात्यै राजनर्म्माभिधातुमाह, नीचैरिति। 'नीचैः', औद्ध-त्यमपहाय 'अन्तःपुरामात्याः' अन्तःपुररक्षानियुक्ताः, 'शुचयः'

---

* सुविनीतसुवेशयानः इति मु०। † मातुरन्तिकमपि प्रविविक्षुरिति मु०। ‡ वर्षधरैरिति मु०।

कामोपधाविशुद्धाः, 'चित्तवेदिनः' चित्तज्ञाः, 'शस्त्राग्निविषवर्जं', यथा भवति तथा, अपायहेतुत्वात् ते वर्जनीया इत्यर्थः,। 'नर्म्मयेयुः' क्रीडयेयुः, 'महीपतिं', ॥ ४२ ॥

अन्तर्वैशिकसैन्यस्य राज्ञो रक्षाविधानमाह, अन्तरिति। *'अन्तर्वैशिकसैन्यं' पुत्रदाराद्याभ्यन्तरवंशरक्षानियुक्तं सैन्यं, †'हि' स्फुटं, 'सन्नद्धं' गृहीतशस्त्रसन्नाहं, 'साधुसम्मतं', सकलगुणयुक्तत्वात्, ‡'आयुधकुशलं' रक्षाविधाननिपुणं, 'नृपं रक्षेत्', अन्येषां तथानवकाशत्वात् ॥ ४३ ॥

अवरोधशौचरक्षाधिकारमाह, आशीतिकाश्चेति। 'आशीतिकाः', पूर्णाशीतिवर्षाः पुरुषाः, 'पञ्चाशत्काः' पूर्णपञ्चाशद्वर्षाः, 'योषितः', उपशान्तरागत्वादिमे न भवतीति 'बुध्येरन्', 'अवरोधानां' अन्तःपुराणां, 'शौचं' शुचिभावं, 'आगारिकाः' आगारे नियुक्ताः ॥ ४४ ॥

पण्यस्त्रीणां राजसेवामभिधातुमाह, रूपेति। रूपमेवाजीवन्ति इति 'रूपाजीवाः' पण्यस्त्रियः, 'स्नाताः' राजस्नानावसरे कृतमज्जनाः; 'परिवर्त्तितवाससः' राजकीयवस्त्रैरेव परिवर्त्तितानि स्ववासांसि याभिस्ताः। 'राजानमुपतिष्ठेयुः', 'विशुद्धस्रग्विभूषणाः', रसधूपाङ्गप्रलेपशङ्कानिरासार्थं ॥ ४५ ॥

कुहकादिभी राजसंसर्गनिषेधमाह, कुहकैरिति। 'कुहकैः' इन्द्रजालविद्यावद्भिः, 'जटिलैः' जटाधरैः शैवादिभिः, 'मुण्डैः' मुण्डितमुण्डैः भिक्षुकादिभिः,'बाह्यैर्दासीजनैः' वेश्यादिभिः,'आभ्यन्तरो जनः' अन्तःपुरसञ्चारी जनः, 'संसर्गं न क्वचिद्गच्छेत्', ॥ ४६ ॥

विषप्रवेशादिसंसर्गनिषेधार्थमाह, निर्गच्छेदिति। 'आभ्यन्तरो जनः' अन्तःपुरसञ्चारी जनः, 'विज्ञातद्रव्यसञ्चारी' द्वारस्थैर्विज्ञातानां द्रव्याणामेव सञ्चारणं विद्यते यस्य सः। 'कारणेनोपलक्षितः' राजविदितेनैव प्रयोजनेन विदितः ॥ ४७ ॥

---

* अन्तर्वंशिक० इति मु०।  † चेति मु०।  ‡ आयुधकुशलमिति मु०।

साङ्क्रामिकव्याधिप्रतीकारार्थमाह, न चेति। 'अनुजीविनं' भृत्यं 'अकल्यं' व्याधितं, 'पृथिवीपतिः', व्याधिसंसर्गप्रतिषेधार्थं 'न पश्येत्', 'अन्यत्रात्ययिकाद्रोगात्', यदि मुख्योऽनुजीवी अत्ययकारिणा रोगेणाभिभूयते तदा पश्येत् आत्मना प्रतीकारं कृत्वा इत्यर्थः। स्पष्टं शिष्टं ॥ ४८ ॥

कस्मादित्याह, स्नात इति। राजा 'स्नातः' शुद्धकायः, 'अनुलिप्तसुरभिः' कुङ्कुमकस्तूरीमदादिभिः सौरभवान्, 'स्रग्वी' मालत्यादिसुरभिपुष्पमालाधारी, 'रुचिरभूषणः' भास्वराभरणशाली, सर्व्वथा देवीनां मनोहरो भूत्वा तच्चित्ताराधनार्थं 'देवीं *पश्येत्', स्वानुरागरक्षार्थं। अन्यत् स्पष्टं ॥ ४९ ॥

परातिसन्धाननिवारणार्थमिदमाह, नहीति। 'नहि' नैव, 'आत्मीयात् सन्निवेशात्' स्वीयवासभवनात्, 'देवीगृहं रिरंसया गच्छेत्', अन्यत् सुबोधं ॥ ५० ॥

विश्वस्तानामपि स्त्रीहतविनाशमाह, देवीगृहेति। 'देवीगृहगतं' 'भद्रसेनाख्यं', 'भ्राता', कनीयान् निभृतप्रवेशो वीरसेनोऽनुरक्तया देव्या प्रेरितोऽमारयत्। तथा 'मातुः शय्यान्तरे लीन औरसः सुतः', कुपितया जनन्या प्रेरितः पुत्रान्तरदत्तराज्यं 'कारुषं' करूषदेशाधिपं, अमारयदित्यनुवर्त्तते ॥ ५१ ॥

अपरञ्च, लाजानिति। देवीदत्तविषदिग्धलाजभक्षणेन रहोगतः काशीराजो विनाशित इति फलितार्थः ॥ ५२ ॥

अन्यच्च, विषेति। स्पष्टं ॥ ५३ ॥

अपरञ्च, वेण्यामिति। सुबोधं ॥ ५४ ॥

दारगुप्तेः फलं दर्शयितुमाह, यस्येति। श्लोकार्थः स्पष्ट एव। लोकद्वयमित्यादिना परलोकेऽपि कुलकलङ्काभावात् स्वर्ग इति भावः ॥ ५५ ॥

धर्म्मार्थं दाररक्षार्थञ्च अभिधातुमाह, धर्म्ममिति। 'अनुक्रमात्'

---

* गच्छेदिति स०।

शास्त्रोक्तक्रमेण, 'वाजीकरणसंहितः' वाजीकरणैः शास्त्रोक्तैः प्रक्रिया-विशेषैः संहितः समनुक्तरदद्भिः, शेषः सुगमः॥ ५६॥

शयनविधिमभिधातुमाह, विचार्य्येति। 'विचार्य्य' निर्णीय, 'कार्य्या-वयवान्' अहोरात्रं योडशधा विभज्याहोरात्रावयवेषु ये कार्य्यावयवा-स्तान्, 'दिनक्षये लोकं *विसर्ज्य', 'प्रमदाकृतक्रियः' प्रमदागणसमा-श्रितकार्य्यजातः, पुरुषाणामन्तःपुरप्रवेशाभावात्। '†अग्रस्त्रबन्धेन' श-स्त्रबन्धविरहितेन, 'पाणिना' स्वकीयकरेण, विशिष्टः सन्, सर्व्वदा करसन्निहितं शस्त्रं विधेयमित्यर्थः। 'स्वपेत्' निद्रां गच्छेत्' 'असक्तं', यथा तथा, निद्रायामपि चासक्तिमं कार्य्येत्यर्थः। 'परमात्तरक्षितः', विश्वस्तान्तर्वंशिकपुरुषैः रक्षितः॥ ५७॥

निद्रासक्तिनिराशार्थमाह, नयेनेति। 'नयेन' नीत्यनुष्ठानेन, 'जा-ग्रति' अप्रमत्तत्वेन सर्व्वं कार्य्यजातं पश्यति, 'नरेश्वरे', सति 'निराधयः' निःशेषितचित्तपीड़ाः, उपद्रवकारिणां निग्रहादित्यर्थः। 'प्रजाः', 'सुखं', यथा भवति तथा, 'स्वपन्ति' निद्रां यान्ति, 'प्रमत्तचित्ते' विषयासक्तमानसे, '‡स्वपितरि' तस्मिन् सति, '§असद्भयात्' दस्यु-प्रभृतिभ्यो भयं प्राप्य, 'प्रजागरेण,' 'अस्य' राज्ञः, 'जगत्' प्रजारूपं 'प्रमुष्यते' निद्राविहीनं भवति। तस्मात् जितनिद्रेण राज्ञा भवि-तव्यमित्यर्थः॥ ५८॥

स्वपराज्ययोः साधुलक्षणे पूर्व्वाचार्य्यसम्मतिमाह, इति स्म पूर्व्व-मिति स्पष्टं॥ ५९॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां राजपुत्ररक्षणं नाम सप्तमः सर्गः॥ *॥

---

* विसृज्येति मु॰। † चाशस्त्रेति मु॰। ‡ स्वपितोरिति मु॰। § सम्भयादिति मु॰।

अष्टमः सर्गः।

मण्डलाधिपस्य राज्ञो मण्डलशोधनप्रकारमभिधातुमाह, उपेत इति। 'उपेतः कोषदण्डाभ्यां' पूर्वोक्तप्रकृतिसम्पद्युक्तः, अवशिष्टार्थः सुगमः॥ १॥

अपरञ्च, रथीति। 'रथी' विजिगीषुः, 'विशुद्धे' मित्रभावापन्ने, 'मण्डले' अरिमित्रादिके, 'चरन्', 'विराजते'। उत्तरार्द्धं स्पष्टं। सर्व्वथा मण्डलशुद्धिर्विधेयेति भावः॥ २॥

विजिगीषोः समण्डलापेक्षत्वमभिधातुमाह, रोचत इति। 'रोचते' प्रियो भवति, 'सर्वभूतेभ्यः' वर्णचतुष्टयसङ्कीर्णजात्यादिरूपप्रजाभ्यः, *'सम्पूर्णमण्डलः', सप्तप्रकृतिकं राज्यं मण्डलं, तास्य सप्त प्रकृतयो यदा स्वगुणसम्पदुपेता भवन्ति तदा सम्पूर्णमण्डलशब्देनोच्यते। विजिगीषुणा सर्वदा सम्पूर्णमण्डलेन भाव्यमिति भावः। प्रियं स्पष्टं॥ ३॥

एतदेव समर्थयन्नाह, अमात्येति। 'एताः' पञ्च, 'प्रकृतयः' 'विजिगीषोः', भोग्यत्वेन 'उदाहृताः', इति भावः। श्लोकार्थः सुगमः॥ ४॥

एतदतिरिक्तं प्रकृतिद्वयमभिधातुमाह, एता इति। मित्रराजभ्यां सह अनन्तरोक्ताः प्रकृतयः सप्त भवन्तीत्यर्थः॥ ५॥

विजिगीषुलक्षणमभिधातुमाह, सम्पन्नस्त्विति। स्पष्टं॥ ६॥

किञ्च, कौलीनमिति। 'स्थूललक्षिता' दानावसरे स्थूलं बहु एव लक्षीकरोति स्वल्पं दातुं न जानातीत्यर्थः। 'प्रागल्भ्यं' अपरिसङ्कीर्णत्वं ध्येयः सुगमः॥ ७॥

अपरञ्च, अदीर्घसूत्रतेति। 'अदीर्घसूत्रता' दीर्घकालं सूत्र्यते पर्य्यालोच्यते कार्य्यमिति दीर्घसूत्रं तस्य भावः दीर्घसूत्रता तदभावोऽदीर्घसूत्रता शीघ्रकारिता, 'अक्षौद्रं' परगुणासहिष्णुत्वरूपक्षुद्रताविहीनत्वं, 'प्रश्रयः' विनीतभावः, अलुब्धता च, 'स्वप्रधानता' स्वयं प्रधानत्वं, 'देशकालज्ञता' कार्य्यानुगुणदेशकालस्वरूपज्ञानवत्त्वं, 'दार्ढ्यं' दृढ़ता,

* अखण्डमण्डल इति मु॰।

परिगृहीतापरित्याग इत्यर्थः। 'सर्वक्लेशसहिष्णुता' क्षुत्तृष्यादिसर्वसहत्वं ॥ ८ ॥

अन्यच्च, सर्वेति। 'सर्वविज्ञानिता' सकलकलाकुशलत्वं, 'दाक्ष्यं' आशुकारित्वं, *'ऊर्जः' कायबलवत्त्वं, 'संवृतमन्त्रता', इङ्गिताकारादिगोपनात्। 'अविसंवादिता' विरहितशब्दच्छलाभिसन्धानशीलत्वं, 'शौर्यं' अभीरुत्वं, 'भक्तिज्ञत्वं' अनुजीव्यादिकृतभक्तिज्ञता, 'कृतज्ञता' कृतोपकारस्मारित्वं ॥ ९ ॥

किञ्च, शरणागतेति। 'अमर्षित्वं' अपराधिषु क्षान्तिः, 'स्वकर्मदृष्ट-†शास्त्रित्वं' प्रजापालनरूपं स्वकर्म्म सर्वायुधविषयं दृष्टशास्त्रञ्च यो जानाति, तस्य भावः। 'शुचित्वं' पाण्डित्यं, 'दीर्घदर्शिता' शास्त्रचक्षुषा सुदूरदेशकालदर्शनशीलत्वं। स्पष्टमन्यत् ॥ १० ॥

अपरञ्च, जितेति। एते अनन्तरोक्ता गुणाः विजिगीषोर्विजिगीषुत्वसम्पादका भवन्तीति भावः। श्लोकार्थः सुगमः ॥ ११ ॥

उत्साहगुणस्यैव प्राधान्यं दर्शयन्नाह, सर्वैरिति। 'सर्वैः' अनन्तरोक्तैः, 'गुणैः', 'विहीनोऽपि', 'यः प्रतापवान्' 'यः' प्रतापयुक्त उत्साहविशेषशाली, 'सः', एव 'राजा', प्रजारञ्जनात्। यतः '‡प्रतापयुक्तात्', राज्ञः, 'सिंहात् मृगा इव', 'परे' शत्रवः इतरे जना वा, 'त्रस्यन्ति' बिभ्यति ॥ १२ ॥

एतदेव समर्थयन्नाह, प्रतापेति। 'प्रतापसिद्धौ' सकलशत्रुविकर्त्तनजनितं यशः प्रतापः, तस्य सिद्धौ सत्यां। 'उत्थानयोगेन' सततविग्रहोद्योगयोगेन। स्पष्टमवशिष्टं ॥ १३ ॥

विजिगीषुलक्षणमभिधातुमाह, एकेति। 'एकार्थाभिनिवेशित्वं' एकार्थे भूहिरण्यादिरूपे अभिनिवेशित्वं आत्मसात्करणाग्रहात् द्वयोरपि यत्नः, तदेव §'अरिलक्षणं', तौ परस्परमरी भवतः। तयोरे-

* सदेति सु०। † शास्त्रत्वमिति सु०।
‡ प्रतापयुक्ता त्रस्यन्ति परान् सिंहा-मृगानिवेति सु०। § अविलक्षणमिति सु०।

को 'दारुणः', अपरः सुखोच्छेद्यश्च भवति। 'दारुणस्तु शत्रुः' विजिगीषुगुणशाली भवति। आत्मनो दुरुच्छेद्यता विजिगीषुणा सम्पादनीयेति भावः ॥ १४ ॥

सुखोच्छेद्यं शत्रुं दर्शयन्नाह, लुब्ध इति। 'लुब्धः' अर्थलोभात् दानभूमिरहितः, दानाभावे प्रकृतयो विरज्यन्ते। 'क्रूरः' अतितीक्ष्णदण्डः, स च उद्वेजनीयो भवति। 'अलसः' निरुद्योगः, तस्य प्रकृतयोऽपि निरुद्योगा भवन्ति। 'असत्यः', असत्यशीलः, तच्छीलाः प्रकृतयो भवन्ति इत्यर्थः। 'भीरुः' शौर्यरहितः, स च सङ्ग्रामासमर्थो भवति। 'अस्थिरः', स्थितेरहितत्वात् स च प्रकृतिभिर्न सज्यते। 'मूढः' निर्विवेकः, स त्वकिञ्चनकारी भवति। 'योधावमन्ता' युद्धविशारदशूरपुरुषावमानकृत्, स च योधविमुक्तः सुखेनैवोच्छिद्यते ॥ १५ ॥

विजिगीषोः, अरेः, मित्रस्य च लक्षणानि अभिहितानि, इदानीं विजिगीषोः यातव्यं प्रति यियासोः अग्रतः पश्चादासन्नव्यवहितभेदेनारिमित्रादीनां संज्ञान्तराणि व्यवहारार्थमभिधातुमाह, *अरिमित्रमिति। 'अरेः' अनन्तरोक्ताया विजिगीषोर्भूम्यनन्तरत्वपदिग्भागेषु व्यवस्थिताया अरिप्रकृतेः, 'मित्रं' अनन्तरोक्तं भूम्येकान्तरस्थितं, 'अरिमित्रं' विजिगीषोर्भूम्यनन्तरस्यैकान्तरं। 'अतः परं' अरिमित्रात्परं, 'मित्रमित्रं' विजिगीषोर्भूम्येकान्तरत्वमित्रस्यापि भूम्येकान्तरत्वं। 'तथाऽरिमित्रमित्रं', 'च', विजिगीषोर्भूम्यनन्तरस्यारेर्भूम्येकान्तरत्वस्यारिमित्रस्य भूम्येकान्तरं। एता अपि तिस्रः प्रकृतयः 'विजिगीषोः', 'पुरः' अग्रतः, '†स्मृताः' प्रोक्ता गुरुभिः ॥ १६ ॥

पश्चादवस्थितानां तेषां संज्ञान्तराण्याह, पार्ष्णिग्राह इति। 'पार्ष्णिग्राहः' पश्चात् स्थितो विजिगीषोर्भूम्यनन्तरस्य। 'आक्रन्दस्तदनन्तरं' तत्पश्चाद्वर्त्ती विजिगीषोर्भूम्येकान्तरः। 'अनयोः' पार्ष्णिग्राहाक्रन्दयोः, पश्चात् 'आसारावेव' मित्रं। तद्यथा पार्ष्णिग्राहस्य च आ-

* अरिमित्रमिति मु०।   † स्थिता इति मु०।

सारः स पार्ष्णिग्राहासारः, एवं आक्रन्दासारः, इति पश्चाद्वर्त्तिनो राजानश्चत्वारः। पुरस्तात् पञ्च तदेवो विजिगीषुः, इति दशराजकमिदं 'मण्डलं', 'विजिगीषोः', सम्बन्धि भवति। आसामेव प्रकृतीनां अग्रपश्चाद्भावभेदेन व्यपदेशभेदः। तथाग्रवर्त्तिनोऽरिव्यपदेश एव। पश्चाद्वर्त्तिनस्तु अरित्वेऽपि पार्ष्णिग्राहव्यपदेशः। 'एताः प्रकृतयो मूलं' इति [ ७। १५६।] मनुवचनव्याख्यायां कुल्लूकभट्टः। 'अन्यथाष्टौ समाख्याताः, तद्यथा अग्रतोऽरिभूमीनां मित्रमरिमित्रं मित्रमित्रमरिमित्रमित्रञ्चेति। एवञ्च चतस्रः प्रकृतयो भवन्ति, पश्चाच्च पार्ष्णिग्राहः, आक्रन्दः पार्ष्णिग्राहासारः आक्रन्दासार इति चतस्रः, एवमष्टौ प्रकृतयो भवन्ति' इति ॥ १७ ॥

अरिप्रकृतेरेव* बलापेक्षं संज्ञान्तरमभिधातुमाह, अरेश्चेति। 'अरेः' यातव्यस्यापि, 'भूम्यनन्तरं' भूम्यनन्तररूपो रिपुः, 'मध्यमः', नाम, 'विजिगीषोः', 'च' अपि, रिपुरेव भवति। उभयोररिभावादरित्वमिपत्वयुक्तः, स च मध्यमः 'संहतयोः' एकीभूतयोस्तयोररिविजिगीष्वोः, 'अनुग्रहे' कोषदण्डाभ्यामुपकारे, 'समर्थः' प्रभुः, तदपेक्षया हीनशक्तित्वात्। तयोरेव 'व्यस्तयोः' भिन्नयोः, निग्रहे दण्डने च प्रभुः, एकैको मध्यमस्य युद्धे समर्थो न भवतीति। अत्र 'मध्यमस्य प्रचारञ्च विजिगीषोश्च चेष्टितं' इति [ ७। १०५। ] मनुवचनव्याख्याने कुल्लूकभट्टेनैवं कृतं 'अरिविजिगीष्वोर्यो भूम्यनन्तरः संहतयोरनुग्रहे समर्थो निग्रहे चासंहतयोः समर्थः स मध्यमः तस्य प्रचारं चिन्तयेत्' इत्यादि ॥ १८ ॥

मण्डलाद्बहिरुदासीनप्रचारमभिधातुमाह, *मण्डलादिति। 'एतेषां' विजिगीष्वरिमध्यमानां, 'मण्डलात्', भूभागात्, 'बहिः' सान्तरो विजिगीषोर्भूम्यनन्तरः, 'उदासीनः', नाम, 'बलाधिकः' बलापेक्षया भवति। स च 'संहतानां' तेषामरिविजिगीषुमध्यमानां, 'अनुग्रहे'

---

* मध्यस्थले हि चैतेषामिति म०।

साहाय्यदाने, 'यस्तामां' तेषां, 'बधे' बधदण्डने, 'च', 'प्रभुः' पूर्ववत् समर्थः। अत्र 'उदासीनप्रचारञ्च' [७।१५५] इति मनुवचनं, 'न तथा अरिविजिगीषुमध्यमानां यः संहतानामनुग्रहे समर्थो निग्रहे चासंहतानां समर्थः स उदासीनस्तस्य प्रचारं चिन्तयेदिति' तद्व्याख्यानञ्च॥ १९॥

विजिगीष्वरिमध्यमोदासीनानां मूलप्रकृतित्वमाह, मूलप्रकृतय-स्त्विति। 'एताः' अनन्तरोक्ताः विजिगीष्वरिमध्यमोदासीनरूपाः, 'चतस्रः' चतुःसङ्ख्याकाः, 'मूलप्रकृतयः' अपरासां प्रकृतीनाममात्यादीनां मूलभूताः प्रकृतयः, कारणप्रयोगसन्निहितत्वात्, *'प्रकीर्त्तिताः' कथि-ताः, †'एतत्', 'चतुष्कं' चतुर्भेदभिन्नं, 'मण्डलं', ‡'तन्त्रकुशलाः' नीति-तन्त्रप्रवीणाः, 'मयः' मयनामाचार्यः, 'आह',। एतदुक्तं मनुनापि 'एताः प्रकृतयो मूलं मण्डलस्य समासतः' इति [७।१५६]॥ २०॥

विजिगीष्वरिमित्रपार्ष्णिग्राहमध्यमोदासीनानां षण्णां षड्राजक-मण्डलत्वं पुलोमेन्द्राभ्यामुक्तमित्याह, विजिगीषुरिति। स्पष्टं॥ २१॥

विजिगीषोर्द्वादशराजकमण्डलस्योदासीनमध्यमसहितस्य द्वादशरा-जकमण्डलत्वं उशनःसम्मतमित्याह, उदासीन इति। प्रतीतं॥ २२॥

अनन्तरोक्तद्वादशराजकमण्डलस्यैकैकस्य मित्रामित्रसहितस्य द्वा-दशत्रिकरूपषट्त्रिंशद्राजकमण्डलत्वं मयाचार्येण पुनः कथितमित्याह, द्वादशानामिति। 'षट्त्रिंशत्कं' द्वादशत्रिकं षट्त्रिंशद्भवन्तीति। 'ते च' द्वादश नरेन्द्राः। 'ते च' मित्रामित्रे एकैकशो मित्रामित्ररूपेण चतुर्विंशतिरिति 'षट्त्रिंशत्कं', मण्डलं, 'पुनर्मयः', आह॥ २३॥

अनन्तरोक्तानां द्वादशमण्डलनरेन्द्राणां पृथक् प्रत्येकं अमात्याद्याः पञ्च प्रकृतयो भवन्ति इति मानवशिष्याणां मतमाह, द्वादशानां नरेन्द्राणां पञ्चेति। 'द्वादशानां नरेन्द्राणां' द्वादशमण्डलनरेन्द्राणां, 'पृथक् पृथक्' प्रत्येकं, 'पञ्च पञ्च', भवन्ति। 'अमात्याद्याश्च' अमात्य-

---

* परिकीर्त्तिता इति मु०। † आदेवेति मु०। ‡ मन्त्रकुशल इति मु०।

राष्ट्रदुर्गकोशदण्डाख्याः, 'प्रकृतीः', 'आमनन्ति' विगणयन्ति, 'मानवाः' मनुशिष्याः। स्पष्टमन्यत् ॥ २४ ॥

ततश्च किं भवतीत्याह, मौला इति। 'मौलाः' मूलभूताः, 'द्वादश' द्वादशसङ्ख्याकाः, 'याः', स्वामिप्रकृतयः, 'तथा अमात्याद्याः याश्च', गुणकस्वरूपाः पञ्च, ताः 'एताः', *'अधिका सप्ततिः' द्विसप्ततिसङ्ख्याका प्रकृतयः, एतत् 'सर्वं प्रकृतिमण्डलं', इति मानवा मन्यन्ते। एतदुक्तं मनुना "अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः। प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥ [ ७ । १५७ ] इति। मनुवचनव्याख्याने कुल्लूकभट्टेनैवं उक्तं। 'आसां मूलप्रकृतीनां चतसृणां अष्टानां शाखाप्रकृतीनां उक्तानां एकैकस्याः प्रकृतेः अमात्यदेशदुर्गकोषदण्डाख्याः पञ्च मध्यप्रकृतयो भवन्ति, एताश्च पञ्च द्वादशानां प्रत्येकं भवन्त्यो द्वादशगुणजाताः षष्टिरेव मध्यप्रकृतयो भवन्ति, तथा मूलप्रकृतिभिश्चतसृभिः शाखाप्रकृतिभिश्चाष्टाभिः सह संक्षेपतो द्विसप्ततिप्रकृतयो मुनिभिः कथिताः' इति ॥ २५ ॥

बृहस्पतिसम्मतमष्टादशराजकं मण्डलमभिधातुमाह, संयुक्तस्विति। 'उभयारिः', विजिगीषुयातव्ययोर्भूम्यनन्तरं, एकार्थाभिनिवेशमरित्वञ्चेति वचनात्। 'तथा सुहृत्' एवं उभयमित्रः, 'अरिमित्राभ्यां संयुक्ताः', षट् राजानो भवन्ति, 'मौला द्वादश राजानः', एवमष्टादशराजकमण्डलं गुरुर्मन्यते ॥ २६ ॥

एतद्राजमण्डलं अष्टोत्तरशतं कवयो मन्यन्ते इत्याह, अष्टादशानामिति। अनन्तरोक्तानां 'अष्टादशानामेतेषां', 'पृथक् पृथक्' एकैकस्य, 'अमात्याद्याः' अमात्यराष्ट्रदुर्गकोशदण्डमित्ररूपाः षट् राजानो भवन्ति। एवं अष्टादशकं अष्टोत्तरशतं भवति। स्पष्टमन्यत् ॥ २७॥

चतुःपञ्चाशद्राजकं मण्डलं विशालाक्षसम्मतमभिधातुमाह, अष्टेति। मतान्तराणि सर्वाणि देशकालपात्रापेक्षया सार्थकानि इष्ट-

---

* सप्ततिरधिका इति ग०।

द्यानि। अस्मिन् मते उक्ताष्टादशानां प्रत्येकस्य 'अमात्याद्याः', अमात्यराष्ट्रदुर्गाणीति त्रयं त्रयं भवति। तेन गुणिताश्चतुःपञ्चाशत् सम्पद्यन्ते। एतत्त्रिगुणितं मण्डलं विशालाक्षमतं ॥ २८ ॥

चतुर्विंशत्यधिकत्रिशतमण्डलं केषाञ्चिन्मतमाह, चतुःपञ्चाशतामिति। अनन्तरोक्तानां 'चतुःपञ्चाशतां राज्ञां', 'पृथक् पृथक्' एकैकस्य, 'अमात्याद्याः', षट् राजानो भवन्ति। तेनैतदपरमण्डलं चतुर्विंशत्यधिकत्रिशतमितं भवति ॥ २९ ॥

अपरे चतुर्द्दशराजकं मण्डलं मन्यन्त इत्याह, सप्तप्रकृतिकमिति। समूहवाचित्वान्मण्डलशब्दस्यैतदभिन्नं 'मण्डलं' समूहं, 'परिचक्षते'। स्पष्टमन्यत् ॥ ३० ॥

मण्डलत्रिकषट्कपक्षमाह, मण्डलत्रिकमिति। पूर्व्वार्द्धं सुगमं। *'एते' विजिगीष्वरिमध्यमाः 'पृथक्' एकैकशः, 'मित्रयुक्ताः', षट् सम्पद्यन्ते इत्यर्थः ॥ ३१ ॥

षट्त्रिंशत्पक्षमाह, अमात्याद्या इति,। 'भूपतेः' अनन्तरोक्तभूपतिषट्कस्य, 'एकैकस्य', 'अमात्याद्याः प्रकृतयः', षट् भवन्ति। तेन षट्त्रिंशत्सङ्ख्या सम्पद्यते ॥ ३२ ॥

एकविंशतिराजकं मण्डलमपरनयवित्सम्मतमित्याह, सप्तप्रकृतिका इति। सप्तानामेकैकस्य 'विजिगीष्वरिमध्यमाः', त्रयो भवन्ति। तेन एकविंशतिसंख्या भवति ॥ ३३ ॥

अष्टचत्वारिंशत्कं मण्डलमभिधातुमाह, चत्वार इति। 'नेताः' विजिगीष्वरिमध्यमोदासीनाः, 'चत्वारः पार्थिवाः', 'पृथङ्मित्रैः सहाष्टकं', पृथक् पृथक् मित्रसहिताः सन्तः अष्टकं भवति। तदेव 'अमात्यादिभिः' पूर्व्वोक्तैः षड्भिः प्रकृतिभिः सह, षड्गुणितमित्यर्थः। 'जगत्यक्षरसम्मितं' द्वादशाक्षरनिबद्धजगतीच्छन्दोगताष्टचत्वारिंशदक्षरसम्मितं भवतीति ॥ ३४ ॥

---

* एतैरिति मु०।

† पश्चिमे चेति मु०।

दशराजकमण्डलमभिधातुमाह, विजिगीषोरिति। व्याख्यातपूर्वं ॥ ३५ ॥

षट्‌त्रिंराजकं मण्डलमभिधातुमाह, दशानामिति। श्लोकव्याख्यानं सुप्रतीतं ॥ ३६ ॥

त्रिंशत्काभिधं मण्डलमभिधातुमाह, अरिमित्रे इति। 'नेतुः' विजिगीषोः, 'पुरः' अग्रतः, 'अरिमित्रे' भूम्यनन्तरभूम्येकान्तरौ द्वौ, '*पश्चिमे ते च' पश्चिमौ च, तथैव भूम्यनन्तरभूम्येकान्तरसंज्ञौ द्वौ, विजिगीषुणा सह पञ्चकं भवति। 'तेषां पृथक् अमात्याद्याः', षट् भवन्ति। एवं गुणिते त्रिंशत्संख्या सम्पद्यते ॥ ३७ ॥

यथा विजिगीषोरुक्तया प्रयोरनन्तरोक्तन्यायेन पञ्चकं त्रिंशत्कञ्चेति चोद्यमित्याह, अरेरप्येवमेवेतीति। स्पष्टं ॥ ३८ ॥

परासरसम्मते द्वे प्रकृती न्याय्ये इत्याह, द्वे एवेति। 'न्याय्ये' न्यायोपपन्ने, 'अभियोक्ता प्रधानः' विजिगीषुरभियोक्ता, '†तथाऽन्यायाऽभियुज्यते'। स्पष्टं ॥ ३९ ॥

एकस्याः प्रकृतेरित्युक्तमाह, परस्परेति। 'परस्पराभियोगेन' यथा विजिगीषुणाऽरिः एवं अरिणाऽपि विजिगीषुरभियुज्यते। एवमेव विजिगीषुरभियोक्ता, 'तथाऽरेरपि'। य एवारिः स एव विजिगीषुः इत्यतः कारणात् एकैव प्रकृतिरित्येकप्रकृतिकमिदं मण्डलमित्यन्ये ॥ ४० ॥

उपसंहरन्नाह, इतीति। 'परिचक्षते,' पूर्वाचार्य्या इत्यर्थः। कामन्दकिनात्मनो बहुश्रमित्वख्यापनार्थं अयं ग्रन्थविस्तरदोषोऽपि न गणितः इति। उत्तरार्द्धं सुगमं ॥ ४१ ॥

एतदेव समर्थयन्मण्डलं छलेन रूपयति, अष्टशाखमिति। 'चतुर्मूलं' विजिगीष्वरिमध्यमोदासीनरूपाणि चत्वारि राजमण्डलमूलानि यस्य

* पश्चिमे चेति मु०।
† तथा न्याय्योऽभियुज्यत इति मु०।

स तं। 'षट्शाखं' उक्तानां चतुर्णां मूलानां प्रत्येकमरिमित्रे इत्यष्टौ राजानोऽष्टौ शाखा यस्य स तं। 'षष्टिपत्रं', विजिगीष्वादिद्वादशप्रकृत्यायां प्रत्येकममात्याद्याः पञ्च पञ्च प्रकृतय इति द्वादशानामित्यनन्तरोक्त [२५] श्लोकोक्ता याः षष्टिसंख्याः प्रकृतयः ता एव पत्राणि यस्य स तं। 'दये स्थितं' दैवं पुरुषकारं चेति दयं आधारभूतं तस्मिन् स्थितं। 'षट्पुष्पं' सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षट् गुणाः सन्ति ते पुष्पाणि यस्य स तं। 'त्रिफलं' उक्तषाड्गुण्यस्य फलभूता उत्तमा मध्यमा अवराः क्षयस्थानवृद्ध्यादयो ये लाभास्तान्येव फलानि यस्य स तं। एवं मूलमण्डलरूपं 'यो जानाति स नीतिवित्' ॥ ४२ ॥

मण्डले षाड्गुण्यप्रयोगमभिधातुमाह, पार्ष्णिग्राह इति। 'विजिगीषोः' यातव्यं प्रति गच्छतः, 'पार्ष्णिग्राहः' पार्ष्णिपक्षेण विघ्नविधायी पृष्ठतो भूम्यनन्तरः, '*नदासारः' पार्ष्णिग्राहस्यैव भूम्येकान्तरः, एतौ द्वावपि प्रभुमित्रे प्रकीर्त्तिते। एते प्रत्यायातव्यस्य मित्रे भवतः। 'आक्रन्दः' पार्ष्णिग्राहस्य भूम्यनन्तरः, विजिगीषुणा पार्ष्णिग्राहविग्रहणार्थमाक्रन्द्यते आहूयते इति। 'तदासारः', आक्रन्दस्य भूम्येकान्तरः, आपदि परित्राणार्थमासरतीति। द्वावेतावपि 'विजिगीषोः', यातव्यं प्रति उदाहृते मित्रे भवतः इत्यनुवर्त्तते ॥ ४३ ॥

अपरञ्च, पुरो यायादिति। 'पुरः' अग्रतः, 'यायात्', यातव्यं प्रति, 'विगृह्यैव' विग्रहं कारयित्वा, 'मित्राभ्यां' आक्रन्दतदासाराभ्यां, 'पश्चिमौ' पृष्ठस्थौ, 'अरी' पार्ष्णिग्राहमित्रे। 'पश्चिमाविव' पृष्ठस्थावरीव, 'पूर्वाभ्यां' मित्रमित्रमित्राभ्यां, 'अरिं', यातव्यं अरिमित्रमपि यातव्यं प्रति यायादित्यर्थः ॥ ४४ ॥

किञ्च, अरिमित्रस्येति। 'अरिमित्रस्य' यातव्यमित्रस्य, 'मित्रं' यत् तस्य पुरोवर्त्ति तच्च 'तत्कालेन' साधितमहोपकारेण, 'भूयसा' उपचितशक्तिना, 'संस्तभ्य' निरुद्धचेष्टं कृत्वा गन्तव्यमित्रं स्तम्भितं कृत्वा,

* तदाऽऽसारः इति मु०।

'उभयमित्रेण' उदासीनेन, विग्रहेण किमित्यसौ सम्भवति इति चेत् विजिगीषुणा सततमयः सततमेवं कला, 'पश्चाद्रूच्छेन्नरेश्वरः', नान्येति इत्यर्थः ॥ ४५ ॥

एतदेव समर्थयन्नाह, आक्रन्देनेति। 'आक्रन्देन' अनन्तरोक्तेन, 'आत्मना च', 'पार्ष्णिग्राहं' मध्यमं, 'प्रपीडयेत्', 'आक्रन्दासारभाजिना', 'आक्रन्देन', 'तदासारं' पार्ष्णिग्राहासारं, प्रपीडयेदित्यनुवर्त्तते ॥ ४६ ॥

पुरस्तात् विधेयमभिधातुमाह, मित्रेणेति। 'मित्रेण' पुरस्तादवस्थितेन, 'आत्मना' स्वेन, 'एव च', 'रिपोः', यातव्यस्य, 'उद्धरणं' उच्छेदनं, 'कुर्वीत', '*मित्रेण स्वमित्रेण' स्वीयमित्रेण सह वर्त्तमानेनारियातव्येन, 'रिपुमित्रं' यातव्यमित्रं, 'प्रपीडयेत्', ॥ ४७ ॥

अपरञ्च, अरिमित्रस्येति। 'अरिमित्रस्य मित्रस्य' यातव्यमित्रमित्रस्य, 'प्रपीडनं', 'एधितोपचितिः', 'कुर्वीत', 'उभयमित्रेण' पूर्वोक्तेन, 'मित्रमित्रेण' विजिगीषुमित्रमित्रेण 'च', प्रतीतमवशिष्टं ॥ ४८ ॥

किञ्च, अनेनेति। 'अनेन' अनन्तरोक्तेन, 'क्रमयोगेन', 'सदोत्थितः' सर्वदोद्यमप्राणो, 'अहितं' सर्वदापकारिणं 'प्रभुं' भूम्यनन्तरं 'मित्राणामन्तरन्तरा' मित्रभूम्यनन्तरं प्रभुमित्रमित्यर्थः, 'पीडयेत्, ॥ ॥ ४९ ॥

रिपुपीडने फलमाह, पीड्यमान इति। 'उभयतः' सन्दंशन्यायेन एकतो विजिगीषुणा, अन्यतो विजिगीषुमित्रैः क्रमोत्क्रमं व्यवस्थितैः, 'मनीषिभिः' प्राज्ञैः, 'पीड्यमानः', 'रिपुः', 'उच्छेदमायाति' उच्छिन्नो भवति, 'तद्वशे' विजिगीषुवशे '†वा', 'अवतिष्ठते' ॥ ५० ॥

स्वपरोभयमित्रस्यात्मसात्करणार्थमाह, ‡सर्वोपायैरिति। 'सर्वोपायैः' सामोपदानादिभिः, 'सामान्यं' शत्रोरात्मनः साधारणं, 'मित्रं'

* मित्रेण हि स्वमित्रेणेति मु०। † चेति मु०।
‡ सर्वोपायेनेति मु०।

2 c 2

उन्मूलनार्थं, 'आत्मसात्' आत्मन एवासाधारणं 'कुर्वीत', । 'हि' यस्मात् *'सुखोच्छेद्याः', निःसहायत्वादित्यर्थः, 'शत्रवः', 'मित्रात्', 'उच्छिन्नाः' विश्लेषिताः, 'भवन्ति', इति ॥ ५१ ॥

अरेरपि मित्रतापादनार्थमभिधातुमाह, †कारणैरेवेति । 'कारणैः' हेतुभिः, उपकाराख्यैः अपकाराख्यैश्च । 'मित्राणि', 'तथा', 'शत्रवः', 'जायन्ते', । शेषार्द्धं स्पष्टं ॥ ५२ ॥

विजिगीषुर्न केवलं मुख्यानेव जगति मित्रत्वेन स्थापयेत् चुद्रकानपीति दर्शयन्नाह, प्राधान्येनेति । 'प्राधान्येन' मुख्यतया, 'सर्वत्र' पत्तनग्रामादिषु दशसु स्वीयजनपदे यथायोगं परकीयजनपदेऽपि 'सर्वाः प्रजाः' समस्ता, वर्णाश्रमादिलक्षणाः, 'संसर्जयेत्' सामादिभिरानुरूप्येणानुरञ्जयेत् । "अनुरागे हि सार्वगुण्यं" इतिवचनात् 'तासां संसर्जनात्' सर्वप्रजाजनानुरञ्जनात् 'राजा' विजिगीषुः, 'सर्वाङ्गीं' सर्वावयवसम्पन्नां 'श्रियं' विभूतिं 'अश्नुते' भुनक्ति ॥ ५३ ॥

विजिगीषोर्मण्डलसाधनं समर्थयन्नाह, दूरेचरानिति । 'दूरेचरान्' अतिशयवहिस्तान्, ‡'मण्डलिनः' अनन्तरोक्तद्वादशराजकादीन्, तथाऽन्यान् बहिर्भूतांश्च, 'दुर्गवासिनः' आटविकान्, तथाऽरिमित्रादीनपि 'मित्रीकुर्वीत', यतः, 'तत्प्रायाः' मित्रप्रायाः, 'इह' जगति, 'मण्डलं' अनन्तरोक्तं, 'साधयन्ति' ॥ ५४ ॥

सर्वधर्ममभिधातुमाह, चलेदिति । 'ऊर्जितबलः' शक्तित्रयसम्पन्नः, 'मध्यमः', अनन्तरोक्तः 'विजिगीषया', 'चलेत्' अभियायात्, विजिगीषुः 'तदा' तदानीं, 'एकीभूय' मिलित्वा, 'अरिणा', यातव्येन सह कृतसन्धिः, 'तिष्ठेत्', 'अशक्तः', चेत् '§सन्धिना', हेतुभूतेन 'नमेत्' कोषादिभिरुपनमेत् ॥ ५५ ॥

---

* सुखच्छेद्या इति मु० । † कारणैरेवेति मु० ।
‡ माण्डलिकानिति मु० । § सन्धिमानिति मु० ।

उदासीने विजिगीषति मण्डलिनां सर्वधर्मेणावस्थानमाह, *विजिगीषत्युदासीन इति। 'उदासीने', विजिगीषया 'विजिगीषति', सति, 'सर्वे मण्डलिनः' विजिगीष्वरिमध्यमाः, सह मिलिला, 'सर्वधर्मेण', वक्ष्यमाणलक्षणेन, 'सह', 'तिष्ठेयुः', 'अशक्तयः', 'प्रणमेयुः', आत्मरक्षार्थं ॥ ५५ ॥ [क्षेपकः] ॥ १ ॥

उक्तस्यैव सन्धिधर्मं व्याख्यातुमाह, †समुत्पन्नेष्विति। 'कृच्छ्रेषु' महाव्यसनेषु, 'समुत्पन्नेषु' 'सम्भूय' एकीभावमुपेत्य, 'स्वार्थसिद्धये', 'आपत्प्रतरणं सम्यक्', कुर्वन्ति यत्तदिति वाक्यशेषः, 'सर्वधर्म इति स्मृतः' तत् सर्वधर्ममिति स्मृतं ॥ ५५ ॥ [क्षेपकः] ॥ २ ॥

अरिप्रकारकथनपूर्वकं तत्र विजिगीषोर्वृत्तमभिधातुमाह, सहज इति। 'सहजः' स्वकुलोत्पन्नो दायादादिः, 'कार्यजः' एकार्थाभिनिवेशित्वात् कार्ये जायते इति, 'द्विविधः शत्रुरुच्यते' ॥ ५६ ॥

शत्रौ विजिगीषोर्वृत्तस्य चातुर्विध्यमभिधातुमाह, उच्छेदापचयाविति। 'उच्छेदः' स्वभूमेः परित्यजनं, 'अपचयः' शक्तिभिर्वियोजनं, ‡'पीडनकर्षणे', वक्ष्यमाणलक्षणे, 'काले' अनुकूलसमये, 'इति' एतत्, 'विद्याविदः' दण्डनीतिज्ञाः, 'शत्रौ', विषयभूते 'वृत्तं' शीलं, 'चतुर्विधं' चतुःप्रकारं, विजिगीषोरित्यर्थः, 'प्राहुः' ॥ ५७ ॥

कर्षणपीडनयोः स्वरूपमभिधातुमाह, रेचनमिति। 'रेचनं', 'कोशदण्डाभ्यां' कोशदण्डतनूकरणं। 'महामात्रः' प्रधानः, 'परं' कर्षणादधिकं महामात्रवधादिकं। स्पष्टमन्यत् ॥ ५८ ॥

उच्छेदलक्षणमभिधातुमाह, समाश्रयविहीन इति। 'समाश्रय-

---

* विजिगीषत्युदासीने सर्वे मण्डलिनः सह।
सर्वधर्मेण तिष्ठेयुः प्रणमेयुरशक्तयः ॥ ५५ क्षेपकः ॥ १ ॥

† समुत्पन्नेषु कृच्छ्रेषु सम्भूय स्वार्थसिद्धये।
आपत्प्रतरणं सम्यक् सर्वधर्म इति स्मृतः ॥ ५५ क्षेपकः ॥ २ ॥
इदं श्लोकद्वयं मु॰ पु॰ नास्ति।

‡ पीडनं कर्षणमिति मु॰।

विहीनः' दुर्गमित्रबलरहितः, 'भूम्यनन्तरः' विजिगीषुभूम्यनन्तर इति चरेर्विशेषणं ॥ ५६ ॥

यैर्धर्म्मैररिः सुखोच्छेद्यो भवति तानाह, *लुब्ध इति। एवम्भूतयाऽरिसम्पदा युक्तो रिपुः सदा सुखोच्छेद्यो भवति ॥ ५६ ॥ [क्रोडः] ॥

कर्षणपीडनयोर्विषयमभिधातुमाह, †कर्षणमिति। 'कर्षणं' तनूकरणं, 'पीडनं' कर्षणादप्यधिकदुःखोत्पादनं महामात्रवधादिकं, 'काले', सर्वथानुकूले, 'कुर्वीत', विजिगीषुरित्यर्थः। 'आश्रयमानिनः' समाश्रयाभिमानिनः। उत्तरार्द्धं स्पष्टं ॥ ६० ॥

पूर्वोक्तः सहजो रिपुः सर्वथा उच्छेद्य इत्येवं दर्शयन्नाह, विभीषणेति। 'सूर्य्यसुतस्य' सुग्रीवस्य, विभीषणसुग्रीवयोः सोदर्यौ रावणवाली सहजौ रिपू। 'सर्वतन्त्रापहारित्वात्' मन्त्रराजादिकं सर्वतन्त्रं तदपहरणशीलत्वात् हेतोः, निजो रिपुरुच्छेद्य एव ॥ ६१ ॥

सोदर्यः कथमुच्छेद्यो भवतीति दर्शयन्नाह, छिद्रमिति। 'छिद्रं' रन्ध्रान्वेषित्वादि, '‡मर्म' यत्राभियुक्तमात्रो म्रियते। '§वीर्यं' बलवत्ता, 'निजो रिपुः' सोदर्यादिः। असौ 'अन्तर्गतः' अन्तःस्थितः, 'दहति'। अत उच्छेद्य एव। स्पष्टमन्यत् ॥ ६२ ॥

न केवलं शत्रुविशेष एवोच्छेद्यः, मित्रविशेषस्योच्छेद्यताऽभीष्टेति दर्शयन्नाह, वर्त्तते इति। 'यत्', 'मित्रं', 'उभयात्मकं', अर्थादरिविजिगीष्वोर्मध्यवर्त्ति भूत्वा, '‖अरिपक्षपातेन', 'वर्त्तते' विश्वस्ते विजिगीषौ अपकरोमीति कृताध्यवसायं भवति, 'तदुच्छिन्द्यात्', 'वज्रीव त्रिशिरसं' इन्द्र इव त्रिशिरोनामकदेवविशेषं, 'कृतत्वरः' अकृतविलम्बः। त्रिशिरा नाम देवविशेषो दानवारिः, इन्द्रस्यामित्रं,

---

* लुब्धः क्रूरोऽलसोऽत्यन्तप्रमादी भीरुरस्थिरः।
मूढो योधावमन्ता च सुखोच्छेद्यो रिपुः सदा ॥ ५९ ॥ क्रोडः।

† कर्षणमिति मु०। ‡ कर्म चेति मु०। § वित्तमिति मु०।
‖ पक्षपातेनेति मु०।

स दानवाधिपत्ये सुतरां स्निग्ध इति वञ्चिया निहत इति पौराणिकी कथा ॥ ६३ ॥

कार्यवशादरेरप्युपचयो विधेय इति दर्शयन्नाह, बलिनेति। 'बलिना' बलवता, '*दियता' प्रभुणा, 'विग्रहीतस्य' विग्रहकारिणः, 'कृच्छ्रवर्त्तिनः' सङ्कटापन्नस्य, 'शत्रोः', †'उपचयं कुर्वीत', 'आत्मोच्छित्तिविशङ्कया', भूम्यनन्तरादरावुच्छिन्ने बलिर्भूम्यन्तरो भवति बलवत्त्वात्। विजिगीषुमप्युच्छिन्द्यात् इति शङ्कया, भूम्यनन्तरकल्पेऽरावप्युपचयः कार्य एवेति ॥ ६४ ॥

एतदेव समर्थयन्नाह, यस्मिन्निति। 'यस्मिन्' भूम्यनन्तरकल्पेऽरौ, 'एनं' सम्राजं, 'स्वगोचरं कुर्वीत' स्वत्वभावे स्थापयेत्। स्पष्टमवशिष्टं ॥ ६५ ॥

अपरञ्च, वंशागत इति। 'वंशागतः' स्वकुलप्रभवः, 'यो रिपुः', 'विचलेत्' एकार्थाभिनिवेशित्वात् अभिचरति, यतः सः 'दुरवग्रहः' कथमप्यात्मसात्कर्तुं न याति, 'तस्य संशमनाय' तद्दमनार्थं, 'तत्कुलीनं' तद्दायादं, 'आशु समुन्नयेत्' सत्वरमुत्थापयेत्, अयमेवैतत् प्रतीकार इति ॥ ६६ ॥

किञ्च, विषमिति। 'विषं', 'विषेण' स्थावरविषेण, 'अयते' निर्वीर्यं क्रियते नान्येन, 'वज्रं वज्रेण भिद्यते', 'दृढसारेण' परिचितबलेन पोषितेनेत्यर्थः। शेषः सुगमः ॥ ६७ ॥

अपरञ्च, मत्स्य इति। विभीषणसूचितमर्म्मप्रहारैरावण उच्छिन्न इति भावः। अवशिष्टं प्रतीतमिति ॥ ६८ ॥

द्वादशमण्डलाराधनायाह, यस्मिन्निति। 'यस्मिन् कर्मणि कृते', 'मण्डलसंक्षोभः' मण्डलस्य द्वादशराजकल्पस्य संक्षोभोऽमर्यादत्वमा भवति, 'मेधावी', विजिगीषुः, 'तन्न कुर्य्यात्', 'प्रजावी' एकादशापि

---

* द्विषत इति पु०। † अपचयमिति पु०।

राजप्रकृतीः, तदीयाश्च अमात्यादिकाः प्रकृतीः, 'अनुरञ्जयेत्', एवं कृते सकलमण्डलेष्टो भवति ॥ ६९ ॥

स्वपरविभागेन प्रकृतिषूपायप्रयोगमाह, साम्नेति। 'आत्मीयाः' मित्रादिकाः प्रकृतीः, 'साम्ना' सन्धिना, 'दानेन', 'मानेन' यथोचित-पूजया, 'अनुरञ्जयेत्', *'परकीयास्तु' शत्रुतन्मित्रादिकाः प्रकृतीः, 'भेददण्डाभ्यां', 'दारयेत्' हन्यात् ॥ ७० ॥

मित्रादीनामप्यात्मीयत्वं कादाचित्कमित्येतद्दर्शयन्नाह, आकाङ्क्ष-मिति। 'मण्डलं' चक्रवर्त्तिक्षेत्रं, 'सर्वं' निरवशेषं, 'आकाङ्क्षं' व्याप्तं, 'मित्रैः', 'अरिभिः', 'एव च', भूम्यनन्तरभूम्येकान्तरतया तत्र मण्डले 'सर्वः' निरवशेषः, 'लोकः', 'स्वार्थपर एव'। तथा चोक्तं 'स नास्ति पुरुषो लोके यः श्रियं नाभिवाञ्छति। अशक्तिभयमानात्तु नरेन्द्रं पर्युपासते' इति ॥ एवञ्च कस्यचिदपि मित्रत्वं न विद्यते,एकार्थाभिनि-वेशित्वादरित्वमेव सम्भाव्यमिति सर्वोऽपि लोकः स्वार्थपर एव। 'कुतो मध्यस्थता क्वचित्' क्वचिदपि कस्मात् माध्यस्थ्यं भवतीत्यर्थः ॥ ७१ ॥

एतदेव समर्थयन्नाह, भोगप्राप्तमिति। 'भोगप्राप्तं' भोगहेतुक-लोभसम्बद्धं, 'विकुर्वाणं' विकारं गच्छन्, 'मित्रमपि', 'उपपीडयेत्', 'आत्मनं विकृतं', चेत् 'हन्यात्', 'पापीयान्' निकृष्टतरः। स्पष्टमन्यत् ॥ ७२ ॥

हिताहितवर्त्तमानयोरेव मित्रामित्रस्वरूपत्वमित्याह, अमित्रमपि-पीति। 'उपचयावहान्' हितकारिणो जनान्, 'अमित्राण्यपि', पूर्वं 'मित्राणि', कुर्वीत। शेषार्द्धं सुगमं ॥ ७३ ॥

एतदेव समर्थयन्नाह, बन्धुरपीति। 'बन्धुरपि' सोदर्य्योऽपि, 'अहिते युक्तः' अहितकारी, स 'शत्रुः', 'तं परिवर्जयेत्', स्पष्टं शेषार्द्धं ॥ ७४ ॥

* परकीयानिति मु०।

† बन्धुरप्यहिते युक्तः शत्रुत्वं परिवर्जयेदिति टीकासम्मतः पाठः।

मित्रं दोषवदिति सूचितं तदेवात्र समर्थयति, मित्रमिति । 'बहुशः' वारं वारं, 'ज्ञातदोषं' सुविदितापराधं, 'विचार्य्य' निचाय्य, 'परित्यजेत्', नान्यथा । 'हि' यतः, 'अभूतदोषं' अज्ञातापराधं, 'त्यजन्', '*सः' विजिगीषुः, 'धर्म्मार्थौ', 'उपहन्ति', मित्रसाध्यस्यार्थस्तत्त्यागे स उपहन्यत एव ॥ ७५ ॥

विजिगीषोः स्वयमेव दोषगुणान्वेषित्वमाह, स्वयमिति । सुगमं ॥ ॥ ७६ ॥

व्यतिरेकमुखेनैतत् समर्थयति, न हीति । स्पष्टं ॥ ७७ ॥

मित्राणामनन्तरं कर्म्मभेदेन ज्यायोमध्यमकनीयसां स्वरूपमाह, मित्राणामिति । 'कर्म्माणि' उपकरणानि, ज्यायः कर्म्म उपकारलक्षणं यत् करोति तत् ज्यायोमित्रं । मध्यमं उपकारलक्षणं यत् करोति तत् मध्यमं मित्रं । कनीयः कर्म्म उपकारलक्षणं यत् करोति तत् कनीयो मित्रमित्यर्थः । श्लोकार्थः सुगमः ॥ ७८ ॥

मिथ्याभियोगकरणाश्रवणे निषेधति, न हि मिथ्येति । स्पष्टं ॥ ७९ ॥

विजिगीषुणा मित्रादिविषये परप्रयुक्तानि वचनानि परीक्षणीयानि इति दर्शयन्नाह, प्रायोगिकमिति । 'प्रायोगिकं' भेदाद्युपायरूपप्रयोगभवं । यथा मुद्राराक्षसे चाणक्यचन्द्रगुप्तयोः कृतकलहयोर्भेदं कर्त्तुं राक्षसप्रयुक्तो वैतालिकः पठति—

"भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूतो यः र्भ्मन्यते त्वमिव प्रभुः" ॥ [मु॰ ए॰ ६७]

इत्यादि । 'मात्सरिकं' मत्सरभवं, यथा तत्रैव नेपथ्ये चाणक्योक्तिः, "आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति" इति । 'माध्यस्थ्यं' इच्छाद्वेषराहित्यं, यथा तत्रैव चाणक्यः, परवचनमाकर्ण्य "नूनं सङ्गमः न ज्ञानात्मसदृशेषु राक्षसः कलमं न्यासीकरिष्यतीति" [ए॰ १४] ।

* 'सः' इत्यस्य स्थाने 'हि' इति म॰ प॰ पठितं ।

'पात्रपातिकं' पात्रपातेन युक्तं, यथा तत्रैव चरेण समर्पयता राक्षसनामाङ्कितां अङ्गुरीयकमुद्रां अङ्गुल्यां निवेश्य चाणक्येन मनस्येवोक्तं "ननु राक्षस एवास्मदङ्गुलिप्रणयी संवृत्तः" [पृ०१५] इति। 'सोपन्यासं' यस्मिन् वचसि स्थितस्य कार्यस्य उप समीपे न्यासः उपन्यासः तेन सह वर्त्तमानः सोपन्यासः। यथा तत्रैव चाणक्येन "भोः श्रेष्ठिन् स्वागतमिदमासनमास्यतां" इत्युक्ते चन्दनदासः प्रणम्य 'किं ण आणादि अज्जो, जहा अणुचिदो उवआरो अहिअदरस्स परिहवादो वि महत्तं दुःखमुप्पादेदि, ता इहज्जेव अहं उचिदाए भूमीए उवविसामि'इति। चाणक्यः "भोः श्रेष्ठिन् मा मैवं उचितमेतदस्मद्विधैः सह भवतस्तदुपविश्यतामासन एव। चन्दनदासः स्वगतं उवक्खिवदमणेण किम्पि" इत्येवंविध उपक्षेप उपन्यास उच्यते [पृ०२२]। '*सानुशयं', अनुशयः पश्चात्तापः तेन सह वर्त्तमानः तं। यथा तत्रैव राक्षसः पत्रमादाय ससम्भ्रमं, "मयि स्थिते कः कुसुमपुरमवरोत्स्यति। प्रवीरक प्रवीरक क्षिप्रमिदानीं—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयतां।
मुक्त्वा मृत्युभयं प्रहर्त्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः॥

विराधः, अमात्याक्षमावेगेन, वृत्तमिदं वर्ण्यते। राक्षसः सलज्जं "कथं वृत्तमिदं मया पुनर्ज्ञातं स एव कालो वर्त्तते" इति [पृ०४१।४२।] एतत् सर्व्वं सानुशयं वचः 'जानीयात्', ॥ ८० ॥

विजिगीषोर्मित्रविषये वृत्तमभिधातुमाह, प्रकाशेति। 'स्वयं', विजिगीषुः, 'सुहृदां' मित्राणां, 'प्रकाशपक्षग्रहणं' स्फुटतः एकपक्षमातं, 'न कुर्य्यात्', परन्तु 'एषां', मित्राणां, अन्योन्यमत्सरं', अहमेव

* संमर्यितमिति म०।

विजिगीषोर्मत इति परस्परमत्सरं, 'आशु' शीघ्रं, 'धारयेत्', स्पष्टं ॥ ॥ ८१ ॥

मित्रविशेषे वृत्तमभिधातुमाह, कार्य्यस्येति। 'कार्य्यस्य' पृथिवीपालनादेः, 'गरीयस्त्वात्' गुरुतरत्वात्, 'नीचानां' मित्रविशेषाणां, 'अपि', 'कालवित्' मित्रसाध्यकार्य्यकालज्ञः, 'सतोऽपि' विद्यमानानपि, 'दोषान्', 'प्रच्छाद्य' संगोप्य, 'असतः' अविद्यमानान्, 'गुणान्', 'वदेत्', ॥ ८२ ॥

बहुमित्रप्रशंसामभिधातुमाह, प्राय इति। 'प्रायः' बाहुल्येन, 'मित्राणि', 'सर्व्वावस्थानि' उत्तमाधममध्यमानि, म्लेच्छाटविकपुलिन्दयतिप्रभृतीनि, 'भूपतिः' विजिगीषुः, 'कुर्व्वीत', 'हि' यतः, 'बहुमित्रः' मित्रबाहुल्यवान्, 'रिपून्' शत्रून्, 'वशे स्थापयितुम्' वशीकर्त्तुं, 'शक्नोति' समर्थो भवति, नान्यथेत्यर्थः ॥ ८३ ॥

मित्रप्रशंसामाह, न तथेति। स्पष्टं ॥ ८४ ॥

मण्डलवृत्तमभिधातुमाह, अमित्राणीति। 'अमित्राणि', 'अवतः' पालयितुन्, 'दृढव्रतैः' अचलैः, 'मित्रैः' 'न गृह्णीयात्', शेषः सुगमः ॥ ॥ ८५ ॥

मण्डलं तच्छोधनञ्चाभिधातुमाह, मित्रेति। स्पष्टं ॥ ८६ ॥

विशुद्धमण्डलस्य राज्ञः प्रजाह्लादकत्वं साधुराजत्वमुपसंहरन्नाह, इतीति। सुप्रतीतं ॥ ८७ ॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां मण्डलयोनिर्नामाष्टमः सर्गः ॥ ० ॥

अथ नवमः सर्गः।

विशुद्धमण्डले षाड्गुण्यप्रयोगयोग्ये विजिगीषौ पूर्व्वपठितसन्धिप्रयोगं दर्शयन् सन्धिकार्य्यस्यावस्थामेव तावदाह, *बलवदिति हीन इति। 'बलवदिष्टहीनः' शक्तित्रयसम्पन्नशत्रुभिर्युक्तः। 'अनन्यप्रतिक्रियः' दुर्गमित्रादिप्रतिक्रियारहितः, नितरां हीयमान इत्यर्थः। सुतरां 'आपन्नः' सङ्कटापन्नः, 'कालयापनां कुर्व्वाणः', अर्थात् वाञ्छावेश केवलं, 'सन्धिमन्विच्छेत्', न तु कर्म्मणा सद्यसैव। एवं कृते कदाचित् अभियोक्तुः व्यसने समुपस्थिते विग्रहावसरो घटेतेत्यभिप्रायः॥ ॥१॥

षोडशविधसन्धिं श्लोकत्रयेणोपदेष्टुमाह, कपाल इति। अदृष्टनर इति, स्कन्धोपनेय इति। सुगमोर्त॥२॥३॥४॥

कपालोपहारसन्धिद्वयलक्षणमभिधातुमाह, कपालेति। 'समसन्धितः', घटकपालयोरिव विभिन्नयोररिविजिगीष्वोः शक्तिसाम्ये कोषदण्डाद्युपमतिं विनैव यः सन्धिः स समसन्धिस्तस्मात्, 'केवलं' नान्यथा इत्यर्थः। 'कपालसन्धिः', यथा कपालभङ्गप्रदेशे द्वितीयकपाले श्लेषिते बहिरभिन्न एव घटो दृश्यते न च निरन्तरसंश्लेषः, यथा सत्यशपथादिसन्धिकर्म्मरहितत्वात् वाञ्छावेश यः सन्धिः क्रियते स कपालसन्धिरुच्यते यथेष्टं, व्यभिचारादित्यर्थः। तथा 'सम्प्रदानात्' कोषदण्डादीनां सम्प्रदानेन 'यः' सन्धिः, क्रियते, 'स उपहारः' तन्नामकः सन्धिः, 'उच्यते'॥५॥

सन्तानसङ्गतनामकसन्धिद्वयलक्षणमभिधातुमाह, सन्तानेति। 'दारिकादानपूर्व्वकः' कन्यासम्प्रदानकृतो यः सन्धिः, सः 'सन्तानसन्धिः', 'विज्ञेयः', 'मैत्रीपूर्व्वः' मित्रताव्यवस्थापनपूर्व्वकः सन्धिः, 'सङ्गतसन्धिः'। स्पष्टमन्यत्॥६॥

---

* बलीयसाऽभियुक्तस्त्विति मु०।

सङ्कतसन्धेः केनाऽपि कारणेन चभेद्यत्वात् काञ्चनसन्धित्वमपरसम्मतमिति श्लोकद्वयेनाह, यावदिति। संगतं इति। 'यावदायुःप्रमाणः', चरिविजिगीष्वोः चायुषः प्रमाणं यावदस्थावस्थानमित्यर्थः। 'समानार्थप्रयोजनः' तयोर्द्वयोरपि चर्थः समानः प्रयोजनानि च समानानि भवन्ति। चर्थविषये कोऽप्यत्त्वदीयो मदीय एव, मदीयस्त्वदीय एवेति विभक्तिर्नास्ति, प्रयोजनविषये तु धर्मार्थकामविषयाणि प्रयोजनानि उभयोः समानानि न तत्र विभक्तिः काचिदस्तीत्यर्थः। 'सुवर्णवत् *प्रकृष्टत्वात्',। स्पष्टमन्यत्॥ ७॥ ८॥

उपन्याससन्धिलक्षणमाह, भव्यामिति। 'भव्यां' शुभां, 'एकार्थसंसिद्धिं' एकस्य भूम्याद्यर्थस्य या सिद्धिः तां 'समुद्दिश्य' लक्षीकृत्य, 'उपन्यासकुशलैः', उपन्यासचातुरीविद्भिः, त्वं गत्वा तां भूमिं ग्रहाणाहमपि गत्वा तामेव भूमिं ग्रहीष्यामीति उपन्यासपूर्व्वकं, 'यः' सन्धिः, 'क्रियते', 'सः' 'उपन्याससन्धिः', 'उदाहृतः', ॥ ९॥

प्रतीकारसन्धिलक्षणमाह, मयेति। स्पष्टं॥ १०॥

श्लोकान्तरेण तदेवाह, उपकारमिति। स्पष्टं॥ ११॥

संयोगसन्धिलक्षणमाह, एकार्थामिति। 'एकार्थां' एक एवार्थः प्रयोजनं यत्र तां, तुल्यप्रयोजनामित्यर्थः। '†यात्रां' 'सम्यगुद्दिश्य' सुचारुरूपेणाभिलक्ष्य, 'यत्र' सन्धौ, 'अभिगच्छतः' उपगच्छतः, चरिविजिगीषू इत्यर्थः। 'स तु सन्धिः', 'संहितप्रयाणः' परमविश्वासयुक्तः, 'संयोगः' तन्नामा, 'सन्धिः', उच्यते॥ १२॥

पुरुषान्तरसन्धिलक्षणमाह, चावयोरिति। 'यस्मिन्' सन्धौ, दण्डभयेन नतारिसमीपे एवं 'पणः' प्रतिज्ञा, 'प्रक्रियते', विजिगीषुणेत्यर्थः, यत् 'चावयोः', 'योधमुख्याभ्यां, प्रधानयोद्धृपुरुषाभ्यां सहिताभ्यां '‡सदर्थः' भूमिलाभादिः, 'साध्यः', इति 'स सन्धिः', 'पुरुषान्तरः' तन्नामक उच्यते॥ १३॥

---

* प्रकृष्टत्वादिति मु०। † क्रियामिति मु०। ‡ सदर्थ इति म०।

अदृष्टनरसन्धिस्वरूपमभिधातुमाह, त्वयैकेनेति। 'अदृष्टपुरुषः', विजिगीषोः कश्चन पुरुषो न दृश्यते यत्र स इति। अन्यत्सर्व्वं सुप्रतीतं ॥ १४ ॥

आदिष्टसन्धिलक्षणमभिधातुमाह, यत्रेति। 'यत्र' सन्धौ, 'ऊर्जितः' प्रबलः, 'रिपुः', 'भूम्येकदेशेन पणेन' भूम्येकदेशप्रदानप्रतिश्रुत्या, 'सन्धीयते', सः 'सन्धिविद्भिः' सन्धिधर्म्मविशारदैः, 'आदिष्टः' तन्नामकः सन्धिः, 'उच्यते', ॥ १५ ॥

आत्मामिषसन्धिस्वरूपमभिधातुमाह, स्वसैन्येन त्विति। 'स्वसैन्येन' स्वकीयेन सैन्येन, यत् 'सन्धानं', सः 'आत्मामिषः' तदाख्यया प्रसिद्धः सन्धिः, 'स्मृतः', यतः 'प्राणरक्षार्थं सर्व्वदानादुपग्रहः क्रियते', सकलभूहिरण्यादिदानेनाप्यात्मरक्षार्थमुचितमुपग्रहीतुमित्यर्थः ॥ १६ ॥

परिक्रयसन्धिलक्षणमभिधातुमाह, कोषांशेनेति। 'कोषांशेन' कोषस्य तृतीयचतुर्थभागेन, 'कुप्येन' सुवर्णरजतभिन्नेन, उक्तलक्षणेन 'सर्व्वकोषेण वा' अथवा कोषसाकल्येन, 'शेषप्रकृतिरक्षार्थं' कोषवर्ज्यावशिष्टप्रकृतिसंरक्षणाय, यः क्रियते सः 'परिक्रयः' तन्नामकः, सन्धिः 'उदाहृतः', ॥ १७ ॥

उच्छिन्नपरदूषणाख्यसन्धिद्वयलक्षणमाह, भुवामिति। सारभूमिदानमुच्छेदहेतुः इत्यर्थः। 'सर्व्वभूम्युत्थितफलादानेन', '*परदूषणः' तदैतत्सर्व्वं फलं न भवति त्वया परोपद्रवः कृत इति परोऽत्र दूष्यते इति तदाख्यः सन्धिः ॥ १८ ॥

स्कन्धोपनेयसन्धिलक्षणमाह, परिच्छिन्नमिति। 'परिच्छिन्नं' इयत्तया कृतसङ्ख्यं, 'फलं' हिरण्यादि, 'यत्र' सन्धौ, '†स्कन्धस्कन्धेन

---

* परिभूषणः इति मु॰ का॰। परदूषणस्तु टीकासम्मतः पाठः। परभूषणः इति शब्दक॰।

† स्कन्धः स्कन्धेनेति मु॰। प्रतिस्कन्धेनेति शब्दक॰।

दीयते', इयता कालेन एतावत्सङ्ख्यकं फलं देयमिति निबन्धेन व्यवस्थीयते, 'तं', 'स्कन्धोपनेयं' तदाख्यं, 'सन्धिं', तज्ज्ञा वदन्तीत्यर्थः ॥ १९ ॥

सम्भवतः सन्धिविशेषानभिधाय, सुश्लिष्टसन्धिलक्षणं येषां तानभिधातुमाह, परस्परोपकारश्चेति। 'परस्परोपकारः', रामसुग्रीवयोरिव यः सन्धिः। 'मैत्रः' मित्रत्वेनैव निरुपपदरितेन यो भवति। 'सम्बन्धजः' दारिकादानपूर्वकः, 'उपहारः' यत्र कोशाद्याक्रियते। स्पष्टं शिष्टं ॥ २० ॥

· एकस्यैवोपहारस्य प्रकृतसन्धित्वमस्तस्य्मतमित्याह, एक एवेति। 'मैत्रवर्जिताः सर्व्वेऽप्ये', त्रयः सन्धयः, 'उपहारस्य भेदाः' उपहारसन्ध्यन्तर्गता एव। स्पष्टमन्यत् ॥ २१ ॥

एतदेवोपपादयति। अभियोक्तेति। 'अभियोक्ता' विजिगीषुः, 'बली' प्रभावादिसम्पूर्णः, 'यस्मादलब्ध्वा न निवर्त्तते', तेन प्रार्थितमुपहरणीयमेव, तस्मादित्यादि सुगमं ॥ २२ ॥

असन्धेयमभिधातुं श्लोकपञ्चकेनाह, बाल इति। विरक्तेति। दैवेति। अदेशस्थ इति। *एतैरिति। श्लोकानामर्थः सुबोधः ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

· अनन्तरोक्तविंशतिसंख्यकानां पुरुषाणां एकैकशोऽसन्धेयत्वमभिधातुमादौ बालस्य तावदसन्धेयत्वे हेतुमाह, बालस्येति। स्पष्टं ॥ २८ ॥

वृद्धचिररोगिणोरसन्धेयत्वे कारणमाह, उत्साहेति। 'उत्साहशक्तिहीनत्वात्' उत्साहोऽध्यवसायस्तच्छक्तिहीनत्वात्, 'वृद्धः', विग्रहासमर्थ इत्यर्थः। 'तथा' एवं, 'दीर्घामयः', दीर्घव्याधिपीडितः, 'एतौ द्वौ', 'अपि', 'स्वैः' ज्ञातिभिः, 'एव', 'परिभूयेते', 'असंशयं', ॥ २९ ॥

---

* एतस्य श्लोकस्य चतुर्थपादे 'ध्रुवं यान्त्यचिरादशं' इति टीकासम्मतः पाठः ॥

कोपपराधीनेन परशुरामेण क्षत्रियगर्भजातेन एकविंशति वारान् पृथिवी निःक्षत्रिया कृतेति पौराणिकी कथा ॥ ४५ ॥

भ्रातृसंघातवतः सन्धेयत्वमभिधातुमाह, संघातवानिति। स्पष्टं ॥ ॥ ४६ ॥

बलिना सन्धिः कर्त्तव्य एवेत्याह, समाक्रान्तस्येति। बलवता समाक्रान्तस्य केनाप्युपायेन निस्तारो नास्तीत्यर्थः। स्पष्टः श्लोकार्थः ॥ ४७ ॥

किञ्च, इयदिति। 'इयदायच्छमानः' किञ्चिन्मात्रमादातुमुद्यतः, 'बलवान्' मत्तद्विपघाती सिंह इव, 'हिनस्ति' निहन्ति, 'तस्मात्', 'प्रियं' स्वाकुशलं, 'इच्छता', स 'सन्धेयः', एव, इति ॥ ४८ ॥

अपरञ्च, बलिनेति। स्पष्टं ॥ ४९ ॥

किञ्च, बलीयसीति। सुगमं ॥ ५० ॥

अनेकयुद्धजयिनः प्रशंसापूर्व्वकं सन्धेयत्वमाह, अनेकेति। अनेकयुद्धजयिनः सन्धेयत्वं दृष्टान्तेन समर्थयितुमाह, जमदग्नेरिति। सुप्रतीतं ॥ ५१ ॥

एतदेव समर्थयन्नाह, अनेकेति। स्पष्टं ॥ ५२ ॥

सन्धिरपि सर्व्वथा न विश्वसनीय इत्याह, न जात्विति। *'संहितः' कृतसन्धानः, 'बुद्धिमान्' सुचतुरः, 'जातु' कदाचित्, 'विश्वासं न गच्छेत्' न विश्वसेत्। 'हि' यतः, †'अद्रोहे' द्रोहाकरणविषये, 'समयं' प्रतिज्ञां, 'कृत्वा', 'इन्द्रः', 'पुरा' पूर्व्वस्मिन् काले, 'वृत्रं' तन्नामकमसुरं, 'अवधीत्' ॥ ५३ ॥

राज्यं विकारोत्पादीत्याह, विकारमिति। ‡'राज्यालीढः' राज्यलक्ष्म्याऽलङ्कृतः, 'पुत्रोऽपि', 'तथा पिता', 'विकारं' विकृतिमद्भावं, 'याति' प्राप्नोति। 'तत्' तस्मात्, 'लोकवृत्तात्' लोकचरितात्, 'नृपतेः', 'वृत्तं', 'अन्यत्' विलक्षणं, 'प्रचक्षते', सविकारा इत्यर्थः ॥ ५४ ॥

---

* सन्धित इति पु०। † अद्रोहसमयमिति पु०।
‡ राज्याघ्रोण इति पु०।

यत्र बलवान् सन्धिं नेच्छेत् तत्र विधेयमाह, अभियुक्त इति। स्पष्टं ॥ ५५ ॥

बलीयस्तराभावे विधेयमभिधातुमाह, *स्वशक्त्योत्साहमिति। स्वशक्तयः प्रभुमन्त्रोत्साहजन्या इत्युत्साहः शक्तित्वेन पठितोऽपि पुनरुपादीयते शौर्यस्याधिकारप्रदर्शनार्थं । 'तं' उत्साहं, 'उद्दीप्य' आत्मनि दृष्ट्वा, 'महत्तरं' आत्मनो ज्यायांसं, 'केशरीव द्विपं' केसरी द्विपापेक्षया महत्तरो न भवति किन्तु स्वशक्त्या उत्साहयुक्तस्तमेव निहन्तीत्यर्थः । 'विगृह्णीयात्', 'इति', भारद्वाजसम्मतमित्यर्थः । मतान्तरप्रदर्शनं गत्यन्तराभावे ज्यायसाऽपि विग्रहो भवति नान्यथेत्येवमर्थं ॥ ५६ ॥

एतदेव दर्शयति, एकोऽपीति । सुगमं ॥ ५७ ॥

ज्यायसा सह विग्रहगुणमाह, †ज्यायांसमल्पसैन्यस्येति । ज्यायांसं' शक्त्यधिकं, 'अल्पसैन्यस्य' उत्साहशक्त्यैवाधिकस्य, 'बलादिक्रम्य', 'निघ्नतः' व्यापादयतः, ‡'प्रतापसिद्धाः' विग्रहं विना प्रतापेनैव वशीभूताः, 'अपरे रिपवो भवन्ति', स्पष्टं ॥ ५८ ॥

विजयसन्देहे समेनापि सन्धिः बृहस्पतिसम्मत इत्याह, सन्धिमिच्छेदिति । स्पष्टं ॥ ५९ ॥

निःसन्देहप्रवृत्तिर्नीतिविदामभिप्रेतेत्याह, §आसम्प्रवृद्धेरिति । 'आसम्प्रवृद्धेः' सम्यक् प्रकृष्टवृद्धिपर्यन्तं, ¶'अभिवृद्धिकामः', विजिगीषुः, 'इह' पृथिव्यां, 'समेन सन्धानमुपगच्छेत्', व्यतिरेकेणैतद्दृष्टान्तयति 'अपक्वयोः' आमयोः, 'घटयोः' 'समसन्निपातः' तुल्याघातः, 'अन्योन्यभेदी' उभयोः परस्परभेदकारी भवति ॥ ६० ॥

---

* सोत्साहशक्तिमिति मु० ।

† ज्यायांसं हि स्वसैन्यस्येति मु० ।

‡ प्रतापसिद्धा इति मु० ।

§ तत्सम्प्रवृद्धेरिति मु० ।

¶ अतिवृद्धिकाम इति मु० ।

एतदेव दर्शयन्नाह, माना इति। 'सुन्दोपसुन्दौ' तन्नामकदानवौ तिलोत्तमाभिलाषात् समुपजातविरोधौ सोदर्य्यौ, 'समवीर्य्यौ' तुल्यपराक्रमौ, 'युधि किं हतौ न' अपि तु हतावेवोभावित्यर्थः। स्पष्टमन्यत्॥ ६१॥

न केवलं समो हीनोऽपि सन्धेय इति दर्शयन्नाह, *अतिहीनोऽपीति। 'अतिहीनोऽपि' दुरवस्थोऽपि, 'रिपुः', 'व्यसने' सङ्कटे, †'आगते' '‡सन्धेयः', 'हि' यतः, तदानीं सः, 'पतन्' आक्रामन्, 'हृते', 'तोयविन्दुरिव', 'मनः', 'दुनोति' दुःखितं करोति॥ ६२॥

सन्धिमनिच्छतो हीनस्य वधोपायमाह, न सन्धिमिति। §'हीनः', 'चेत्' यदि 'सन्धिं', ‖'न गच्छेत्', 'तत्र', कश्चित् 'असंश्रयः', 'हेतुः' कारणं विद्यत इत्यनुमीयते इति शेषः। तत्र सामादिभिस्तथा विधेयं यथा विस्रम्भो भवति। अनन्तरं 'तस्य', 'विस्रम्भं' ¶'आलस्य स्थिरीकृत्य, **'प्रहरेदतिनिष्ठुरं' यथा स समूलो नश्यतीति भावः। शेषः सुगमः॥ ६३॥

संश्रयवृत्तेर्हीनतरसन्धिमभिधातुमाह, बलीयसेति। 'बलीयसा' ज्यायसा, सह, दण्डादिभिरुपनतः हीनतरः 'अभिसन्धाय' सन्धिं कृत्वा, ††'तमनु' तमनुप्रविश्यानुजीविवृत्त्यादिना, ‡‡'प्रतियत्नवान्',

---

* विहीनोऽपीति मु॰।

† आगतः इति मु॰।

‡ सुसन्धेयोऽपीति मु॰। एतस्य तृतीयपादे हिमवदित्यस्य स्थाने हि मनः इति। चतुर्थपादे च चिन्तावित्यस्य चले इति पाठः टीकाकृतस्मातः॥

§ हीनैर्येति मु॰।

‖ गच्छेदिति मु॰।

¶ आलभ्येति मु॰।

** प्रहरेत्तं गतस्पृहः इति मु॰।

†† तं प्रविश्येति मु॰।

‡‡ प्रतापवान् इति मु॰।

त्यतिसन्धेयो भूत्वेत्यर्थः। *'तथा', 'असौ', बलीयान्, 'अनुगन्तव्यः' सेवनीयः, 'यथा', 'विस्रम्भं' विश्वासं, 'आप्नुयात्', इति ॥ ६४ ॥

एतदेव समर्थयति, विस्रम्भीति। 'विस्रम्भी' कव्यविश्वासः, 'नित्यमुद्युक्तः' सदा सावधानः, 'निगूढाकारचेष्टितः' समाचरिताकारचेष्टाविपर्य्यासः, 'प्रियाणि' जयजीवेत्यादिकानि, 'एव' केवलं, 'अभिभाषेत', किन्तु 'यत् कार्य्यं' विनाशादिकं, 'तत्', कार्य्यं, सम्पादनीयं, 'एव'-अवश्यं ॥ ६५ ॥

विस्रम्भफलं दर्शयन्नाह, विस्रम्भादिति। दितिगर्भसमुत्पन्नो दैत्यो मत्प्रतिबलो भविष्यतीति शङ्कया 'देवेन्द्रः' देवराजः, 'दितेः' दैत्यजनन्याः, 'गर्भं', 'अपातयत्', सप्तमन्यत्। ६६ ॥

न्यायस्याभियोक्तुरभिधेयमाह, युवराजेनेति। 'प्रधानपुरुषेण' मन्त्रिपुरोहितसेनापत्यादिना, 'सन्धाय' दृढतरं सन्धिं कृत्वा, 'अन्तःप्रकोपं' परस्परविरोधं, 'जनयेत्' कुर्य्यात्, 'अभियोक्तुः', 'स्थिरात्मनः', अपि तथा ॥ ६७ ॥

प्रधानपुरुषस्यार्थदूषणोपायमाह, अर्थोत्सर्गेणेति। 'महता' प्रचुरेण, 'अर्थोत्सर्गेण' हिरण्यादिधनदानेन, 'अपि च', †'अर्थसंहृतैः' मुद्राराक्षसोक्तन्यायेन भेदप्रतिपादकार्थसंहृतैः, 'लेखैः', 'प्रधानपुरुषस्य', अनन्तरोक्तस्य, 'आत्मदूषणं', 'प्रकुर्व्वीत', श्रेयः सुगमः ॥ ६८ ॥

दूषणफलमभिधातुमाह, दूषिते इति। 'धीमता' विजिगीषुणा, 'दूषिते' सम्पादितदोषे, 'महामात्रे' प्रधानामात्ये सेनापत्यादिके, 'रिपुः' प्रभुः, 'उग्रोऽपि' बलवत्तरोऽपि क्रूरोऽपि, ‡'स्वपक्षे' आत्महितपक्षे, 'अविश्वासं', 'याति', 'इत्यम्भूतः' एवम्प्रकारोऽभियोक्ता, 'निष्क्रियः' अभियोगक्रियारहितो भवतीत्यर्थः ॥ ६९ ॥

---

* तथा साध्वनुगन्तव्य इति मु०।
† अर्थसंचितैरिति मु०।
‡ स्वपक्षे यस्य विश्वास इत्यम्भूत इति मु०।

अरिसाधनस्यावश्यकत्वं तदुपायस्याभिधातुमाह, अरेरिति। 'अरेः' अभियोक्तुः, 'अमात्यान् सन्धाय', *'तदारम्भं' तत्कृतप्रतिकूलताचरणोद्योगं, †'शमं' उपशमनं, 'नयेत्' प्रापयेत्। 'भिषग्भेदेन' उत्कोचादिद्वारा वैद्यभेदं समुत्पाद्य, 'वा' अथवा, 'रसदानेन' विषप्रयोगेण 'शत्रुं', 'साधयेत्' मारयेत् ॥ ७० ॥

किञ्च, अरेः सर्व्वेति। 'सर्व्वप्रयत्नेन' अत्यादरेण, 'अरेः' 'पश्चात्', कोपं' कोपस्थानीयं, विषये वा कोपं कलहं, 'प्रकल्पयेत्' निष्पादयेत्, 'अथ', 'पश्चात्कोपं', 'आतिष्ठन्', विजिगीषुः, 'अनुसृत्य', ‡'प्रधर्षयेत्' हन्यात्, ॥ ७१ ॥

उपायान्तरमाह, §तद्देशेति, 'तद्देशकृतसंवासैः' तद्देशवासिभिः, तद्देशवासिनो हि प्रात्ययिका भवन्ति। 'चारैः' गूढपुरुषैः, 'नैमित्तिकैः' ज्योतिषिकव्यञ्जनैः, 'अरेः' अभियोक्तुः, 'उपोढव्यसनादेशं' उत्पातसूचितमहाभयङ्करापदादेशं, ¶'सिद्धव्यञ्जनैः', कार्य्याभूतैः; 'कारयेत्' विजिगीषुरित्यर्थः ॥ ७२ ॥

अभियोगत्यजनार्थे भूयोऽपि निषेधं दर्शयन्नाह, क्षयेति। 'क्षयः' प्रधानपुरुषादिवधरूपः, 'व्ययः' धान्यहिरण्यादीनामुपचयरूपः, 'आयासः' शीतोष्णवर्षदुःखसहनरूपः, 'वधः' युद्धे शस्त्रादिना मरणरूपः, 'आदि' शब्देनाङ्गवैकल्यादि 'दोषाः', विग्रहे भवन्तीति 'अपेक्षया' सम्भावनया, 'अवेक्षितसाधुवृत्तः' स्थिरीकृतभद्राभद्रनिश्चयः, विजिगीषुः, 'कामात्', कामतः, निरुपायपक्षे वरं, 'काञ्चित् पीडामपि', कोशादिप्रकृतेरित्यर्थः, 'इच्छेत्', 'हि' यतः, 'दोषाः', पूर्व्वोक्ताः, 'तत्प्रभवाः' विग्रहोत्पन्नाः, भवन्तीत्यर्थः ॥ ७३ ॥

---

* तदवस्थामिति मु॰।
† समुपशमयेदिति मु॰।
‡ प्रसाधयेदिति मु॰।
§ उद्देशेति मु।
¶ साधुलक्षणैरिति मु॰।

एतदेव स्पष्टयन्नाह, कलत्रमिति। 'कलत्रं' प्रेयसी स्त्री, 'आत्मा' सुसंस्कृतस्वकायः, 'सुहृदः' बान्धवाः मित्राणि च, 'धनानि' चतुर्विधानि रत्नानि, 'वृथा भवन्ति' निरर्थकानि जायन्ते, शस्त्रप्रहारैः गतजीवितस्य तत्कार्य्यासम्पादनात् 'निमेषमात्रात्', *'एव' निश्चितं, 'मुहुर्मुहुः' वारंवारं, विग्रहे सति, 'तानि' पूर्व्वोक्तानि, कलत्रादीनि, 'आकुलितानि' भवन्ति, 'तस्मात्', इत्यादि स्पष्टं ॥ ७४ ॥

अन्याये असंग्रामे स एव दोष इति दर्शयन्नाह, सुहृदिति। प्रतीतं ॥ ७५ ॥

विजिगीषोरभियुज्यमानस्य सामाद्युपायचयेण सन्धौ अभियोक्तृस्थापनमभिधातुमाह, साम्नेति। 'साम्ना' गुणसम्बन्धोपाख्यानपरस्परोपकारदर्शनायतिप्रदर्शनात्मोपनिधानरूपेण पञ्चविधेन कौटल्योक्तेन उपायविशेषेण, 'प्रदानेन' अपूर्व्वदानगृहीतप्रतिदानगृहीतानुवर्त्तनग्राह्यमोक्षरूपेण तदुक्तेन चतुर्विधेनोपायविशेषेण, 'विभेदनेन' शत्रुजननाशजननरूपेण द्विविधेनोपायविशेषेण च, 'अभियुज्यमानः', विजिगीषुः, 'सन्धित्सुः', यदि भवति, 'अपेतसन्धिं' अकृतसन्धिं, 'अस्य' अभियोक्तुः, 'सैन्यचक्रं' सैन्यसमूहं, 'सीमान्तं' सामन्तभूम्यन्तरं, 'आयान्तं' आगच्छन्तं, 'साधु', यथा भवति तथा, 'संस्थापयेत्' सन्धौ योजयेत् ॥ ७६ ॥

अभियोक्तारि विधेयमाह, सुगुप्तिमिति। 'सुगुप्तिं' आत्मनः समपरिच्छदस्य रक्षां, 'आधाय' कृत्वा, 'सुसंहतेन' अभेदेनैव सान्द्रीभूतेन, 'बलेन' चतुरङ्गेण सारतरेण, 'धीरः' धैर्य्यवान्, 'विचरन्' विविधं पुरतः पश्चात् सर्व्वतः चरन् विविधाचारप्रचारं कुर्व्वन्, 'अरातिं', सन्धिमनिच्छन्तं, 'सन्तापयेत्' उद्वेजयेत्, 'येन सुसम्मतः', भवतीति शेषः। यथा 'तप्तेन' तप्तलौहेन, 'तप्तः' सन्तप्तलौहपिण्डः,

---

* इवेति मु॰।

'सन्धानं' सम्मिलनं, 'उपैति' प्राप्नोति, 'नातप्तं लोहं तप्तेन सन्धत्ते' इति कौटल्योक्तेः ॥ ७७ ॥

उपसंहरन्नाह, इतीति। 'इति' एवमुक्तप्रकारेण, 'सन्धिवित्तमाः' अतिशयेन सन्धिविदः, 'सन्धिं', अनन्तरोक्तं, 'बभाषिरे' प्रोक्तवन्तः, †'पूर्व्वतमाः' शुक्रबृहस्पतिप्रभृतयो महर्षयः, ‡'बलात्' बलादाक्रम्य, 'तत्' तस्मात्कारणात्, 'एनं' सन्धिमनिच्छन्तं अरिं, 'विनयेत्' विधेयेन प्रापयेत् अविकारयेदित्यर्थः। 'समीक्ष्य' प्रज्ञया दृष्ट्वा, 'कार्य्यं', 'गुरु' गौरवशालि, §'च' एवं, 'इतरत्' लघु, 'द्विधा' द्विप्रकारं इति ॥ ७८ ॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां सन्धिकल्पो नाम नवमः सर्गः ॥ * ॥

---

* सन्तापमिति मु०।

† पूर्व्वतरा इति मु०।

‡ तद्वदेवं विजयप्रदेश्वरः इति तृतीयपादः मु० पु०। बलादेनं विषये-श्वरेश्वरमिति टीकासम्मतस्तृतीयपादः।

§ चेति नद्विधाः इति मु०। चेतरत् द्विधेति टीकासम्मतः पाठः।

## अथ दशमः सर्गः ।

सन्धिविकल्पानन्तरं विग्रहविकल्पमभिधातुं विग्रहकारणान्येव तावदाह 'अमर्षोपगृहीतानाम्' इति। परस्परापकारनिबन्धनोऽमर्षो मन्युश्च विग्रहकारणमिति भावः। श्लोकार्थः सुप्रतीतः ॥ १ ॥

न केवलम् अमर्षादिकं विग्रहकारणम् आत्मनोऽभ्युदयाकाङ्क्षाद्यपीत्याह, 'आत्मनः' इति। 'आत्मनः' स्वस्य, 'अभ्युदयाकाङ्क्षी', समुन्नयेच्छुः, ''पीड्यमानः परेण वा' शत्रुणा कृतापकारः, 'देशकालबलोपेतः' देशः विपक्षवशीकृतात्, पर्वतादेर्वा युद्धप्रतिबन्धकाद्भिन्नो देशः; कालः युद्धोपयोगिशरदादिरूपः; बलं सैन्यं, तैरुपेतः। यद्वा देशकालयोर्बलेन उपेतः। *'प्रारभेत', 'इह', 'विग्रहं' नान्यथा इत्यर्थः। ततश्च स्वस्य उन्नतीच्छा, परकृतापकारश्चैतत् द्वयमपि युद्धकारणमिति ॥ २ ॥

विग्रहोत्पत्तिकारणान्यभिधातुमाह, 'राज्य' इति। 'राज्यस्त्रीस्थानदेशानां' राज्यं प्रसिद्धं; स्त्री सीतादिकल्पा, स्थानं जनपदादि, देशः राष्ट्रैकदेशः, तेषाम्। 'यानं' हस्त्यश्वादि वाहनं, 'धनस्य' रत्नादेः, एतेषां प्रत्येकमपहारः, तथा 'मदः' शौर्य्यादिजनितो दर्पः, 'मानः' अहङ्कारः, अहमपि रावणो भयात् सीतां प्रत्यर्पयामि। इत्येवंरूपः; 'तथा', 'वैषयिकी', जनपदरूपविषयसम्बन्धिनी, 'पीड़ा च', विग्रहयोनिरिति, सम्बन्धः ॥ ३ ॥

अपराण्यपि विग्रहयोनित्वेन प्रसिद्धानीत्याह, 'ज्ञानार्थ' इति द्वाभ्याम्। ज्ञानविघातः ज्ञानस्य ज्ञानकारणीभूतोपाध्यायादेर्विघातः। अर्थस्य भूमिहिरण्यमित्ररूपस्य विघातः। धर्मविघातः धर्मस्य सामाजिकनियमस्य विघातः। शक्तिविघातः प्रभुमन्त्रोत्साहशक्तीनां विघातः, विघातशब्देनात्र सामान्यतोऽपह्नव एव ग्राह्यः। 'दैवं'

---

* आरभेत हि इति मु॰ पु॰ पा॰।

जन्मान्तरकृतं शुभाशुभविक्रम्। 'मित्रार्थे' मित्रसहायतासम्पप्रयाजनम्। 'अपमानं' मान्यानामवमानना। 'तथा बन्धुविनाशनम्'। 'भूतानुग्रहविच्छेदः' भूतेषु प्राणिषु योऽनुग्रहस्तस्य विच्छेदः, स्वेन दत्ताभयं प्राणिनं प्रत्यपरस्याक्रमणम्। 'तथा', 'मण्डलदूषणं' मण्डलस्य राज्यस्य प्रकृतीनामिति यावत्। दूषणं विरागः विद्रोहप्रवृत्तिः। 'एकार्थाभिनिवेशित्वम्', एकस्मिन् विषये उभयोराग्रहः। 'इति' एवंप्रकाराणि अन्यान्यपि परीवादस्तेयादीनि। 'विग्रहयोनयः' विग्रहस्य हेतवः भवन्तीति शेषः॥ ४। ५॥

कारणाभावात् कार्य्याभावं मन्यमानो विग्रहकारणानामुत्पन्नानामुपशमार्थमाह, 'राज्यस्त्री' इति। राज्यादीनाम् उक्तप्रकाराणां प्राधान्यात्पहृतानामपि 'दानेन' प्रत्यर्पणेन, *'दमेन' उपशमेन, 'च', 'विग्रहस्य' 'सम्यक्प्रशमनं', 'युक्तिज्ञैः' युक्तिविशारदैः, 'स्मृतम्'॥ ६॥

विषयभेदेन विग्रहस्य व्यवस्थापनमाह, 'एतदेव' इति। 'स्वार्थधर्मविघातजे', स्वार्थविघात-धर्मविघाताभ्यां जाते विग्रहे, 'एतदेव', पूर्वोक्तं प्रशमनम् एव। 'विषयध्वंसजे' शत्रुकृतविषयविनाशजनिते पुनर्विग्रहे, 'शत्रोः' 'विषयप्रतिपीड़नं', प्रशमनमित्यर्थः॥ ७॥

भिन्नविषयकस्य विग्रहस्य, प्रशमनोपायमाह, †'धनापहार' इति। 'धनापहारसम्भूते' भूहिरण्याद्यर्थविघातजे, 'ज्ञानशक्तिविघातजे' उपाध्यायप्रभुशक्त्यादिविघातजनिते, 'च', विग्रहे, ‡'शमः' प्रशमनं, §'तदर्थत्यागेन', 'क्षान्त्या' क्षमया, 'उपेक्षणेन', अन्यदीयादनुज्ञानात् समुद्भवेन स्वाभाविकेनेत्यर्थः॥ ८॥

मित्रनिमित्तविग्रहे प्रशमोपायमाह, 'अधर्म्म' इति। 'मित्रजाते मित्रवन्दे अधर्मद्रोहसंयुक्ते सति मित्रार्थं समुत्पन्ने विग्रहे 'उपेक्षा' प्रशमनं भवति। ‖'आत्मवन्मित्रवर्गार्थम्' कौटिल्योक्तमित्रगुणरूपात्म

---

* मदेन च इति मु॰ पु॰ पाठः। † धनापहारेति मु॰ पु॰। ‡ शम इति मु॰ पु॰। § तदर्थत्यागेनेति मु॰ पु॰। ‖ आत्मवान्मित्रवर्ग इति मु॰ पु॰।

विशिष्टमित्रद्वन्द्वे सति तु 'प्राणानपि परित्यजेत्', का कथा उपेक्षाया-दिष्वित्यर्थः ६॥

अवमाननाजनिते अभिमानसम्भूते च विग्रहे प्रशमनोपायमाह, 'अपमानात्' इति। सुगमम्॥ १०॥

बन्धुनाशसमुद्भवे विग्रहे प्रशमोपायं तावदाह, "रहस्येन प्रयोगेण रहस्यकरणेन वा। 'विग्रहम्' इति। 'रहस्येन' गोपनेन 'प्रयोगेण', सामादीनामिति शेषः। 'रहस्यकरणेन' रहस्यानि कोधोपशमन-मोहन-मारणादीनि आभिचारिकाणि तेषां करणेन 'वा',। 'बन्धुनाशसमुद्भवं', विग्रहं शमयेदित्यन्वयः। स्पष्टमन्यत्॥११॥

एकविषयाभिनिवेशजनिते विग्रहे प्रशमनोपायमाह, 'येन' इति। 'येन', अर्थत्यागेन, 'पीड़ा' प्रभुशक्तीनां क्षीणत्वं, 'न जायेत', 'विपक्षयाः', 'एकार्थाभिनिवेशजे' तुल्यविषयवासनामूलके विग्रहे, 'तादृशम्', 'अर्थपरित्यागं', 'कुर्यात्', न सर्वमिति तात्पर्यार्थः॥ १२ श्लो०॥ ॥ ११—१२—मु०॥

कोशापहारजनिते विग्रहे तदपहारसहनमेव प्रशमनोपाय इत्याह, 'धनापहारजाते तु विरोधम्' इति। †'धनापहारजाते', कोशापहरणजनिते विग्रहे सति, 'तु' पुनः, 'विरोधं' द्वन्द्वं, 'न समाचरेत्'। कस्मादित्याह, 'कदाचित्' इत्यादि स्पष्टम्। तस्मात्, धनापहारः सोढ़व्य इति॥ १३ श्लो०॥ १२—१३—मु०॥

एभिरेव कारणैः, बहुभिः सह समुत्पन्ने विग्रहे प्रशममाह, 'महाजन' इति। 'महाजनसमुत्पन्नं' बहुजनैः सह समुत्पन्नं 'विग्रहं' ‡'उपायन्यासयुक्तेन' प्रलोभनसहकृतेन, 'भेदेन', 'सामदानादिकेन

---

* "रहस्येन प्रयोगेण रहस्यकरणेन वा" इत्येतच्छ्लोकपूर्वार्द्धं मु० पु० नास्ति। सुतरामेतस्मात् मुद्रितपुस्तकेन सह संख्याङ्कव्यवस्थानवैपरीत्यं जातम्।

† धनापहारजाते तद्विरोधम् इति मु० पु०।

‡ उपायन्यासयुक्तेन सामदानादिकेन इत्येतदुत्तरार्द्धं मु० पु० नास्ति। सामदानादिकेन च अत्र सम्प्रदानादिकेन च इति क्वचित्पाठः।

च' उपायविशेषेण, 'प्रशमं' शान्तिं, 'नयेत्' प्रापयेत् ॥ १४ श्लो० ॥ ॥ १३ मु० ॥

भूतानुग्रहविच्छेदजे दैवजे च विग्रहे प्रशमनमाह, *'भूत' इति। भूतानुग्रहविच्छेदः अनन्तरोक्तः, तद्जातस्य विग्रहस्य 'अन्तं' शेषं 'वशी' विजितेन्द्रियः 'व्रजेत्', नान्य इत्यर्थः। शिष्टं प्रतीतम् ॥ १५ श्लो० ॥ १४ मु० ॥

मण्डलदूषणजे विग्रहे प्रशमनमाह, 'मण्डलक्षोभ' इति। 'मण्डल-क्षोभः' प्रकृतीनां विरागः विक्षोभः इति यावत्। 'उपायैः' सामादीनां येन-केनचिदपि उपायेन इत्यर्थः ॥ १६–श्लो० ॥ १५–मु० ॥

इदानीं वैरस्य प्रभेदमाह, 'सापत्नम्' इति। सपत्नः शत्रुस्तज्जं 'सापत्नं' 'वास्तुजं' भूम्यादिहरणविषयकविरोधजनितं, 'स्त्रीजं' स्त्रियां खेतरप्रणयघटितं, †'वाग्जं' वाग्दुरुत्पादितं, 'अपराधजं' अपराधजनितम्, एतत् 'पञ्चविधं' 'वैरं', वैरप्रभेदनिपुणैः' वैरापनोदनकुशलैः, 'स्मृतम्' ॥ १६–१७–श्लो० ॥ १५–१६–मु० ॥

प्रकारान्तरेण वैरं चतुर्विधमित्याह, सार्द्धश्लोकेन, 'जातम्' इति। द्विविधवास्तुजयोर्वैरयोर्मध्ये 'भूम्युपरोधेन जातं' भूमेराक्रमणेन उद्भूतं प्रथमम्, अनुपरोधेऽपि 'भूम्यनन्तरजातं' भूमेरनन्तरं अव्यवधानं तेन जातं सीमाविवादजमिति यावत् तत् द्वितीयम्। 'तथा', 'शक्ति-विघातजं' प्रभुमन्त्रोत्साहादिविघातजनितम्। 'तथा', 'मण्डल-क्षोभजं' द्वादशराजकरूपमण्डलक्षोभेण जनितम्, एवं 'चतुर्विधं' 'वैरजातं' ‡'वल्गुदन्तीसुतः' इन्द्रो मन्यते, दुष्प्रतिविधेयमिति शेषः। वाग्जातापराधजन्तु सुप्रतिविधेय एव ॥ १७–१८ श्लो० ॥ १६–१७ मु० ॥

सामान्यतो वैरं पुनर्द्विविधमित्याह, 'कृतापराधजे' इति। 'कृता-

---

* "भूतानुग्रहविच्छेदजातस्यान्तं व्रजेद्वशी" इत्ययम् का० पु० पाठः। 'भूता-नुग्रहविच्छेदे जाते नच वदेत् प्रियम्।' इति मु० पु० पाठः।

† वाग्जातजमिति मु० पु०। ‡ वऊदन्तीसुत इति मु० पु०।

पराधजं' कुलजम् अपराधजच, तत्र कुलजं पैतृकवैरानुबन्धेन जातं चिरसपत्नजमित्यर्थः, तत्तु निष्कारणकं, अपराधजन्तु सकारणकं 'मानवा मन्यन्ते' ॥ १६—श्लो० ॥ १८—मु० ॥

इदानीं षोड़शविधविग्रहान् न कुर्य्यादिति वक्तुं तानेव षोड़शविधान् विग्रहान् आह, 'किञ्चित्फलं' इति। 'किञ्चित्फलं' स्वल्पफलकम्। 'निष्फलं' फलरहितम्। 'सन्दिग्धफलं' संशयितफलम् *'एव वा'। †'तदात्वे' विग्रहसमकाले एव, 'दोषजननं' मित्रविरोधमण्डलक्षोभादिकरम्। 'आयत्यां' परिणामे, 'निष्फलं' फलरहितम्। स्पष्टमन्यत् ॥ १६—२०—श्लो० ॥ १८—१६—मु० ॥

'अपरिज्ञात' इति। 'अपरिज्ञातवीर्य्येण' अनधिगतसामर्थ्येन सह। 'वा' अथवा, 'दुष्टेन' अपरेण कपटिना, ‡'क्षोभितः' विग्रहे याचितविग्रहप्रवर्त्तितः सन्, विग्रहं न कुर्य्यादिति सम्बन्धः। 'परार्थं' परस्यार्थसम्पत्तये। 'स्त्रीनिमित्तं' स्वकार्थाभिनिवेशित्वेन स्त्रीलाभाय च। 'दीर्घकालं' बहुकालव्यापिनम्। 'द्विजोत्तमैः' ब्राह्मणैः, महापातकसम्बन्धात् विग्रहं न कुर्य्यादिति सम्बन्धः ॥ २०—२१—श्लो० ॥ १६—२०—मु० ॥

किञ्च, 'अकाले' इति। 'अकाले' विग्रहायोग्यकाले वर्षादौ। 'दैवयुक्तेन' दैवशक्तिसम्पन्नेन सह। §'बलोद्धतसखेन' बलगर्व्वितमित्रादिसहितेन वैरिणा च सह। 'तदात्वे' तत्काले फलजनकमपि उत्तरकाले फलविवर्ज्जितम्। उत्तरकाले फलजनकमपि आपाततो विफलम् विग्रहं न कुर्य्यादिति सम्बन्धः ॥ २१—२२ श्लो० ॥ २०—२१ ॥

पूर्व्वोक्तं षोड़शविधं वैरं नानुष्ठेयम् इत्याह, 'इतीमम्' इति। (किञ्चित्फलं, निष्फलं, सन्दिग्धफलं, इति त्रयम्। संशयसम-

---

* एव च इति मु० पु०। † एतस्य श्लोकस्योत्तरार्द्धे 'आयत्यां च तदात्वे च दोषसंजननं तथा' इति का० पु० पाठः। ‡ क्षुभित इति मु० पु०। § बलोद्धतसखेन इति मु० पु०।

समयमेव चानिष्टकरं चतुर्थम्। आयत्यां निष्फलम् पञ्चमम्। अवरोधकेनापि अपरिज्ञातवीर्य्येण सह षष्ठम्। दुष्टेन सह विग्रहं सप्तमम्। परार्थम् अष्टमम्। स्त्रीनिमित्तं नवमम्। दीर्घकालव्यापिनं च दशमम्। ब्राह्मणेन सह एकादशम्। असमये द्वादशम्। दैवबलसम्पन्नेन भूपतिना सह त्रयोदशम्। बलगर्व्वितबन्धुसहायेन च सह चतुर्द्दशम्। तत्कालं फलदायकमपि आयत्यां फलविवर्ज्जितं पञ्चदशम्। उत्तरकाले फलजनकमपि तत्कालं फलहीनम् षोड़शं विग्रहम्) 'इतीमं' 'षोड़शविधम्' 'एव' 'विग्रहं न कुर्य्यात्' ॥ २१—श्लो० ॥ २२—मु० ॥

विग्रहकरणकालमाह, 'तदात्वायति' इति। 'तदात्वायतिसंशुद्धं' वर्त्तमानोत्तरोभयकाले श्रेयस्करम्। 'विचक्षणः आरभेत, विग्रहमिति शेषः ॥ —२३ श्लो०॥ —२२ मु० ॥

येन कर्म्मणा तस्मिन् काले उत्तरकाले च श्रेयो भवेत् तदालम्बने न दोष इत्याह, 'तदात्वायतिशुद्धानि' इति। तदात्वे तत्काले कार्य्यानुष्ठानसमये इत्यर्थः। आयत्याम् उत्तरकाले च फलजनकं कर्म्म 'आतिष्ठन्' अनुतिष्ठन् 'नैव' 'वाच्यतां' निन्दनीयतां यातीति वाक्यशेषः ॥ २४ श्लो० ॥ २३ मु० ॥

उभयलोकाविरुद्धं कर्म्म कुर्व्वन् सर्व्वेषामेवानुरागभाजनं भवतीत्याह, 'साधु' इति। 'साधु' शोभनं: लोकद्वयग्राहि, इहलोकपरलोकसम्पादकं कर्म्म। अर्थलोभेन परलोको नोपेक्षणीय इत्याह 'परित्यजेत्' इति। 'अर्थलेशोपलोभितः' यत्किञ्चिदर्थलाभोपहृतः। २५ श्लो० ॥ २४ मु० ॥

परलोकविरुद्धं कर्म्म कुर्व्वन् सर्व्वेषामेवाविश्वासभूमिरित्याह 'परलोकविरुद्धानि' इति। आगमः शास्त्रं प्रमाणं यस्य तत्, तस्य भावस्तस्मात्। अन्यत् स्पष्टम् ॥ २६ श्लो० ॥ २५ मु० ॥

विग्रहस्य कालमाह, 'यदा' इति। 'मतिमान्' हिताहितविवेक

शक्तिमान् राजा 'यदा स्वकं बलं हृष्टपुष्टं' 'परस्य च विपरीतम्' अहृष्टपुष्टं 'मन्येत' अवगच्छेत्, 'तदा' 'विग्रहम् आचरेत्' अनुतिष्ठेत् ॥ २७ श्लो० ॥ २६ मु० ॥

अपरं विग्रहकालमाह 'स्फीतम्' इति। प्रकृतिमंडलं प्रजावर्गः ॥ ॥ २८ श्लो० ॥ २७ मु० ॥

अपरमपि विग्रहकालमाह 'भूमिः' इति। 'भूमिः मित्रं हिरण्यम्' एतत् 'त्रयं विग्रहस्य फलम्'। 'यदा एतत्' त्रयं भूहिरण्यादि नियतम्' असंशयमेव 'भावि' लभ्यं, 'तदा विग्रहम् आचरेत् ॥ २९ श्लो० ॥ २८ मु० ॥

विग्रहनिदानभूतानां भूहिरण्यादीनां श्रेयोपादेयतापरिज्ञानाय तारतम्यमाह 'गुरु विभाग्' इति। 'विभूतयः' राज्यसम्पदः, 'बन्धुसुहृद्गणाः' पुत्रपौत्रादिरूपसम्बन्धादिवशः सुहृदः। अन्यत् सुगमम् ॥ ३० श्लो० ॥ २९ मु० ॥

तुल्यबलं प्रतिपक्षं कौशलेनैव जयेदित्याह, 'सर्व्वसम्पत्समे' इति। 'बुधः' पण्डितः 'सर्व्वसम्पत्समे' सर्व्वसम्पदा समकक्षे 'शत्रौ' 'उपायान् निश्चिनुयात्' तं कौशलेन जेतुं यतेत इति भावः। 'समे' तुल्यबले शत्रौ 'अतियूढिः' अतिदृढैरप्युधैरिति यावत् 'उपायैः' कौशलैः 'दग्धोऽपि शम्यते' प्रशस्यते ॥ ३१ श्लो० ॥ ३० मु० ॥

अनियतौ हि जयपराजयौ, अतः सदुपाये न विग्रहं कुर्यात् इत्याह 'आगतम्' इति। 'विद्वान्' राजनीतिविशारदः, 'आगतम्' उपस्थितं 'विग्रहम्' 'उपायैः' सामदानादिभिः, 'प्रशमं' शान्तिं 'नयेत्' प्रापयेत्। उपस्थितं सङ्ग्रामानलं सामाद्युपायरूपसलिलसेचनेन निर्वापयेदिति भावः। 'विजयस्य हि अनित्यत्वात्' अनियततया 'रभसेन' हठात् 'न सम्पतेत्' नाक्रामेत् ॥ ३२ श्लो० ॥ ३१ मु० ॥

बलवता समाक्रान्तो नरपतिर्वैतसीं वृत्तिमेव समाश्रयेदित्याह, 'समाक्रान्तः' इति। 'श्रियं' राजलक्ष्मीम् 'अभंशिनीं' प्रच्युतिरहितां

श्रियं 'काङ्क्षन्' अभिलषन् राजा 'बलवता' प्रबलेन शत्रुणा 'समाक्रान्तः' सन् 'वैतसीं' वेत्रलतासम्बन्धिनीं 'वृत्तिम्' व्यवहारम् अवनतिम् इत्यर्थः, 'आश्रयेत्' 'न' तु 'भौजङ्गीं' भुजङ्गसम्बन्धिनीं वृत्तिम् औद्धत्यं 'कथञ्चन' आश्रयेत्। "दृष्टीविषान्तो न च मे प्रयासो थर्थः, स वैरप्रतियातनाय। अमर्षतः शोणितकाङ्क्षया किं पदा स्पृष्टन्तं दशति द्विजिह्वः?॥" इत्यत्र भुजङ्गस्वभावः प्रकटितः॥ ३३ श्लो०॥ ३२ मु०॥

वेतसभुजङ्गवृत्त्योः क्रमेण फलमाह 'क्रमात्' इति। स्पष्टमेतत्॥ ॥३४ श्लो०॥ ३३ मु०॥

अनवधान इव काले प्रतीक्षमाणोऽवश्यम्भावि फलमवेक्ष्य प्रहरेत् इत्याह 'मत्तप्रमत्तवत्' इति। 'पण्डितः' 'मत्तप्रमत्तवत्' मत्तः मद्योपयोगनिमित्तभ्रष्टबुद्धिः। प्रमत्तः उन्मादरोगग्रस्तः। (अनवधानः) इव 'स्थित्वा' छिद्रमन्विष्यन् कञ्चित्कालं गमयित्वा इति तात्पर्यम्। 'क्रमप्राप्ते' क्रमेण उपयुक्तकाललाभे 'मृगेन्द्रवत्' सिंह इव 'उत्लुत्य' सहसा आक्रम्य 'अपरिभ्रश्यमानं' अस्खलितसामर्थ्यमपि 'ग्रसेत्' आयत्तं कुर्यात्॥ ३५ श्लो०॥ ३४ मु०॥

यदात्मानं हीनबलं पश्येत् तदा बलवतः शत्रोः सकाशात् आत्मरक्षामेव कुर्यात् नत्वभियुञ्ज्यात्, प्राप्ते तु काले छिद्रमासाद्य प्रहरेत् इत्याह, 'कौर्म्मसङ्कोचम्' इति। कूर्म्मा हि प्रहारकाले दृढास्थिस्वदुर्गान्तर्गता भवन्ति, अन्यदा निःसरन्ति तद्वत्। अन्यत् सुगमम्॥ ३६ श्लो०॥ ३५ मु०॥

प्राप्तकालस्तु प्रहरेत् इत्याह, 'काले' इति। 'काले' यथासमयं कदाचित् 'गिरिवत्' 'सहिष्णुः', कदाचित् 'वह्निवत्' 'असहिष्णुश्च' भवेत्। स्पष्टमन्यत्॥ ३७ श्लो०॥ ३६ मु०॥

प्रीतिप्रदर्शनपूर्व्वकं कियत्कालं स्थित्वा शत्रोरभ्यन्तरं प्रविश्य प्राप्तकालस्तावदुत्तलेदित्याह 'प्रसादवृत्त्या' इति। हितस्य प्रियकारिणो लोकस्य वृत्तमिव वृत्तं चरितं यस्यां तया 'प्रसादवृत्त्या' रुचिमप्रीत्या

'निरन्तरं' निरवकाशं दुष्प्रवेशमिति यावत्। 'शत्रोर्हृदयं प्रविश्य' प्रभावोत्साहशक्त्यादिकं ज्ञात्वेत्यर्थः। 'काले' यदा फलमवश्यम्भावि तत्समये 'उच्छ्रितः' उत्पतितः सन् 'नयाग्रहस्तेन' नीतिरूपेण दक्षिण-करायेण वा 'प्रसह्य' सहसा 'श्रियः कचग्रहं कुर्व्वीत' राजलक्ष्मीं स्वायत्तां कुर्य्यादिति भावः॥ ३७॥

कीदृशः प्रभुर्दुर्ज्जय इत्याह 'कुलोद्गतम्' इति। 'कुलोद्गतम्' कुलेन उन्नतम्। 'सत्यं' सत्यनिष्ठम्। 'स्थिरम्' अचञ्चलम्। 'ऊर्ज्जितं' तेजस्विनम्। अन्यत् सुगमम्॥ ३८॥

कीदृशं प्रभुं सुखेनोन्मूलयितुं शक्यते इत्याह, 'असत्यता' इति। 'अकृतज्ञता' कृतस्य उपकारस्य अस्वीकारः प्रत्युपकाराकरणञ्च। 'अतिदीर्घसूत्रता' अवश्यकर्त्तव्यकर्म्मकरणे कालक्षेपः। 'अक्षः' द्यूत-क्रीड़ा। अन्यत् सुगमम्॥ ३९॥

यानकालमाह 'इति स्म' इति। 'विद्वान्' नीतिशास्त्रज्ञः 'इति स्म' पूर्व्वोक्तप्रकारेण 'दोषान्वितम्' असत्यतादिदोषयुक्तं 'विद्विषं' प्रभुं 'त्रिशक्तियुक्तः' स्वयं प्रभावोत्साह—मन्त्ररूप—शक्तित्रययुक्तः सन् 'आशु' विजिगीषया' जेतुमिच्छया 'व्रजेत्' अभिगच्छेत्। 'अतोऽन्यथा' कुर्व्वन् इति शेषः। 'आत्मनः उपघातं करोति' इति 'साधुजनस्य' 'सम्मतम्' अभिमतम्॥ ४०॥

उपसंहरति, 'समन्वितः' इति। 'राज्यपदेऽभिगीषया' राज्यस्य पदस्य, तयोरभिगीषा समुन्नतिकरणेच्छा, तया 'समन्वितः' युक्तः। 'परेक्षणैः' चारचक्षुषा 'वीक्षितमण्डलक्रियः' वीक्षिता पर्य्यवेक्षिता मण्डलानां क्रिया चर्य्या येन सः। 'स्थिरोद्यमः' दृढोद्योगः 'नृपः' 'इमं' 'विग्रहमार्गं' संग्रामपद्धतिम् 'आस्थितः' आश्रितः सन् 'सिद्धये' स्वाभीष्टसाधनाय 'सम्प्रयतेत'॥ ४१॥

इति कामन्दकीयनीतिसारटीकायामुपाध्यायनिरपेक्षानुसारिण्यां विग्रहकल्पो नाम दशमः सर्गः॥

---

एकादशः सर्गः।

सप्रपञ्चं विग्रहकल्पमभिधाय तदुपयोगितया मन्त्रविकल्प-मामेकादशं सर्गमभिधित्सुः प्रथमं तावत् सप्रभेदं यानम् आह। 'उत्कृष्टमलवीर्य्यस्य' इति। 'विजिगीषोः' यथोक्तलक्षणस्य। 'जयैषिणः' इत्यस्य विजिगीषोरित्यनेनैव प्राप्तिः पुनरुपादानं यानस्य जयैकोद्देश्यताप्रतिपादनार्थम् इति। "गुणानुरक्तप्रकृतेः' राजनीति-वशीकृत-मन्त्रिवर्गप्रजस्य। 'यात्रा' गमनविशेषः ॥ १ ॥

यानभेदान् आह, 'विगृह्य सन्धाय' इति। विगृह्य-यानं, सन्धाय-यानं, सम्भूय-यानं, प्रसङ्ग-यानम्, उपेक्षा-यानं चेति यानं पञ्चविधम् ॥ २ ॥

तानि क्रमेण विवृणोति। 'विगृह्य याति' इति। युयुत्सूनाम् आभिगामिकादीनां शत्रूणाम् अभिभवार्थं यानं प्रथमं विगृह्य-यानम् इति फलितार्थः ॥ ३ ॥

द्वितीयम् आह 'अरेर्मित्राणि' इति। क्वचित् 'अतिमित्राणि सर्व्वाणि सुमित्रैः सर्व्वतो बलात्' इति पाठः। शत्रु-मित्राणाम् अभिभवार्थं यानं द्वितीयं, विगृह्य-यानम् इति पर्य्यवसितोऽर्थः ॥ ४ ॥

सन्धाय-यानमाह 'सन्धायान्यत्र' इति। 'अन्यत्र' शत्रुन्तरपराभवार्थायां 'यात्रायां' 'पार्ष्णिग्राहेण' (८। १० श्लो) एकवर्त्तिना 'शत्रुणा' सह 'सन्धाय' यत् यानम् इति शेषः। क्वचित्तु 'सन्धायान्यत्र यद् यानम्' इत्येव पाठः। एष एव पाठः सुसङ्गतः। 'सन्धाय-गमनं' सन्धाय-यानम्। 'फलार्थिनः' प्रसुत-शत्रुन्तरपराभवरूपफलमपेक्षमाणस्य। प्रबलशत्रुपराभवार्थं एकशत्रुणा सह सन्धाय यत् यानं तत् सन्धाय-यानम् इति फलितोऽर्थः ॥ ५ ॥

सम्भूय-यानम् आह 'एकीभूय' इति। 'एकीभूय' ऐकमत्येन 'एकत्र' एकस्मिन् यात्रे, 'सामन्तैः' प्रान्तवर्त्तिभूपैः। 'सामवायिकैः'*

* साम्परायिकैरिति मु० पु० पाठः। युद्धनिपुणैरिति तदर्थः॥

समवायेन प्रत्यंशप्रदेशा वयन्ति ये तैः। 'प्रशिरोभिः' इति क्वचित् पाठः॥ ६॥

द्वितीयं सम्भूय-यानम् आह 'उभयोरपि' इति। 'उभयोः' अरि-विजिगीष्वोरिति शेषः। अरिरिह उपारिः। प्रकृतिरिह मतो मुख-मण्डलं सूर्यस्य च आदित्यमण्डलं, तन्नाशने उपस्थिते सूर्यो धूर्जमता सन्धाय राहुं जेतुं गत इति पौराणिकी वार्त्ता॥ ७॥

तृतीयं सम्भूय-यानम् आह 'अल्पसारानुपादाय' इति। 'अल्प-सारान्' अल्पः सारः प्रकृतीनां वीर्यं विभवः सामन्तान्। 'प्रतिश्राय फलोदये' जाते फले तव इदं भविष्यतीत्युक्ता-१* परं यातयम्। प्रथमे सर्वेषां मिते राष्ट्रे तुल्यं साम्यम्, अत्र तु यत्किञ्चिदेकस्येति विशेषः॥ ८॥

* प्रसङ्ग-यानम् आह 'अन्यत्र प्रस्थितः' इति। 'अन्यत्र' अन्यं यातव्यम् उद्दिश्य। 'सङ्गात्' प्रसङ्गात्। 'अन्यत्र' पूर्वमनुद्दिष्टमपरं प्रति। 'निदर्शनम्' दृष्टान्तः। दुर्योधनं यातव्यम् उद्दिश्य प्रस्थितस्य दुर्यो-धनेनोपकारैरात्मसात्कृतस्य शल्यस्य युधिष्ठिरो यातव्यः संवृत्त इत्याहुः पौराणिकाः॥ ९॥

उपेक्षा-यानम् आह 'रिपुं यातस्य' इति। 'बलिनः' बलवतो विजिगीषोरित्यर्थः। 'आविष्कृतं' प्रकटितं 'फलं' विजयरूपम्। 'सम्प्राप्य' प्रतिलभ्य। 'उपेक्ष्य' विजितं पलायमानम् आसन्नमपि शत्रुं हित्वा इत्यर्थः॥ १०॥

उपेक्षा-यानस्य दृष्टान्तम् आह 'निवातकवचान्' इति। 'निवात-कवचान्' तन्नामक-प्रचण्डदानवान्। धनञ्जयेनाक्रम्य पराभूतान् पातालतलं प्रति पलायमानान् आसन्नानपि निवातकवचान् उपेक्ष्य तन्निवासि हिरण्यपुरवासिनो दानवा निपातिता इति पौराणिकी वार्त्ता॥ ११॥

---

* फलोदयम् इति मुद्रितपुस्तकस्य पाठः।

अतः परं चयोदश श्लोकाः प्राचीन—टीकाकारसम्मता मुद्रित-पुस्तके न लभ्यन्ते। ते चास्माभिः समुद्धृत्य क्रमशो व्याख्यायन्ते। यथा—

"इतीमं षोड़शविधं न कुर्य्यादेव विग्रहम्।
तदा त्वायतिसंयुद्धम् आरभेत विचक्षणः॥"

इति। विजिगीषोर्यानस्याष्टविधतया तन्निष्ठस्य विग्रहस्य अष्ट-विधता, तत्प्रत्युनिष्ठस्य विग्रहस्यापि तावत्परिमितता सिध्यति। ततश्च विग्रहः षोड़शविधः। अन्यत् सुगमम्। प्राचीनटीकाकृत्सम्मता-नुसारेण द्वादशः श्लोक एषः॥

"तदा त्वायतिशुद्धानि सर्व्वकर्म्माणि चिन्तयेत्।
तदा त्वायति सन्तिष्ठेत् नेति नेतीति वाच्यताम्"॥

'सर्व्वकर्म्माणि' संग्रामादीनि लाभपालनादीनि च। प्रतीतमन्यत्॥ टीकाकृत्सम्मते चयोदशः श्लोक एषः।

"साधु लोकद्वयग्राहि विद्वान् कर्म्म समाचरेत्।
परीत्य परलोकार्थे पीड़नं नैव चाचरेत्॥"

इति। 'परलोकार्थे'—स्वर्गलाभार्थम्। 'परीत्य' परिगम्य उभयलोक-शुभसम्पादकं कर्म्म इति शेषः॥ प्राचीनटीकाकृत्सम्मते चतुर्दशः श्लोक एषः॥

"परलोकविरुद्धानि कर्म्माणि दूरतस्त्यजेत्।
इत्यागमप्रमाणत्वात् साधु कल्याणमाचरेत्॥"

इति। इत्यागमप्रमाणं 'साधु कल्याणम् आचरेत्' अन्यमपि पुरुषं परलोकविरुद्धानि कुर्व्वाणं दूरतस्त्यजेदिति प्रतीत इत्युक्तेन क्रमेण कल्याणम् आचरेत्। परलोकाभिगमे आगमसंज्ञं प्रमाणमस्तीति "वेदाः प्रमाणं स्मृतयः प्रमाणम्" इति प्रमाणवशात् सर्व्वदोभय-लोकाविरुद्धमातिष्ठेदिति॥ प्रा. टी. पञ्चदशः श्लोकोऽयम्॥

विग्रहस्यानुकूलं कालम् आह—

"यदा मन्येत मतिमान् हृष्टपुष्टं स्वकं बलम्।
परस्य विपरीतञ्च तदा विग्रहमाचरेत्" ॥ इति।

'हृष्टपुष्टम्' हृष्टं सम्मानादिभिः, पुष्टं भक्तवेतनादिभिः। 'स्वकं बलम्' आत्मीयं सैन्यं 'परस्य' प्रतियोगिनः प्रभोः 'विपरीतम्' अहृष्टपुष्टं च 'तदा विग्रहम् आचरेत्' जयस्य अवश्यम्भावित्वात्। प्राचीनटीकाकारसम्मतः षोड़शः श्लोकोऽयम् ॥

"नोपतापि यदा दैवं सुव्यक्तमुपलक्षितम्।
परस्य विपरीतञ्च तदा विग्रहमाचरेत्" ॥

इति। 'यदा दैवं न उपतापि' न प्रतिकूलम् इत्यर्थः ॥ प्रा० टी० सप्तदशः श्लोकोऽयम् ॥

"मित्रमाक्रन्द आसारो यदा स्युर्दृढभक्तयः।
परस्य विपरीताश्च तदा विग्रहमाचरेत्" ॥

इति। 'मित्रं' भूम्येकान्तरवर्त्ती भूपालः। 'विषयानन्तरो राजा शत्रुर्मित्रमतः परम्" अमरः। 'आक्रन्दः' पार्ष्णिग्राह—विषयानन्तरवर्त्ती राजा। 'आसारः' आक्रन्दस्य पश्चादेव भूम्येकान्तरं मित्रम् (८ स० १७ श्लो०) एते त्रयोऽपि यदा विजिगीषौ 'दृढभक्तयः' अविचलानुरागा भवन्ति। 'परस्य' शत्रयस्य 'विपरीताः' मित्राक्रन्दासाराश्च वीतभक्तयः। 'तदा विग्रहम् आचरेत्' ॥ प्रा० टी० अष्टादशः श्लोकोऽयम् ॥

विग्रहफलम् आह—

"भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम्।
यदैतत् नियतं भावि तदा विग्रहमाचरेत्" ॥

प्रतीतमेतत् ॥ टी० ऊनविंशः श्लोकोऽयम् ॥

फलत्रये गुरुलाघवम् आह—

"गुरु वित्तं ततो मित्रं तस्मात् भूमिर्गरीयसी।
भूमेर्विभूतयः सर्व्वाः—स्ताभ्यो बन्धुसुहृज्जनाः" ॥ इति।

'वित्तं' सुवर्णादि, तद् गुरु, तन्मूलत्वाद् व्यवहाराणाम्। ततोऽपि गुरु 'मित्रं' मित्रसाध्यत्वाद् वित्तस्य। 'तस्मात्' मित्रादपि 'भूमिर्गरीयसी'। 'भूमेर्विभूतयः सर्व्वाः' वित्तादिकाः। 'ताभ्यो बन्धुसुदुर्ल्लभाः' विभूतिसाध्यत्वात् तेषाम् इति। टी. विंशः श्लोकोऽयम्॥

समेनापि न विग्रहो विधेय इत्येतदेव समर्थयन् आह—

"सर्व्वसम्पत्समे शत्रौ उपायान् निक्षिपेद् बुधः।
उपायैरप्रतिव्यूढैः समे दण्डः प्रशस्यते"॥ इति।

'सर्व्वसम्पत्समे' सर्व्वाभिः सम्पद्भिः प्रभुमन्त्रोत्साहादिभिः समे समकक्षे 'शत्रौ' 'उपायान्' सामदानादीन् 'निक्षिपेत्' प्रयुञ्जीत। 'बुधः' नीतिपण्डितः। 'उपायैः' सामादिभिः 'अप्रतिव्यूढैः' अनिष्पादितकार्य्यैः सामादिषु उपायेषु विफलतामुपगतेषु इति भावः। दण्डोऽपि प्रशस्यते, गत्यन्तराभावादित्यर्थः। टी॰ एकविंशः श्लोकोऽयम्॥

एतदेव समर्थयन् आह—

"आगतं विग्रहं विद्वान् उपायैः प्रशमं नयेत्।
विजयस्य ह्यनित्यत्वात् रभसेन न सम्पतेत्"॥ इति।

यत्नतोऽपि 'आगतं विग्रहम्' 'उपायैः' अनन्तरोक्तैः 'प्रशमं नयेत्'। कुत इत्याह 'विजयस्य हि अनित्यत्वात्' विग्रहे विजयो नित्यं न भवति, हीनैरपि ज्यायांसो विजिता दृश्यन्ते, तस्मात् 'रभसेन न सम्पतेत्' सहसाक्रमणपरो न भवेदित्यर्थः॥ टी॰ २२ श्लो॰॥

उपायैः परिहर्त्तुमशक्ये विग्रहे समाश्रयणीयां वृत्तिं प्रदर्शयन् आह—

"समाक्रान्तो बलवता काङ्क्षन्नभ्युन्नतिं श्रियम्।
आश्रयेत वैतसीं वृत्तिं न भौजङ्गीं कदाचन"॥ इति।

'समाक्रान्तः' सर्व्वतो निरुद्धचेष्टः 'अभ्युन्नतिम्' अविनश्वरां 'वैतसीम्' अनुप्रवेशस्वरूपां गत्यन्तराभावात्। शेषं सुगमम्॥ टी॰ २३ श्लोकः॥

एतदेव समर्थयन् आह—

"क्रमादेकसहायस्तु प्राप्नोत्यर्थमभिप्सितां श्रियम्।
भुजङ्गवृत्तिराप्नोति वधमेव तु केवलम्" ॥

इति। सुगमम्॥ टी॰ २४ श्लो॰॥

संश्रयवृत्तिं दर्शयन् आह—

".. .. .. .. .. .. .. .. .. ..।
प्रमत्तमत्तवत् स्थित्वा प्रसेनेतस्तु पण्डितः" ॥

इति। प्रथमपादद्वयमस्माभिर्नोपादितं विलुप्तं वा॥ तत्तु "अन्तर्बलं समासाद्य संरोहन्तः प्रविश्य च।" इत्येवं भवितुमर्हति इति॥ टी॰ २५ श्लो॰॥

यानभेदानभिधाय यातव्यलक्षणम् अभिधातुं अवसरेन एव यातव्यतया व्यसनम् आह 'स्त्रियोऽथ पानं मृगया तथाक्षाः' इति। 'अक्षाः' द्यूतानि। 'दैवोपघातः' दैवी आपत्। 'बहुप्रकारः' दुर्भिक्षमारकादिः। स्त्रीव्यसनं, पानव्यसनम्, अक्षव्यसनं, दैवोपघातव्यसनञ्चेति चतुर्विधं व्यसनमत्रोक्तम्। एवमन्यदपि व्यसनम् ऊहनीयम्। 'अनेन' व्यसनेन 'समन्वितः' सम्यगाक्रान्तः 'सुगम्यः' यानेन सुसाध्यः। 'स गम्य' इति मु॰ पाठः॥ ११ सर्गस्य २६ श्लो॰॥ १२॥

एवं यानमुक्त्वा आसनम् आह 'परस्परस्य' इति। 'सामर्थ्यविघातात्' बलप्रतिघातात्। समारब्ध—विजिगीषोः परस्य च सामर्थ्यविघातात् इतरेतरस्य या अवस्थितिस्तदासनम् इति फलितार्थः। 'सामर्थ्याविघातात्' इति मु॰ पाठे तु उभयोरपि सामर्थ्यस्य अविघातात् क्लेशाभावात् इत्यर्थः। 'तत् पञ्चविधम्'। यथा विगृह्यासनं, सन्धायासनं, सम्भूयासनं, प्रसङ्गासनम्, उपेक्षासनम् इति॥ ११ स॰ २७ श्लो॰॥ १३॥

पञ्चविधेषु आसनेषु प्रथमं तावत् विगृह्यासनम् आह 'अन्योन्याक्रान्तिकरत्वम्' इति। अरिविजिगीष्वोः 'अन्योन्याक्रान्तिकरत्वं' यत् परस्परं चेष्टाविघातविधानम् तत् 'विगृह्यासनम्'। विग्रहान्तःस्थयो-

रेव सामर्थ्यविघाते सति यदासनं तत् विगृह्यासनम्। एवमेकं शत्रुं विगृह्यापि कारणान्तरापेक्षया यदवस्थानं तदपि विगृह्यासनम् इत्यर्थः॥ ११ स० २८ श्लो० ॥ १४ ॥

विगृह्यासनस्य कालम् आह 'यदा दुर्गस्थितः' इति॥ 'आसारवीवधौ' आसारो मित्रबलं, वीवधः साहाय्यदानार्थं जनपदेभ्यः समागच्छतां बलानां पन्थाः, तौ 'छित्त्वा'। आसारपक्षे छेदो विनाशः, वीवधपक्षे छेदोऽवरोधः। 'यदा दुर्गस्थितः' इत्यत्र 'यथा दुर्गगतः' इति क्वचित् पाठः। 'आसारवीवधौ' इत्यत्र 'आसारवीवधान्' इति मु० पाठः। ११ स० २९ श्लो० ॥ १५ ॥

एवं कृते किं भवति? इत्यत आह 'विच्छिन्नवीवधासारम्' इति। 'प्रक्षीणयवसैन्धवं' क्षीणवेगाश्वम्। अत्र सैन्धवपदं बलसामान्यस्य उपलक्षणम्। 'विभज्यमानप्रकृतिं' पृथग्भूतराज्यसाधनम्। विभज्यमानप्रकृतिम् इत्यत्र विगृह्यमाणः प्रकृतिम् इति मु० पाठो न सङ्गच्छते॥ ११ स० ३० श्लो० ॥ १६ ॥

सन्धायासनम् आह 'अरेश्च' इति। स्पष्टम्। सन्धाय यदवस्थानम् इत्यत्र सन्धाय समवस्थानम् इति केचित् पठन्ति॥ ११ स० ३१ श्लो०॥ १७॥

अत्र दृष्टान्तम् आह 'निवातकवचैः' इति। निवातकवचैः सह रावणस्य विग्रहे सति रावणवैराक्रान्तो ब्रह्मार्थं गोत्रगुरुम् अन्तरे निभिर्वं कृत्वा प्रभुरावणोऽपि रावणः सन्धायासनमाश्रितः, यथा न निवातकवचैर्विनाश्यते इति पौराणिकी वार्त्ता। सार्द्धम् इत्यत्र सार्कम् इति केचित् पठन्ति॥ ११ स० ३२ श्लो० ॥ १८॥

सम्भूयासनम् आह 'उदासीने' इति। उदासीन-मध्यमौ पूर्वं कृतलक्षणौ (८ स० १८। १९ श्लो०) 'उदासीने मध्यमे' इति विषये सप्तमी। तैः सहेति मिलितोऽयं। 'समानप्रतिशङ्कया' अयं मम तुल्यबलः कदाचिदभियुञ्ज्यादिति शङ्कया अवस्थानम् अवस्थितिः,

सम्भूयासनम् उच्यते। 'एकीभूय व्यवस्थानम्' इत्यत्र एकीभूय समुत्थानम् इति मु० पु० पाठो न साधुः। ११ स० ३३ श्लो० ॥ १९ ॥

सम्भूयासन-प्रसङ्गेन सम्भूयारिविग्रहम् आह 'उभयारिर्हि' इति। 'उभयारिः' पूर्व्वोक्तमध्यमविशेषः (८ स० १८ श्लो०) 'उभयोः' विजिगीष्वोः। 'एनम्' उभयारिम्। 'प्रतिव्यूहेत्' प्रतिबलयेत्। 'अधिकं' बलयत्तरम्। 'सङ्घधर्म्मणा' सङ्घवृत्तिमवलम्बमानेन। बहुभिर्मिलित्वा एककार्य्यकरणं सङ्घवृत्तिः। सम्भूयैनम् इत्यत्र सम्भूयेन इति, सङ्घधर्म्मणा इत्यत्र तत्त्वधर्म्मणा इति च मु० पु० पाठः॥ ११ स० ३४ श्लो० ॥ २० ॥

प्रसङ्गासनम् आह 'यियासोः' इति। 'अन्यं' प्रति 'यियासोः' 'अन्यत्र' 'केनचित्' 'प्रसङ्गेन' 'यत्' 'आसनम्' अवस्थानं 'तत्' 'अर्थज्ञैः' शास्त्रवेदिभिः 'इह' 'प्रसङ्गासनम् उच्यते' इत्यन्वयः॥ ११ स० ३५ श्लो० ॥ २१ ॥

उपेक्षासनम् आह 'आस्ते' इति। 'अरिम्' 'अधिकम्' अधिकबलं 'प्रेक्ष्य' यत् 'आस्ते' उपेक्षेति शेषः। तत् 'उपेक्षासनम् उच्यते' इत्यन्वयः। अत्र दृष्टान्तम् आह 'उपेक्षाम्' इत्यादिना। एकदा रुक्मिणीसत्यभामासन्निधौ वासुदेवाग्रतो नारदः पारिजातमञ्जरीम् अदृष्टमानुश्चिक्षेप। अथ वासुदेवकरस्थितायां तस्यां मञ्जर्य्यां समकालमेव भार्य्याद्वयेनाभ्यर्थितम्। पारिजातमञ्जरी तु रुक्मिण्यै दत्तेति सत्यभामयाभिमानपरीतया तया निगदितो गदाधरो यथेयं मञ्जरी तेन दत्तेयं विना मदन्तिकं नागन्तव्यं भवतेति। अथ सत्यभामाभिमानविनोदनाय पारिजातहरणार्थं वासुदेवेनाधिकबलेनाभियुक्तो देवराजः पश्यन्नपि भज्यमानं प्रियतमं नन्दनवनम् उपेक्षासनमङ्गीचकारेति पौराणिकी वार्त्ता॥ ११ स० ३६ श्लो० ॥ २२ ॥

द्वितीयम् उपेक्षासनम् आह 'उपेक्षितस्य' इति। 'अन्येन' स्नेहादिरूपेण 'केनचित्' 'कारणेन' 'उपेक्षितस्य' उपेक्षा जाता यस्य,

उपेक्षां कुर्व्वतः इत्यर्थः। वासुदेवेन रुक्मिणीहरणे क्रियमाणे परिभवादिकम् अङ्गीकृत्य स्नेहात् रुक्मिणीभ्राता रुक्मिणा उपेक्षासनं कृतमिति पौराणिकमितिहासमत्र निदर्शनम्॥ उपेक्षितस्य चान्येन इत्यत्र उपेक्षितस्य चान्यैस्तु इति मु॰ पाठस्तु न समीचीनः॥ ११ स॰ ३७ श्लो॰॥ २३॥

इत्थमासनम् अभिधाय द्वैधीभावं गुणमभिधातुमाह 'बलिनोः' इति। 'बलिनोः' प्रसिद्धप्रकृतिगुणसम्पन्नयोः। 'वाचा' वाक्यार्थेनैव न तु कर्म्मणा। 'आत्मानं समर्पयन्' अहं त्वदीयो, यन्मम किञ्चित् तत् त्वदीयमेव इति वाक्येनैव प्रत्येकं बलिनं प्रति आत्मसमर्पणकारीति समुदितार्थः। अतएव सः 'अलक्षितः' नायं कार्य्येण मन्निमित्तम् इत्युभाभ्यामपि बलिभ्याम् अपरिज्ञातः, 'द्वैधीभावेन' आत्मरक्षार्थम् उभाभ्याम् प्रत्यात्मसमर्पणादिरूपभावेन 'वर्त्तेत' ईदृगात्मसमर्पणे न भिद्यते, नापि प्रभुरेति द्वैधीभाव इत्युच्यते। 'काकाक्षिवत् अलक्षितः' काकाक्षिगोलकमेकमेव अलक्षिततया उभयोरेव चक्षुषोरधिष्ठाय दर्शनानुकूलं भवतीति कविसमयप्रसिद्धम्॥ ११ स॰ १८ श्लो॰॥ २४॥

द्वैधीभावमङ्गीकुर्व्वतः कर्त्तव्यम् आह 'यापयेत्' इति। 'तयोः' बलिनोर्मध्ये 'सन्निकृष्टतरं' बलिनं 'यापयेत्' एष करोमि, इत्याशाप्रदर्शनेन कालमतिवाहयेत्। 'उभयोरपि' विश्वासाभावात् 'सम्पाते' 'बलवत्तरं' आशार्थे 'सेवेत' इति। सन्निकृष्टतरम् इत्यत्र सन्निकृष्टमरिम् इति केचित् पठन्ति॥ ११ स॰ ३९ श्लो॰॥ २५॥

द्वैधीभावपरित्यागे इतिकर्त्तव्यताम् आह 'यदा द्वावपि' इति। 'यदा द्वावपि' अरी 'जातसंविदौ' वयमेकोऽयमिति जातविश्वासौ 'संश्लेषं' सन्धिं 'नेच्छेतां' तदा 'तच्छत्रुं' तयोरुभयोरपि शत्रुम् अपरम् 'उपसर्पेत्' तदभावे आत्मनात्राणार्थम् 'अधिकं' बलवत्तरं संश्रयेत्॥ अधिकं वापि संश्रयेत् इत्यत्र संश्रयेद् बलवत्तरम् इति पाठान्तरम्॥ ११ स॰ ४० श्लो॰॥ २६॥

द्वैधीभावस्य आश्रयभेदाद् भेदमाह 'द्वैधीभाव' इति। 'द्वैधीभावो' गुण आचार्य्यैः 'द्विधा प्रोक्तः' एकः स्वतन्त्रः, अपरः परतन्त्रः। तयोः 'स्वतन्त्रपरतन्त्रयोः' स्वाधीनपराधीनयोर्मध्ये 'स्वतन्त्रः' 'उक्तः' पूर्व्व-श्लोकैः कथितः। स्वतन्त्रं स्ववशं यथा तथा यत्र रक्षा सम्पद्यते तत्रैव यातीति स्वतन्त्र-द्वैधीभावः। 'अन्यस्तु' परतन्त्रः, यः स्यात् उभयवेतनः, स्वामिद्वयस्य वेतनं गृह्णन् भृत्यादिः। स्वतन्त्रस्य द्वैधीभावः, परतन्त्रस्य च द्वैधीभाव इति द्वैविध्यम्॥ यः स्यादुभयवेतन इत्यत्र यः स्यादु-भयवेतन इति मु॰ पाठः॥ ११ स॰ ४१ श्लो॰॥ २७॥

संश्रयगुणमभिधातुम् आह 'उच्छिद्यमानः' इति। 'बलिना' उप-चितशक्तिमता, 'उच्छिद्यमानः' अभियुक्तः। 'निरुपायप्रतिक्रियः' उपायेन प्रतीकारेण च रहितः। यदा तु उपायप्रतिक्रियाभ्यां विरहितः स्यात् तदैव संश्रयवृत्तिरिष्यते "महादोषो हि विशिष्ट-बलसमागमो राज्ञाम्" इति वचनात् उपायान्तरे विद्यमाने संश्रयो नेष्यते बुधैरिति भावः। 'कुलोद्गतं' कुलीनम्। कुलीनस्य हि मतिः कदापि नाकार्य्ये प्रवर्त्तते। 'सत्यम्' यथार्थवादिनम्। 'आर्य्यं' सदा-शयं 'बलोत्कटम्' अभियोक्त्रपेक्षया बलाधिकम् 'आश्रयेत' रक्षार्थं शरणं व्रजेत्॥ कुलोद्गतम् इत्यत्र कुलोद्भूतम् इति मु॰ पाठः॥ ११ स॰ ४२ श्लो॰॥ २८॥

एवमाश्रये जने आश्रितस्य विधेयमाह 'तद्दर्शनोपास्तिकता' इति। 'तद्दर्शनोपास्तिकता' तद्दर्शने आश्रयभूतस्य दर्शने उपास्ति-कता साष्टाङ्गप्रणिपातपूर्व्विका आराधनशीलता। 'नित्यं तद्भाव-भाविता' तथा चोक्तमेतल्लक्षणम्,

"यस्य यस्य हि यो भावस्तेन तेन हि तं नरः।
अन्तः प्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्।
इति तत्कारिता चैतत् वृत्तं संश्रयिणः स्मृतम्॥" इति।

इत्युक्तरीत्या तदभिप्रायानुसारिकार्य्यकरणेन आत्मवशकारिता। 'तत्-

कारिता' तस्य कार्य्यकारिता। एतत् एवं 'संश्रयिणः' 'हत्तं' विधेयं 'सततम्' इत्यन्वयः॥ ११ स० ४३ श्लो०॥ २८॥

अतःपरम् एकादशसर्गस्य षष्ठदश, द्वादशसर्गस्य च सप्त श्लोका मुद्रितपुस्तके न लभ्यन्ते। ते चास्माभिरुद्धृत्य व्याख्यायन्ते।

विनीतवत् तत्र कालं गमयित्वा गुराविव।
तत्सङ्गात् परिपूर्णः सन् क्रमेण स्ववशो भवेत्॥ इति।

'तत्र' आश्रये 'गुराविव' संश्रितः 'विनीतवत्' न तु परमार्थतो विनीतः। कश्चित् 'कालं गमयित्वा' समयमतिवाह्य 'तत्सङ्गात्' आश्रयसहवासात् 'रिपूर्णः' आप्युच्छ्रितः सन् 'क्रमेण स्ववशो भवेत्' तच्चित्तमेवाराध्येत्यर्थः॥ परिपूर्ण इत्यत्र पूर्णशक्तिरिति पाठान्तरम्॥ ११ स० ४४ श्लो०॥

उक्तगुणसम्पन्न-संश्रयाभावे विधेयमाह,

ददद् बलं वा कोषं वा भूमिं वा भूमिसम्भवम्।
आश्रयेताभियोक्तारं विसन्धिमनपाश्रयः॥ इति।

गत्यन्तराभावे तु 'अनपाश्रयः' न आश्रयविहीनस्तिष्ठन्। 'बलं वा कोषं वा भूमिं वा' अथवा 'भूमिसम्भवं' रत्नं 'ददत्' समर्पयन् सन् 'विसन्धिं' सन्धिभङ्गकारिणम् 'अभियोक्तारम्' एव 'आश्रयेत' इत्यन्वयः। विसन्धिरिति क्वचित् पाठः॥ ११ स० ४५ श्लो०॥

आत्मजीवनरक्षार्थं सर्व्वस्वमपि दद्यात् इत्याह,

सर्व्वाणि चैतान्यार्त्तः सन् दद्यात् त्राणार्थमात्मनः।
युधिष्ठिर इवैत्यन्ते पुनर्ज्जीवन् वसुन्धराम्॥ इति।

'आर्त्तः' प्रपीड़ितः 'सन्' 'आत्मनस्त्राणार्थम्' आत्मजीवनरक्षार्थं 'सर्व्वाणि' बलकोषभूम्यादीनि दद्यात्। 'जीवन्' 'पुनः' 'युधिष्ठिर इव' 'अन्ते' 'वसुन्धराम्' 'एति' प्राप्नोतीति सम्भावना, न तु निश्चयः॥ युधिष्ठिरो जिगायारी पुनर्ज्जीवन् वसुन्धराम् इति पाठस्तु सङ्गच्छते॥ युधिष्ठिर इवेत्यादि पुनर्ज्जीवन् वसुन्धराम् इत्येवं पाठः

प्राचीनटीकाकारसम्मतोऽपि न सहृदयहृदयग्राही ॥ ११ स० ४६ श्लो० ॥

तदेव प्रकारान्तरेणाह,

कल्याणी वत गाथेयं लौकिकी प्रतिभासते।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ इति।

स्पष्टम् ॥ ११ स० ४७ श्लो० ॥

सर्व्वथा आत्मरक्षा कर्त्तव्येति प्रकारान्तरेण कथयति,

त्यजेत् कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे विद्यार्थ्ये पृथिवीं त्यजेत् ॥ इति।

'विद्यार्थ्यें' आत्मनाशसम्भावनायां विविध उपायान्तराभावे 'पृथिवीम्' अपि 'त्यजेत्'। प्रतीतम् अन्यत् ॥ ११ स० ४८ श्लो० ॥

धनदानादिना अभियोक्तुः परितोषमुत्पाद्य संश्रितस्याभियुक्तस्यानन्तरकर्त्तव्यताम् आह,

निष्पतेदात्मलाभे वा व्यसने वा रिपोः स्थितः।
प्रहरेद् वा बलीयस्या सेना कृत्वा बलं रिपुम् ॥ इति।

अभियोक्तरि विनीतवत् कञ्चित्कालं गमयित्वा 'आत्मलाभे' आत्मोत्कर्षे सति 'निष्पतेत्' तमभियोक्तारमाक्रामेत्। 'वा' अथवा 'रिपोः' 'व्यसने' स्त्री-द्यूतादिव्यसने समुपस्थिते सतीति शेषः। 'बलीयस्या सेना कृत्वा बलं' 'स्थितः' सन् 'रिपुं' 'प्रहरेत्' इत्यन्वयः ॥ ११ स० ४६ श्लो० ॥

कारणं विना प्रतिद्वन्द्विभूपेन न संगन्तव्यम् इत्याह,

नाकारणात् सङ्गमेयात् ज्यायसा चेतरेण वा।
क्षयव्ययकृतात् दोषात् विश्रम्भद्रोहजादपि ॥ इति।

'कारणात्' विना 'ज्यायसा' विशिष्टबलेन 'इतरेण' हीनबलेन 'वा' सह 'सङ्गं' 'न' 'इयात्' नागच्छेत्। कस्मादित्याह, 'क्षयव्ययकृतात्' 'विश्रम्भद्रोहजादपि' 'दोषात्'। क्षयः पुरुषवाहनादिविनाशः,

व्ययः धान्यहिरण्यादीनामपचयः। तज्जनितात् दोषात्। विश्रम्भद्रोहैः विश्वासघातकता। तथाचोक्तं, "विश्रम्भमागतं साधं द्रुह्यन्ते वा व्यसाधवः"। इति। ११ स० ५० श्लो०॥

एतदेव समर्थयन् आह,

संयोगहेतुना गत्वा विश्वसेन्न पितर्य्यपि।
विश्वासमागते साधौ प्रायो द्रुह्यन्त्यसाधवः॥ इति।

एतत् सुगमम्॥ ११ स० ५१ श्लो०॥

उपसंहरन् आह,

इति षाड्गुण्यमन्ये तु द्वैगुण्यमिति चक्षते।
यानासने विग्रहस्य रूपं सन्धेः परं स्मृतम्॥ इति।

'इति षाड्गुण्यम्' इतिसिद्धान्तः। यानम् आसनञ्च पञ्चविधं 'विग्रहस्य रूपम्'। 'परम्' अवशिष्टं द्वैधीभावादिकम् इत्यर्थः। 'सन्धेः' रूपं 'स्मृतम्' इत्यर्थः। 'अन्ये तु द्वैगुण्यम् इति चक्षते' कथयन्ति। यानमासनञ्चाशेषं विग्रहस्य रूपम्, द्वैधीभावादिकं सन्धेरूपम् अपरम् इति द्वैविध्यम्॥ ११ स० ५२ श्लो०॥

एतदेव व्याख्यातुमाह,

स हि गच्छंश्च तिष्ठंश्च विग्रहं कुरुते यतः।
अतो यानासनं प्राज्ञैः विग्रहः परिकीर्त्तितः॥ इति।

'स हि' अभियोक्ता 'गच्छन्' अभियानगुणमातिष्ठन्, 'तिष्ठन्' आसनगुणमातिष्ठन् 'यतः' यस्मात् 'विग्रहं कुरुते' 'अतः' यानासनं प्राज्ञैः विग्रहः परिकीर्त्तितः' इति सारम्॥ ११ स० ५३ श्लो०॥

यानमासनञ्च विग्रहस्य रूपमित्युक्तम्, अधुना द्वैधीभावसंश्रययोः कथं सन्धिरूपता इत्याह,

असन्धाय यतो नास्ति द्वैधीभावः ससंश्रयः।
ततो द्वावपि तौ प्राज्ञैः रूपं सन्धेरुदाहृतम्॥ इति।

'यतः' 'असन्धाय' सन्धिमकृत्वा संश्रयसहितो 'द्वैधीभावो नास्ति'

'ततो द्वावपि तौ' द्वैधीभावः संश्रयश्च, 'प्राज्ञैः' 'सन्धेः' 'रूपम्' 'उदाहृतं' कथितम् इत्यन्वयः॥ ११ स० ५४ श्लो०॥

केषाञ्चिन्मते द्वैगुण्यमाह,

सन्धायेति च यत् प्रोक्तं तत् सन्धेरूपमिष्यते।
विगृह्येति च यत् प्रोक्तं विग्रहस्य तदुच्यते॥ इति।

'सन्धाय' प्रभुणा सह मिलित्वा 'यत्' कार्य्यं 'प्रोक्तं' करणीयमिति कथितं 'तत् सन्धेः रूपम् इष्यते।' 'विगृह्य' 'यत्' कार्य्यं कर्त्तव्यमिति 'प्रोक्तं' 'तत्' 'विग्रहस्य' रूपम् उच्यते इत्यर्थः॥ ११ स० ५५ श्लो०॥

तदेवाह,

सन्धिश्च विग्रहश्चैव द्वैगुण्यमिति चक्षते।
एतौ च संश्रयश्चैव त्रैगुण्यमिति चापरे॥ इति।

द्वैगुण्यवादिनः संश्रयं सन्धेरेव रूपं कथयन्ति, त्रैगुण्यवादिनस्तु संश्रयं सन्धेः पृथक् कुर्व्वन्तीति मतद्वैविध्यम्॥ ११ स० ५६॥

संश्रयस्य सन्धिरूपत्वे बृहस्पतिमतमाह,

"यस्मादन्यं संश्रयते बाध्यमानो बलीयसा।
तत् सन्धिः, संश्रयो न्वस्य इत्युवाच बृहस्पतिः॥ इति।

'बलीयसा' बलवता भूमालेन 'बाध्यमानः' पीड्यमानः सन् 'यस्मात् अन्यं' बलवत्तरं संश्रयते 'तत्' तस्मात् 'संश्रयः' 'अस्य' 'सन्धिः' 'बृहस्पतिः' 'इति उवाच' इत्यन्वयः॥ ११ स० ५७ श्लो०॥

गुरुमतप्रदर्शनपूर्व्वकमुपसंहरन् आह,

न्याय्यो गुणो विग्रह एव सन्धा-
ऽऽदयस्तदुत्थाः प्रभवास्ततोऽन्ये।
व्यवस्थया भेदमुपागतं तत्
षाड्गुण्यमित्येव गुरोर्मतं नः॥ इति।

'न्याय्यः' न्यायेन विचार्यमाण एको 'विग्रह एव' 'गुण' इत्य.' 'अन्ये' गुणाः 'तदुत्थाः' तदुद्भवाः, विग्रहादनन्तर

इत्यर्थः। 'तत' कारणात् 'प्रभवाः' कथ्यन्ते इति शेषः। 'अवस्थया' विगृह्य—यानं विगृह्यासनम्, सन्धाययानं सन्धायासनम्, सम्भूययानं सम्भूयासनम्, प्रसङ्गयानं प्रसङ्गासनम्, उपेक्षायानम् उपेक्षासनम्, इति यानासनं पञ्चविधम्। द्वैधीभावादिकं सन्धेरूपमेकम् इति षड्भिरवस्थाभिर्विग्रहस्य रूपं 'भेदम् उपागतं सत्' 'षाड्गुण्यम्' उच्यते इति शेषः। 'इत्येव' 'नः' अस्माकं 'गुरोः' विष्णुगुप्तस्य 'मतम्' इत्यर्थः॥ ११ स० ५८ श्लो०॥

इति कामन्दकीयनीतिसारटीकायाम् उपाध्यायनिरपेक्षानुसारिण्यां हस्तलिखितपुस्तकानुसारेण यानासनसंश्रयद्वैधीभावविकल्पो नाम एकादशः सर्गः॥ ०॥

# एकादशः सर्गः ।

अस्मल्लिखितपुस्तकानुसारेण द्वादशः सर्गः ।

षाड्गुण्यानन्तरं मन्त्राधिकारं दर्शयन् आह—

षाड्गुण्य-निश्चितमति-र्गुह्यं गूढप्रचारवान् ।
मन्त्रयेदिह मन्त्रज्ञो मन्त्रज्ञैः सह मन्त्रिभिः ॥

इति। षाड्गुण्ये पूर्वोक्ते, निश्चिता निःसन्दिग्धा मतिर्यस्य सः 'षाड्गुण्यनिश्चितमतिः' ज्ञातषाड्गुण्यतत्त्वविनिर्णय इत्यर्थः। गूढं प्रचरन्ति ये ते गूढप्रचाराः, स्वराष्ट्रे परराष्ट्रे वा अलक्षित-सञ्चारभेदाभिज्ञाः। ते विद्यन्ते यस्येति 'गूढप्रचारवान्'। 'मन्त्रज्ञः' षड्गुणानां मध्ये कस्मिन् गुणे स्थितस्य मे वृद्धिरवृद्धिर्वा भवेत्, केनोपायेन मे धन-धान्य-हस्त्यश्व-बल-खनिज-द्रव्यादीनामुपचयो भवेत्, केनोपायेन वा परस्यैतानि उपचेतुं शक्नोमि, केनोपायेन लब्धविषयस्य परिरक्षण-मलब्धस्य च लाभो भवेत्, केन च प्रकृतिरञ्जनं स्यात्, इत्यादि-विषयकं गुप्तभाषणं मन्त्रः। तं जानातीति मन्त्रज्ञः। विजिगीषुः 'मन्त्रज्ञैः' 'मन्त्रिभिः' 'सह' 'इह' अलब्धलाभ-लब्धपरिरक्षणादि-विषये 'गुह्यं' गोपनीयं कार्यं 'मन्त्रयेत्' ॥ १२ स० १ श्लो० ॥

मन्त्रार्थकुशलो राजा सुखं भूतिं समश्नुते ।
विपरीतस्तु विद्वद्भिः स्वतन्त्रोऽप्यवभूयते ॥

वक्ष्यमाण-पञ्चाङ्गस्य मन्त्रस्य योऽर्थः, वृद्धिलक्षणः, तत्सम्पादने कुशलः 'मन्त्रार्थकुशलः राजा' प्रकृतिरञ्जनादिना 'सुखम्' अनायासेन 'भूतिं' श्रियं 'समश्नुते' आक्रम्य भुङ्क्ते। 'विपरीतस्तु' मन्त्रार्थाकुशलः 'स्वतन्त्रोऽपि' स्वाधीनोऽपि 'विद्वद्भिः' पण्डितैः 'अवभूयते' परिभूयत इत्यर्थः। अवधूयते इति पाठे तु 'अवधूयते' राज्यात् प्रभ्रंशितो भवति इत्येवमर्थः। १२ स० २ श्लो० ॥

दुर्मन्त्रमेनं रिपवो यातुधाना इव क्रतुम् ।

समन्ततो विलुम्पन्ति तस्मान्मन्त्रपरो भवेत् ॥

इति। 'यातुधानाः' राक्षसाः दुःप्रयुक्त-वैदिकमन्त्रं 'क्रतुं' यज्ञम् 'इव' 'रिपवः' 'दुर्मन्त्रं' दुष्टो मन्त्रो यस्य तम्। मन्त्रस्य दुष्टत्वन्तु शास्त्रविरुद्धत्वम्। 'एवं' नृपतिं 'समन्ततो विलुम्पन्ति'। 'तस्मात्' 'मन्त्रपरो भवेत्' यथोक्तमन्त्रपर एव स्यात् इत्यर्थः ॥ १२ स० ३ श्लो० ॥

कीदृग्गुणेन मन्त्रिणा मन्त्रणं कार्य्यम्, इत्याह—

मन्त्रयेतेह कार्य्याणि सहाप्तेन विपश्चिता।

आप्तं मूर्खमनाप्तञ्च मतिमान् वर्जयेदिह ॥

इति। यो हि बहुगुणैर्निरन्तरं व्याप्यते स तस्य आप्त इत्युच्यते। 'इह' मन्त्रविषये 'आप्तेन' 'विपश्चिता' नीतिशास्त्र-पण्डितेन 'सह' 'कार्य्याणि' 'मन्त्रयेत'। आप्तोऽपि भूत्वा यदि विपश्चित् नीतिशास्त्र-पण्डितो भवति, तेन सह मन्त्रयेत्। एतत् गुणद्वयमेकत्र यस्मिन् न विद्यते, तेन सह न मन्त्रयेदित्यर्थः ॥ १२ स० ४ श्लो० ॥

मन्त्रश्च शास्त्रोक्तक्रमेणैव कार्य्य इति दर्शयन् आह—

मार्गं सन्मार्गगतिभिः सिद्धये सिद्धकर्म्मभिः।

पूर्व्वैराचरितं सद्भिः शास्त्रीयं न परित्यजेत् ॥

इति। 'सिद्धये' सिद्ध्यर्थं 'सिद्धकर्म्मभिः' 'सन्मार्गगतिभिः' सन्मार्गेणैव गतिर्येषां तैः। 'पूर्व्वैः' राजादिभिर्बृहस्पत्यादिभिश्च 'सद्भिः' सत्पुरुषैः 'आचरितं' 'शास्त्रीयं' 'मार्गं' 'न परित्यजेत्' मन्त्रविषये इति शेषः ॥ सिद्धये सिद्धकर्म्मभिः इत्यत्र सन्मन्त्रे सिद्धकर्म्मभिः इति केचित्, पूर्वोक्तं सिद्धकर्म्मभिः इति च केचित् पठन्ति ॥ १२ स० ५ श्लो० ॥

शास्त्रोक्तमन्त्रं विलङ्घयतो दोषं दर्शयन् आह—

उच्छास्त्रपदविन्यासः सहसैवाभिसम्पतन्।

शत्रु-खड्गमुखग्रासमतां न निवर्त्तते ॥

इति। शास्त्रेषु यः पदविन्यासः शास्त्रपदविन्यासः। उल्लङ्घितः शास्त्र-

पदविन्यासो येन सः। शास्त्रोपदेशं विलङ्घयन् इत्यर्थः। 'सहसैव' मन्त्रालोचनं विनैव 'अभिसम्पतन्' प्रभूणाम् अभिमुखं गच्छन् 'प्रभुखड्गमुखग्रासम् अगत्वा न निवर्त्तते' खड्गमुखं धारैव तद्ग्रासम्। खड्गधारायासो मरणम्। तत् अप्राप्य न निवर्त्तते इत्यर्थः। अतो मन्त्रपूर्व्वं प्रवर्त्तितव्यम् इति भावः॥ अभिसम्पतन् इत्यत्र अभिसम्पतेत् इति, प्रभुखड्गमुखग्रासम् इत्यत्र प्रभुखड्गमुखन्यासम् इति च पाठान्तरम्॥ १२ स० ६ श्लो०॥

मन्त्रशक्तेः प्राधान्यं दर्शयन् आह—

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा॥

इति। कोषदण्डजं हि प्रभुशक्तिः। शौर्य्यमर्षौ दार्ढ्यं चोत्साहशक्तिः। ताभ्यां 'प्रभावोत्साहशक्तिभ्यां' 'मन्त्रशक्तिः' एव गरीयसी। अत्र तावदितिहासं दर्शयति। 'प्रभावोत्साहवान् काव्यः' शुक्रः 'देवपुरोधसा' बृहस्पतिना मन्त्रशक्त्या इति वाक्यशेषः। 'जितः'। पुरा किल देवासुरसंग्रामे हतानसुरान् शुक्रो मृतसञ्जीवन्या विद्यया जीवयति, देवा मृता मृता एव। ततश्च शुक्रः असामान्यप्रभावोत्साहसम्पन्नः समजनि। ततश्च तदभिसन्धानार्थं मन्त्रशक्तिसम्पन्नेन बृहस्पतिना, स्वसुतः कचः शिष्यत्वेन प्रणिहितः। कचेन च शुक्रस्य प्रियसुता देवयानी वशीकृता। तदवेत्य दैत्यैरभिसन्धानभयात् कचो विपक्वः शुक्राय भक्षितुं प्रदत्तः। अथ शुक्रस्तया देवयान्या प्रार्थितेन तेन काव्येन उदरस्थ एव कचो मृतसञ्जीवन्या पुनः सञ्जीवितः। उदरस्थस्यैव तस्य उपदिष्टा मृतसञ्जीवनी विद्या। आज्ञप्तश्चासौ गुरुणा शुक्रेण, विदार्य्योदरं निर्याय त्वं मामनयैव विद्यया जीवयेति। कचस्तु तथैवाकरोत्। अथ गुरुकुलात् प्रतिनिवृत्ते च कचे समरे मृता देवाः पुनः सञ्जीवन्ति। तदनया च मन्त्रशक्त्या सुरगुरुणा जितः काव्यः इति पौराणिकी वार्त्ता॥ १२ स० ७ श्लो०॥

तदेव समर्थयन् आह—'अशिक्षितनयः' इति। अशिक्षितो नयो नीतिशास्त्रं येन स तथोक्तो मन्त्रशक्तिरहित इत्यर्थः। 'सिंहः' 'केवलं बलात्' सामर्थ्यात्, केवलोत्साहशक्त्या इत्यर्थः। 'इभं' 'हन्ति'। 'मतिमान्' 'धीरो नरः' मन्त्रशक्तिसम्पन्न इत्यर्थः। 'तम्' इभं 'तेषां' सिंहानां 'शतानि च' अनेकानि च 'जयेत्' कूटकपटादिभिः स्ववशे स्थापयेन्मारयेद्वा इत्यर्थः। अशिक्षितनयः सिंहो हन्तीभम् इत्यत्र ह्यशिक्षितनयः सिंहो हन्तीमम् इति मु॰ पाठस्तु न सुसङ्गतः॥ १२ स॰ ८ श्लो॰॥ २०॥

मन्त्रशक्तेः सामर्थ्यमभिधातुमाह—'पश्यद्भिः' इति। 'दूरतः' देशव्यवधानात् कालव्यवधानाद्वा। 'अपायान्' विनिपातान् 'पश्यद्भिः' प्रमाणबलात् प्रत्यक्षीकुर्व्वद्भिः। 'सूपायप्रतिपत्तिभिः' शोभनसामाद्युपायैः प्रतिपत्तिर्ज्ञानाद्यानपूर्व्विका फलप्राप्तिर्येषां ते तैः। 'विद्वद्भिः चिन्तिताः' सुपर्य्यालोचिताः 'क्रियाः' मन्त्राधिकारोक्ता इति शेषः। 'फलायैव' 'भवन्ति' निश्चयेन फलन्तीत्यर्थः॥ १२ स॰ ९ श्लो॰॥ २१॥

क्रियाचिन्तनमेव दर्शयन् आह—'उपायपूर्व्वम्' इति। 'उपायपूर्व्वं' सामाद्युपायपूर्व्वं कर्म्म इच्छेत्। यत्नमात्रसाध्ये लाभे 'कालं' यात्रानुरूपं समयं 'वीक्ष्य' निर्णीय 'समुत्पतेत्' यायात्। कस्मादित्याह, 'विक्रमैकरसज्ञता' 'पश्चात्तापाय भवति' विक्रमः परमोत्साहः शौर्य्यातिशयश्च एको रसः तमेव जानातीति तस्य धर्म्मः। मन्त्रशक्तिरसाज्ञानात् देशकालादिनिरपेक्षस्य विपत्तिमूले व्यवसाये विक्रमैकरसज्ञता पश्चात्तापाय भवति इत्यर्थः। देशकालबलादिसापेक्षे व्यवसाये तु विक्रमोऽपि मन्त्रसहायतया फलतीति भावः॥ पश्चात्तापाय भवति इत्यत्र पश्चात्तापाय निर्द्दिष्टा इति मु॰ पाठः॥ १२ स॰ १० श्लो॰॥ २२॥

मन्त्रसापेक्षतां दर्शयति, 'शक्याशक्यपरिच्छेदम्' इति। आदावेव 'प्रसन्नया' विशुद्धया अतिनिर्म्मलयेति यावत्। 'बुद्ध्या' शक्यमिदम्

चाप्रायं वेति परिच्छेदं 'कुर्यात्'। 'दन्तिनो' दन्ताभ्यां 'शैलताड़नं' दन्तभङ्गायैव भवति इत्यर्थः॥ १२ स० ११ श्लो०॥ २३॥

एतदेव द्रढ़यितुमाह—

अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम्।

आकाशमास्वादयतः कुतो हि कवलग्रहः॥

इति। आरभ्यते योऽसौ आरम्भः कार्य्यम्। अशक्ये असाध्ये आरम्भे वृत्तिर्व्यवसायः प्रवर्त्तनं वा येषाम् ते तेषाम् 'अशक्यारम्भ-वृत्तीनाम्'। 'क्लेशादृते' क्लेशं विना नान्यत् फलं दृश्यते। तद् यथा—'आकाशम् आस्वादयतः' आकाशास्वादम् अनुभवामीति यः कवलग्रहम् आकाशस्य करोति, तस्य 'कवलग्रहः' 'कुतः?' आकाशस्यामूर्त्तत्वात्। एवमशक्यारम्भिणोऽपि कुतः फलमिति भावः। 'आकाशमास्वादयतः कुतो हि कवलग्रहः' इत्यस्य विनिमयेन मु० पुस्तके 'भवन्ति परितापिन्यो यस्मां कर्म्मविपत्तयः' इत्येवं पाठो दृश्यते। एतच्चरणद्वयन्तु सार्द्धश्लोकानन्तरं लभ्यम्। १२ स० २१ श्लो०॥ २४॥

अत्र कतिपयश्लोका मुद्रितपुस्तकानुसारेणास्माभिः क्रमविपर्य्ययमापाद्य व्याख्याताः। श्लोकाङ्कस्तु यथाक्रममेव रक्षितः। इहापि पश्चात् प्रथमं व्याख्यास्यमानं श्लोकद्वयं मुद्रितपुस्तके न दृश्यते॥

अशक्यारम्भो न केवलं विफलतामापद्यते अपि तु आत्मविनाशायापि भवतीति दर्शयन्नाह—

नाग्निं पतङ्गवद् गच्छेत् सूक्ष्ममेव हि संस्पृशेत्।

किमन्यत् स्यादृते दाहात् पतङ्गस्याग्निमृच्छतः॥

इति। यो हि पतङ्गो दीपाग्निदर्शनसुखी सर्व्वसुखमप्यनुभवामीति बुद्ध्या अग्निं गच्छेत् स तत्स्पर्शात् दग्धदेहः पञ्चत्वमापद्यते, तद्वन्न भवेत्। विजिगीषुपक्षे अग्निशब्देन बलवत्तरो भूपतिर्लक्ष्यते। अविविच्यैवात्मनो बलवत्तरं भूपतिम् आत्मविनाशाय नाभिगच्छेदिति तात्पर्य्यम्। पूर्व्वमेवापरिच्छिद्य 'अग्निमृच्छतः' गच्छतः 'पतङ्गस्य' 'दाहा-

इते' 'किमन्यत्' फलं 'स्यात्?' मन्त्ररहितस्यापि तथेति भावः॥ १२ स० २१ श्लो०॥

एतदेव द्रढ़यति—

मोहात् प्रकुर्व्वतश्चेष्टां दुःखलभ्येषु वस्तुषु।
भवन्ति परितापिन्यो व्यक्तं कर्म्मविपत्तयः॥

इति। 'मोहात्' मन्त्राज्ञानात् 'दुःखलभ्येषु' दुर्लभेषु 'वस्तुषु' 'चेष्टाम्' उद्योगं 'प्रकुर्व्वतः' 'कर्म्मविपत्तयः' अशुभफलानि 'व्यक्तं' निश्चयमेव 'परितापिन्यः' पश्चात्तापविधायिन्यो 'भवन्ति' इत्यर्थः॥ १२ स० २२ श्लो०॥

सुसंश्लिष्टमन्त्रफलं दर्शयन्नाह 'बुद्ध्या बोध्यानुगतया' इति। 'बोध्यानुगतया बुद्ध्या' बोध्यानुयायिना ज्ञानेनेत्यर्थः। ज्ञानं साधनं ज्ञेयं साध्यम्। साधनं साध्यानुरूपं यदा भवति, तदावश्यम्भाविनी सिद्धिरिति भावः। तथा चोक्तम् "प्रत्यक्षादिप्रमाणचय-निर्णीतायां फलसिद्धौ यथासाध्यं साधनविनियोगलक्षणा क्रिया नीतिरन्यथा त्वनीतिः।" एवं बुद्धिर्यदा बोध्यानुगता भवति तदा, 'सुविशुद्धपदन्यासः' सुविशुद्धोऽन्तरायरहितः पदन्यासो यस्य सः, 'उन्नतं' 'पर्व्वताग्रमिव' 'सम्पदो' लक्ष्म्याः 'पदं' पदीयात् प्राप्नुयात्॥ बोध्यानुगतया इत्यत्र बोधानुगतया इति, पर्व्वताग्रमिवोन्नतम् इत्यत्र पर्व्वताग्रमिवोदितम्, इति मु० पाठः। १२ स० २४ श्लो०॥ ३५॥

कस्मान्मन्त्रे महान् यत्न इत्याह 'दुरारोहम्' इति। दुःखेन महता क्लेशेन आरुह्यते इति 'दुरारोहं' 'सर्व्वलोकैर्नमस्कृतं' महेन्द्रसमानम् अप्राप्यत्वादित्यर्थः। 'राज्ञां पदं' राजत्वं 'स्वल्पेनापि अपचारेण' मन्त्रभेदादिकेन ब्रह्मण्यमिव सर्व्वलोकनमस्कृतमपि सन्ध्यावन्दनवचनमात्रेणापि 'दूष्यति' सदोषं भवतीत्यर्थः॥ स्वल्पेनापीत्यत्र ह्यल्पेनापीति मु० पाठः॥ १२ स० २५ श्लो०॥ ३६॥

शास्त्रोक्तमन्त्रफलं दर्शयन् आह, 'प्रारभ्याणि' इति। 'यथाशास्त्रं'

नीतिशास्त्रानतिक्रमेण 'प्रारब्धानि' अनुष्ठितानि 'कार्य्याणि' पृथ्वीलाभपालनादीनि । 'आसनबुद्धिभिः' सुपरिज्ञात-षड्विधासनैः । विस्पष्टमन्यत् । प्रारब्धानीत्यत्र आरब्धानीति केचित् ॥ १२ स० २६ श्लो० ॥ ३७ ॥

यथानीति समारब्धं कार्य्यं विफलमपि न परितापयति, इत्याह—'सम्यगारभ्यमाणम्' इति । सुगमम् । १२ स० २७ श्लो० ॥ ३८ ॥

यथाशास्त्रमनुष्ठितं कार्य्यं यदि दैवप्रतिबन्धेन विफलतामेति, तदा नानुष्ठाता दोषभागित्याह—

यत्तु सम्यगुपक्रान्तं कार्य्यमेति विपर्य्ययम् ।
पुमांस्तत्रानुपालभ्यो दैवान्तरित-पौरुषः ॥

इति । सुस्पष्टम् । एतीत्यत्र एतत् इति, पुमांस्तत्र इत्यत्र पुमांस्तस्य इति सु० पाठः ॥ १२ स० १२ श्लो० ॥ ३९ ॥

यथा कृष्टेऽपि क्षेत्रे दैवानुकूल्यमन्तरेण फलं नोत्पद्यते, तथा दैवपुरुषकारयोरानुकूल्यं विना न फलसिद्धिरित्याह 'द्वयम्' इति । अयं श्लोकोऽस्माभिरपि नासादितः । परन्तु अयं "यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । तथा पुरुषकारेण विना दैवं न सिध्यति ॥" इति श्लोकेन समानार्थकः ॥ १२ स० १३ श्लो० ॥

द्वयमिति पूर्व्वोक्तश्लोकेन यद्यपि दैवपुरुषकारयोरानुकूल्ये फलसिद्धिरुक्ता, तथापि पुरुषकार एवावलम्बनीय इति दर्शयन्नाह 'प्रयत्नस्तावदास्थेय' इति । फलसिद्ध्यर्थं प्रयत्नः कर्त्तव्यः । 'दैवसमाश्रितं' प्रतिकूलदैवायत्तमित्यर्थः । 'श्रेयं' कार्य्यम् 'अपर्व्वभङ्गनिपुणम्' पर्व्वभङ्गे ग्रन्थिच्छेदे न निपुणम् न फलोपधायकमिति तात्पर्य्यम् । "प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता" इति भावः ॥ अपर्व्वभङ्गनिपुणम् इत्यत्र अपर्व्वण्येव निपुणम् इति क्वचित् पाठः ॥ १२ स० १४ श्लो० ॥ ४० ॥

मन्त्रतत्त्वमभिधातुमाह—'आत्मानञ्च परञ्चैव वीक्ष्य' इति । 'धीरः'

धैर्य्यसम्पन्नो विजिगीषुः। 'आत्मानञ्च परञ्चैव वीक्ष्य' आत्मानं शक्तित्रयेणोपचितं देशकालबलम् अनुकूल-शकुन-निमित्त-ग्रहादिक-सूचितविजयञ्च वीक्ष्य निर्णीय, परस्य तद्विपरीतं निरूप्य 'उत्पतेत्' यात्रां कुर्य्यात्। 'यत् आत्मपरवेदनम्' मन्त्रे यत् स्वपरबलाबलज्ञानम् 'एतदेव हि विधानम्' मन्त्रतत्त्वम्॥ वीक्ष्य इत्यत्र चालेति मु॰ पाठः॥ १२ स॰ १५ श्लो॰ ॥ ४१॥

निषिद्धानुष्ठानमभिधातुमाह—'निष्फलम्' इति। 'मतिमान्' नीतिज्ञः। 'सन्दिग्धफलम्' अनिश्चितफलम्। महावैरम् अनुबध्नाति यत् तत् 'महावैरानुबन्धि'। स्पष्टमन्यत्॥ १२ स॰ १६ श्लो॰ ॥ ४२॥

कीदृक् कर्म्म कर्त्तव्यमित्याह 'सदा' इति। 'सदा' सत्कालं 'शुचि' विशुद्धम्। 'आयतिसंशुद्धं' विशुद्धोत्तरकालम्। 'शुद्धक्रमागतं' शुद्धेन निर्दोषेण क्रमेण मार्गेण आगतम्। 'हितानुबन्धि' उभयलोकहितम् अनुबध्नाति यत् तत् 'कर्म्म' सद्भिः सदा प्रशस्यते॥ शुद्धक्रमागतम् इत्यत्र शुद्धं क्रमागतम् इति केचित्॥ १२ स॰ १७ श्लो॰ ॥ ४३॥

एतदेव समर्थयन् आह—'हितानुबन्धि' इति। 'तदा' तत्कालम् 'अकटुकेऽपि' सौख्यरहितेऽपि। शेषं स्पष्टम्॥ १२ स॰ १८ श्लो॰ ॥ ४४॥

सर्व्वत्र नीतिशास्त्रानुसारेण देशकालादेरनुकूलतां विविच्य कार्य्यारम्भः प्रशंसनीयः, क्वचित्तु सिंहवत्तितापि प्रशस्यते, इत्याह 'बुद्धैवोपक्रमः' इति। "फलनिष्पत्तये" सुखसिद्ध्यर्थं 'सदा' 'बुद्ध्यैव' श्रेयानुगमेन ज्ञानेनेत्यर्थः। 'उपक्रमः' प्रारम्भः 'श्रेयान्' श्रेयस्करः। कल्याणमित्रस्य' कल्याणं मित्रं यस्य, सर्व्वतः कुशलिन इति यावत्। 'क्वचित्' कदाचित् समयानुसारेणेत्यर्थः। 'सिंहवत्तिता' व्यायामवत्तिता, व्यायामयुद्धेनोपक्रमोऽपीति यावत्। 'शस्यते' फलोपधायिका भवति॥ क्वचित् कल्याणमित्रस्य इत्यत्र क्वचित् कल्याणमित्येतत् इति, सिंह-

रक्षिता इत्यत्र सिंहहन्तिना इति च केचित् पठन्ति॥ १२ स० १९ श्लो० ॥ ६५ ॥

"उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः" इत्याह 'सहसोत्प्लुत्य' इति। 'सहसा उत्प्लुत्य' देशकालनिरपेक्षया सहसा आक्रम्य 'दुष्टेभ्यः' दुरात्मभ्यः सम्पदां धनधान्यादीनां श्रेयसां वा अर्ज्जनम् उपार्ज्जनं 'दुष्करं' दुःसाध्यम्। 'उपायेन' शास्त्रोक्तिमोपदेशेन 'मत्तदन्तिनां' मत्तहस्तिनां 'मूर्द्धि' 'पदं' 'न्यस्यते' न पुनः सहसोत्पत्य मत्तदन्तिनो मूर्द्धि पदन्यासं कर्त्तुं शक्यते। उपायास्तु मन्त्रेण निर्णीयन्ते इति भावः॥ मत्तदन्तिनाम् इत्यत्र मत्तहस्तिनाम् इति मु० पाठः।

सहसोत्पत्य दुष्टेभ्यो यातव्येभ्यः सहस्रशः।
तदशक्यदुष्करं कर्त्तुमनशक्यं यदर्ज्जनम्॥

इति पाठान्तरम्॥ १२ स० २० श्लो० ॥ ६६ ॥

तदेव समर्थयन् आह—'न किञ्चित्' इति। 'इह' लोके 'विपश्चितां पण्डितानां 'क्वचित्' देशे कालेऽपि वा 'किञ्चित्' किमपि सुदुर्लभमपीति यावत्। 'वस्तु' 'असाध्यं' 'न' 'अस्ति'। 'अयः' लौहकनकादि 'अभद्यम्' अपि 'उपायेन' तापादिकर्म्मणा यन्त्रपाकादिना वा 'द्रवताम्' द्रवन्त्वम् 'उपनीयते'। मन्त्रेणैवेति भावः॥ १२ स० २८ श्लो० ॥ ६७ ॥

तदेव द्रढयति—'वाह्यमानम्' इति। स्कन्धेन 'वाह्यमानम् अयःखड्गम्' लौहमयफलं 'नैवापि' 'स्कन्धं' 'छन्नति' अल्पमपि छिनत्तीत्यर्थः। उपायरहितत्वादिति तात्पर्य्यम्। 'अल्पमपि' 'तत्' लौहशकलं 'धारावत्' शतधारं सत् शस्त्रस्थितं तीक्ष्णमित्यर्थः। 'ईप्सितसिद्धये' शत्रुस्कन्धच्छेदनादिरूपाभीष्टसाधनाय 'भवेत्'॥ भवेत् इत्यत्र भवतीति मु० पाठः॥ १२ स० २९ श्लो० ॥ ६८ ॥

उपायेन असाध्यसाधनमपि भवति, इति दृष्टान्तेन समर्थयन् आह—'लोकप्रसिद्धम्' इति। 'वारि' जलं 'वह्नेः' अग्नेः 'नियामकम्'

उपशमकारकम् 'एतत्' 'लोकप्रसिद्धमेव'। तथापि 'उपायोपग्रहीतेन तेनैव' वह्निमेव 'परिशोष्यते' परिशोषणम् आपाद्यते। स्थाल्यादि-संस्थितं वह्न्युपशमकारणं सलिलमधःप्रज्वलितेन तेनैव वह्निना परिशोष्यते इति मन्त्रानुगतोपायानाम् असाध्यं किमपि नास्तीति भावः॥ १२ स० ३० श्लो०॥ ४८॥

अहितमपि मन्त्रबलेन हिताय कल्पते इति दृष्टान्तेन समर्थयन्नाह—

"विषं सुविषमाहारं केवलं मारयात्मकम्।
तदेव द्रव्यसंयोगात् औषधाय प्रकल्पते॥"

इति। 'विषं' 'सुविषमाहारं' सुविषम आहारो यस्य तत्, भोक्तुमशक्यं भुक्तं च महानिष्टकारमित्यर्थः। 'केवलं मारयात्मकं' अतपाने मृत्युव्यतिरिक्तमन्यत् फलं नास्तीत्यर्थः। 'तदेव' विषमेव 'द्रव्यसंयोगात्' मन्त्रबलेनेत्यर्थः। 'औषधाय प्रकल्पते' रोगोपशमकारणं हितकरञ्च भवतीत्यर्थः॥ अयं श्लोको मुद्रितपुस्तके नास्ति॥ १२ स० ३१ श्लो०॥

मन्त्रिकर्माभिधातुमाह—'अविज्ञातस्य' इति। 'अविज्ञातस्य' अपरिज्ञातस्य देशकालव्यवहितस्येति यावत्। 'विज्ञानं' दर्शनम्। ज्ञानचक्षुषेति शेषः। 'विज्ञातस्य च निश्चयः' राज्ञो मन्त्रिमतसंवादात् विज्ञातस्य विनिर्णयो भवतीति भावः। 'अर्थद्वैधस्य सन्देहच्छेदनम्' एतत् किमेवं? अथवा किमेवं भविष्यति? इति द्वैधस्य संशयच्छेद इत्यर्थः। 'शेषदर्शनम्' एकदेशदृष्टस्य शेषोपलब्धिरित्यर्थः। एतच्चतुष्टयं मन्त्रिकर्म इति वाक्यशेषः। तथा च कौटिल्यः "अनुपलब्धस्य ज्ञानम्, उपलब्धस्य निश्चयो बा बलाधानम्, अर्थद्वैधस्य संशयच्छेदनम्, एकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतदिति विद्वद्भिस्तुभिर्मन्त्रिभिर्मन्त्रयेत्" इति॥ १२ स० ३२ श्लो०॥ ५०॥

"ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः।" इत्याह

'विदुषाम्' इति। 'विदुषां' नीतिशास्त्रविशारदानां 'शासनं' शास्त्रानुसारिण्युपदेशे 'तिष्ठन्' 'कश्चन' हीनकुलोत्पन्नं निर्धनं मूर्खमपि 'न अवमन्येत'। 'सुभाषितजिघृक्षया' गुणवदाक्यग्रहणार्थम्। हंसः क्षीरमिवाम्भस इति भावः। 'सर्व्वस्य च उक्तं' वचनं 'प्रगृह्णात्'। सर्व्वस्य चोक्तम् इत्यत्र सर्व्वस्य चापीति केचित् पठन्ति॥ १२ स० ६३ श्लो०॥ ५१॥

अतः परं श्लोकद्वयं मुद्रितपुस्तके प्राचीनटीकायाश्च न दृश्यते॥

विजिगीषोः कार्य्यमाह—

"अलब्धलाभस्तु यो लाभः लब्धानां परिरक्षणम्।
इयन्तौ विजिगीषूणां वीर्य्यव्यायामभूमयः॥"

इति। अलब्धानां लाभः लब्धानां परिरक्षणञ्च एतद्द्वयमेव विजिगीषूणां वीर्य्यव्यायामयोः स्थानम् इति भावः। प्रथमचरणद्वये अलभ्यमानेः लब्धार्थं यत्नकरस्य वेतनम्।' एवमपि पाठो दृश्यते॥ १२ स० ६४ श्लो०॥

परान् विजेतुमशक्तस्य ऐश्वर्य्यं विड़म्बनामात्रमित्याह।

"शोभा हि कृतकृत्यस्य राज्ञो भोगा विभूतयः।
अप्राप्तविजिगीषस्य ता एव हि विड़म्बनाः॥"

'कृतकृत्यस्य' समाप्त-विजिगीषस्य 'राज्ञो' 'भोगा विभूतयः' च 'शोभा' शोभामात्रम्। 'अप्राप्तविजिगीषस्य' विजिगीषाविरहितस्य असमाप्तविजिगीषस्य वा 'ता एव' भोगा विभूतयश्चैव 'विड़म्बनाः' दुश्चेष्टेत्यर्थः। १२ स० ६५ श्लो०॥

मन्त्रिवचनातिक्रमो दोषावह, इति दर्शयन्नाह—'मदोद्धतः' इति। 'मदोद्धतः' अहमेव सर्व्वं जानामीति ज्ञानमदेन उद्धतः। 'क्रियामूढः' कर्त्तव्यतामूढ़ो 'यो' 'मन्त्रिणम्' 'अतिक्रामति' तदुपदिष्टमाकरणात् 'इथामन्तं' मन्त्राभासविप्रलब्धं 'तं' भूपतिं 'विद्विषः' शत्रवः 'अचिरात्' अनतिदीर्घकालेनैव 'अतिक्रामन्ति' अतीव अभिसन्धाय तद्राज्य माक्रम्य गृह्णन्तीत्यर्थः॥ १२ स० ६६ श्लो०॥ ५२॥

मन्त्रभेदनिवारणार्थमाह—'संरक्षेत्' इति। 'मन्त्रबीजं' मन्त्रः बीजम् इव तत् संरक्षेत्। यथास्येयमपरिक्षीयमानं फलजनकं भवति, तथा कुर्य्यादिति भावः। 'हि' यतः 'महीभुजां' राज्ञां 'तत्' मन्त्रबीजमेव 'बीजम्'। तस्मात् सुरक्षिता महीभुजो भवन्तीति भावः। 'यस्मिन्' मन्त्रबीजे भिन्ने 'ध्रुवं' निश्चयं 'भेदः' राज्ञ एव विनाश इत्यर्थः। यस्मिन् 'गुप्ते' सुसंरक्षिते 'अनुत्तमा' 'गुप्तिः' भवेदिति शेषः॥ यस्मिन् इत्यत्र तस्मिन् इति पाठान्तरम्॥ १२ स० ३७ श्लो०॥ ५१॥

मन्त्रगुप्तिमेव दर्शयन्नाह—'सिंहवत्' इति। सिंहो हि संकुचितः सर्व्वावयवावष्टम्भः परैरलक्षितचेष्टो मार्ज्जारवदकस्मात् ग्रसते इत्येवं 'सिंहवत् चेष्टमानस्य' 'विपश्चितः' नीतिपण्डितस्य विजिगीषोः 'काले' चेष्टानुकूले समये 'कर्म्म' अनुष्ठानम् 'अस्य' 'सकुल्याः' बन्धवः 'क्रियमाणं' 'परे तु' 'कृतं' निष्पन्नं 'विदुः' जानीयुः॥ अनुष्ठानात् पूर्व्वं न कोऽपि किमपि ज्ञातुं शक्नोतीति भावः॥ १२ स० ३८ श्लो०॥ ५४॥

गुणवन्मन्त्रमभिधातुमाह—'अपश्चात्तापकृत्' इति। 'अपश्चात्तापकृत्' यो हि मन्त्र उत्तरकाले नानुतापं जनयति। 'सम्यक् अनुबन्धिफलप्रदः' अनुबन्धाः फलान्तराणि विद्यन्ते यस्य मुख्यफलस्य तत् अनुबन्धि। अनुबन्धिफलं प्रददातीति। 'अनुरक्तिफलप्रदः' इति मु० पाठे, तु प्रकृतिरञ्जनरूपफलदायकः इत्यर्थः। 'अदीर्घकालः' यो हि न सुदीर्घकालव्यापी। 'अभीष्टः' भेदाभावात् वाञ्छितः। 'प्रशस्यः' उभयलोकाविरोधात् प्रशंसनीयः। 'मन्त्र इष्यते' सद्भिरिति शेषः॥ १२ स० ३९ श्लो०॥ ५५॥

मन्त्राङ्गान्याह—'सहायाः' इति। 'सहायाः' पुरुषद्रव्यसम्पदाख्यसमृद्धं प्रथममङ्गम्। 'साधनोपायाः' कर्म्मणां साधने ये उपायाः, कर्म्मणामारम्भोपायाख्यं द्वितीयमङ्गम्। 'विभागो देशकालयोः' अस्मिन् देशे अस्मिन् काले अनुष्ठितं कर्म्म सिध्यतीति देशकालविभागस्तृतीय-

मङ्गम् । 'विपत्तेश्च प्रतीकारः' विपत्तेर्विघ्नानां प्रतीकारः, विनिपात-प्रतीकार इति यावत् । अयञ्च चतुर्थमङ्गम । 'सिद्धिः' फलसिद्धिः पञ्चममङ्गम् । 'मन्त्रः' एवं 'पञ्चाङ्ग इष्यते' इत्यर्थः ॥ तथाच कौटिल्यः "कर्म्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागो, विनिपातप्रतीकारः, कार्य्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः" इति । सिद्धिः पञ्चाङ्ग इष्यते इत्यत्र मन्त्रः पञ्चाङ्ग उच्यते इति मु० पाठः ॥ १२ स० ४० श्लो० ॥ ५६ ॥

मन्त्रिकर्त्तव्यमाह—'अनुतिष्ठेत्' इति । 'समारब्धं' यदारब्धं दुःसाध्यादिकं कर्म्म तत् 'अनुतिष्ठेत्' यथा सुसमाप्तिं गच्छति तथा भूयोभूयः प्रेरयेत् । 'अनारब्धं प्रयोजयेत्' यथा प्रारभ्यते तथा कुर्य्यात् । 'अनुष्ठितञ्च' निष्पन्नञ्च कर्म्म 'सद्बुध्या' शोभनबुद्धिबलेन 'विशेषेण' यथा स्थायि भवति तथा 'उपपादयेत्' निष्पादयेत् । तथाच कौटिल्यः, "अकृतारम्भम्, आरब्धानुष्ठानम्, अनुष्ठितविशेषम्, नियोगसम्पदाञ्च कर्म्मणां कुर्य्युः" मन्त्रिण इत्यनुवर्त्तते ॥ अनुष्ठितञ्च सद्बुध्या इत्यत्र अनुष्ठितञ्च संबुध्या इति केचित् पठन्ति ॥ १२ स० ४१ श्लो० ॥ ५७ ॥

मन्त्रप्रयोगमाह—'प्रचारयेत्' इति । मन्त्रिदूतगूढपुरुषाश्च भवन्ति मन्त्रिणः । मन्त्रो मन्त्रिदूतगूढेषु पुरुषेषु यथायथं समर्प्यते इति । तान् त्रिविधानपि 'मन्त्रविदः' यथासम्भवम् 'अनेकधा' 'कार्य्यद्वारेषु' पृथ्वीपालनादि कार्य्यम् आयाति यैः द्वारैः तेषु शत्रुमित्रमध्यमोदासीनरूपेषु इत्यर्थः । 'प्रचारयेत्' प्रणिदध्यात् । 'तच्च' 'चेतसां साम्यं' मन्त्रिदूतगूढपुरुषाणाम् एकमन्त्रं 'साधु' सुसंश्लिष्टं यथा भवति तथा 'तेन कार्य्यद्वारेण यानादिगुणमनुतिष्ठन् 'समुत्पतेत्' आक्रामेत् इत्यर्थः ॥ साधु इत्यत्र शीघ्रमिति मु० पाठः । १२ स० ४२ श्लो० ॥ ५८ ॥

एतदेव द्रढ़यति 'यत्र मन्त्रिमनःसाम्यम्' इति । यस्मिन् चिकीर्षिते 'मन्त्रिमनःसाम्यम्' 'यत्र चेतो न शङ्कते' कर्त्तुः शरीरात्मापि

निमित्तानि शुभाशुभान्युदयन्ति। मन्त्रःशङ्कायां कार्य्यसिद्धिस्तु संश-यितेति मनसि शङ्कारहिते कार्य्यं विधेयमिति भावः। 'यत्र' 'विक्री-षितं' कर्त्तुमीप्सितं 'सन्तो न निन्दन्ति' 'तत् महीयात्' गच्छेत्, कर्त्तुमिति शेषः॥ १२ स० ४३ श्लो०॥ ५९॥

सचिवादिभिर्निर्णीतेष्वपि मन्त्रेषु व्यभिचारः सम्भवतीति सर्व्वथा न विश्वसनीयं विजिगीषुणेति दर्शयन् आह—'धृतेऽपि' इति। 'मन्त्र-*ज्ञैः' मन्त्राभिज्ञैः 'धृतेऽपि' निर्णीय व्यवधारितेऽपि 'मन्त्रे' विजिगीषुः 'स्वयं भूयो विचारयेत्' 'यथा स्वार्थं न पीड़येत्' यथा विजिगीषोः स्वार्थहानिर्न भवेत् 'मन्त्रघ्नो' विजिगीषुः 'तथा वर्त्तेत' दीर्घकालं व्याप्य विग्रहादौ स्वार्थपीड़ा भवतीति तत्र सावधानेन विजयिना भवितव्यम् इति भावः। मन्त्रज्ञैः इत्यत्र तत्त्वज्ञैः इति मु० पाठः। १२ स० ४४ श्लो०॥ ६०॥

एतदेव स्पष्टयन्नाह—'मन्त्रिणा' इति। स्वार्थे एव तात्पर्य्यं कारणं तस्मात्। स्वार्थसिद्ध्यर्थं मन्त्रिणो दीर्घकालव्यापिनं विग्रहमभिलषन्ति इत्यर्थः। स्पष्टमन्यत्॥ १२ स० ४५ श्लो०॥ ६१॥

मन्त्रिनिर्णीतकार्य्यस्य सिद्धिलक्षणान्याह—'मनःप्रसादः' इति। 'मनःप्रसादः' चित्तस्य प्रसन्नता, कलुषताराहित्यमिति यावत्। 'श्रद्धा च' कार्य्यसिद्धावध्यवसायः। 'तथा करणपाटवं' करणानाम् इन्द्रियाणाम् एकादशानामपि पटुता। 'सहायोत्थानसम्पत् च' सहा-येन सह उत्थानसम्पत् च। एतत् सर्व्वं 'कर्म्मणो सिद्धिलक्षणम्' एभिर्लिङ्गैः सिद्धिरवश्यम्भाविनीति लक्ष्यते इति॥ सहायोत्थानस-म्पच्च इत्यत्र सत्त्वायोत्थानसम्पच्च इति मु० पाठः॥ १२ स० ४६ श्लो०॥ ६२॥

एतदेव समर्थयन्नाह—'लघूत्थानानि' इति। 'लघूत्थानानि' लघु अ-विलम्बितम् उत्थानं येषां तानि। 'अविघ्नानि' विघ्नरहितानि। 'सम्भ-वत्साधनानि च' सम्भवन्ति साधनानि सम्पदाम उत्पत्तिनिमित्तानि

च। एतानि 'वारम्वारं' 'पुरः' अग्रतोभाविनीं 'सिद्धिं' 'कथयन्ति' ख्यापयन्ति॥ १२ स० ४० श्लो०॥ ६३॥

मन्त्रस्तावत् प्रयत्नतो रक्षणीय इत्याह—

"आवर्त्तयेन्मुहुर्मन्त्रं धारयेच्च प्रयत्नवान्।
अप्रयत्नहतो मन्त्रः प्रचलन्नभिवद्दहेत्॥"

इति। 'मन्त्रं' 'मुहुः' वारंवारम् 'आवर्त्तयेत्' आलोचयेत्। 'प्रयत्नवान्' यत्नमास्थायेत्यर्थः। 'धारयेच्च' संरक्षेच्च। 'अप्रयत्नहतः' प्रयत्ननासंरक्षितः, 'मन्त्रः' 'प्रचलन्' श्रुतिपरम्परया लोकेषु प्रकाशतामागच्छन् समुद्रस्येषु तैलविन्दुवत् सर्व्वत्र विसर्पन् इति यावत्। 'अभिवत्' अग्न्याधारात् प्रच्युत्य आकरमासाद्य क्रमशः समस्तमगारदाहकारी वह्निरिव 'दहेत्' मन्त्राधारं विजिगीषुं मन्त्रिणमखिलं प्रकृतिमण्डलञ्च इति शेषः॥ तथाच कौटिल्यः "मन्त्रभेदाद्धयोगक्षेमावहो राज्ञस्तथा युक्तपुरुषाणाञ्च" इति॥

"नावर्त्तयेन्मुहुर्मन्त्रं संरक्षेत् तत् परिस्रवन्।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्यात्मपरम्पराम्॥"

इति मु० पाठस्तु न सङ्गच्छते॥ १२ स० ४८ श्लो०॥ ६४॥

तदेव प्रकारान्तरेण कथयति—

"अप्राप्तसन्ततिर्मन्त्रः संरक्ष्येत परस्परम्।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्याप्तपरम्परा॥"

इति। 'अप्राप्तसन्ततिः' अप्राप्ता सन्ततिर्लोकेषु विस्तारो येन सः। 'मन्त्रः' 'परस्परं' 'संरक्ष्येत' विजिगीषुणा मन्त्रिणा गूढपुरुषादिना चेति शेषः। 'हि' यतः 'आप्तपरम्परा' आप्ताः मित्रप्रभृतयः, तेषामप्याप्ता भवन्ति, तेषामपि, एवमाप्तपरम्परा भवति। 'अरक्ष्यमाणं मन्त्रं' भिनत्ति। तथाच कौटिल्यः "मन्त्रिणामपि हि मन्त्रिणो भवन्ति, सैषा मन्त्रिपरम्परा मन्त्रं भिनत्ति" इति॥ श्लोकोऽयं मुद्रितपुस्तके परित्यक्तः॥ १२ स० ४६ श्लो०॥

मन्त्रप्रकाशद्वारमाह 'मदः प्रमादः' इति । 'मदः' मद्योपयोगजः, सत्परवशो विस्मृत्य मन्त्रभेदं करोतीत्यर्थः । तथा चोक्तं दर्पणकृता—

"सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः ।
अमुना चोत्तमः शेते मध्यो हसति गायति ।
अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥"

इति । 'प्रमादः' कार्यान्तरासक्तिः । 'कोपः' क्रोधोऽपि प्रकृत्तो मन्त्ररक्षाविस्मरणात् भेदक इत्यर्थः ।'सुप्तप्रजल्पितानि च''प्रच्छन्नकामिन्यः' तिरोहितकामिन्यो वशीकृतभर्तृका इत्यर्थः । अथवा प्रच्छन्नं या कामयन्ते ताः 'प्रच्छन्नकामिन्यः' वारनार्यः । तथा 'अवमताः' न किमपि जानन्तीति अवज्ञाताः, शुकसारिकावाल-व्याधिप्रपीड़ितादयः । तथाच कौटिल्यः "श्रूयते हि शुकसारिकादिभिर्भिन्नो मन्त्रः पशुभिरन्यैश्च तिर्य्यग्योनिभिरवमतैः" इति । कोपश्च इत्यत्र कामश्च इति, कामिन्योऽवमता इत्यत्र कामिन्यश्च मता इति मु० पाठः ॥ १२ स० ५० श्लो० ॥ ६५ ॥

मन्त्रप्रदेशमभिधातुमाह—'निस्तम्भे' इति । 'निस्तम्भ' स्तम्भरहितस्थाने 'निर्गवाक्षे' वातायनरहिते । वातायनेन हि शब्दानां बहिर्निःसरणात् । 'निर्भिन्नान्तरसंश्रये' निर्भिन्नः अन्तरसंश्रयो यत्र तस्मिन् । प्रच्छन्नश्रोतृणां यत्र संश्रयो नास्ति । 'प्रासादाग्रे' 'अरण्ये' वा' निर्ज्जने इत्यर्थः । 'अविभावितः' अवस्थितः सन् मन्त्रयेत । तथाच कौटिल्यः "मन्त्रपूर्व्वाः सर्व्वारम्भास्तस्रोद्देशः संवृतः कथानामनिस्रावी पक्षिभिरप्यनालोक्यः स्यात्" इति । निर्भिन्नान्तरसंश्रये इत्यत्र निभृतेऽन्तरसंश्रये इति मु० पाठः । निर्भिद्यन्तरसंश्रये इति च क्वचित् पाठः । प्रासादाग्रेऽथारण्ये वा इत्यत्र प्रासादोपर्य्यरण्ये वा इति मु० पाठः ॥ १२ स० ५१ श्लो० ॥ ६६ ॥

तमेवाह—

ग्रहये' इत्यत्र 'कार्य्यसिद्धिविग्रहये' इति मु॰ पाठः॥ १२ स॰ ५४ श्लो॰ ॥ ६८ ॥

मन्त्रिनियोगरीतिमाह—

"एकत्र पञ्च सप्तापि वैयम्य-क्रियया युताः।
मन्त्रिणो भूभुजा कार्य्या इति केचिद् वदन्ति वै॥" इति।

'भूभुजा,' 'एकत्र' एकस्मिन् कर्त्तव्ये देशविग्रंघस्य शासने वा विपक्ष-विग्रहेण सन्धिविग्रहादौ वा खनिजद्रव्यानुसन्धाने वा करसंग्रहे वा प्रजानां धनधान्यादिरक्षणे वा 'वैयम्यक्रियया युताः' कार्य्याणामवान्तर-भेदात् पृथक् पृथक् कार्य्यचिन्तने नियुक्ता इत्यर्थः। 'पञ्च सप्तापि' अपि शब्दात् अधिका अपि 'मन्त्रिणः कार्य्याः' एकैकस्मिन् कार्य्ये भिन्नभिन्नविषयेषु पृथक् पृथक् मन्त्रिणो नियोज्या इति भावः। 'इति केचित् वदन्ति'। श्लोकोऽयमपि मुद्रिते पुस्तके न दृष्टः॥ १२ स॰ ५५ श्लो॰ ॥

बहुकल्पिते मण्डले मन्त्रक्रममाह—'एकैकेन' इति। 'स्वहितान्वेषी' आत्महिताकाङ्क्षी राजा 'एकैकेन' प्रत्येकेन मन्त्रिणा सह 'कार्य्याणि' कर्त्तव्यानि 'पुनः पुनः सुविचार्य्य' यथाशास्त्रं विविच्य 'पृथक् पृथक्' 'एषां' मन्त्रिणां 'मतं' 'प्रविशेत्' प्रणिदध्यात्। तथाच कौटिल्यः "माने-कैकशः पृच्छेत् समस्तांश्च हेतुभिर्मेकैकं मतं प्रविशेत् विद्वान्" इति। 'एकैकेन हि कार्य्याणि सुविचार्य्य पुनः पुनः।' इत्यत्र चत्वारि तु कार्य्याणि सम्प्रधार्य्य पुनः पुनः।' इति मु॰ पाठः॥ १२ स॰ ५६ श्लो॰ ॥ ६६ ॥

कीदृशस्य मन्त्रिणो वचनं कुर्य्यादिति दर्शयन् आह—'महापक्षः' इति। महाप्रमाणः पक्षः बन्धुवर्गो यस्य सः 'महापक्षः'। ईदृशो हि स्वकार्य्यार्थं नाहितमुपदिशतीत्यर्थः। 'यथाशास्त्रं' शास्त्रानति-क्रमेण 'दृढकर्मा' 'हितः' प्रागप्यनुष्ठित-षाड्गुण्याहित-स्वामिहितः। 'सधीः' प्रज्ञासम्पन्नः। मन्त्री 'मताल्ढः' इतरमन्त्रिमताल्ढः सन्

'यत् ब्रूयात्' 'साधु' व्यभिचाररहितं 'तत्' 'समाचरेत्' अनुतिष्ठेत्॥ १२ स० ५७ श्लो०॥ ७०॥

मन्त्रानन्तरं कालातिक्रमे भेदसम्भावनेति तन्निवारणार्थमाह— 'नातीयात्' इति। मन्त्रानन्तरम् अतिक्रान्ते काले भूयो मन्त्रयेदिति भावः। वाक्यार्थस्तु न दुरवगाहः॥ १२ स० ५८ श्लो०॥ ७१॥

विलम्बे कार्य्यहानिः स्यादित्याह—'न कार्य्यकालम्' इति। सुदुर्लभः कार्य्ये योगः कथञ्चिदेव भवतीति न कार्य्यकालमतिक्रामेदित्याशयः। वाक्यार्थस्तु सुगमः। 'कार्य्ये योगः' इत्यत्र 'कार्य्ययोग' इति पाठान्तरम्॥ १२ स० ५९ श्लो०॥ ७२॥

कार्य्यन्तु यथाकालमेव करणीयम्, इत्याह—'सताम्' इति। सुगमम्।

"तत्सिद्धये प्रयत्नेन रवववत् फलमश्नुते।
सतां मार्गेण मतिमान् काले कर्म्म समाचरेत्॥
काले समाचरन् साधु रसवत् फलमश्नुते॥"

इति। पाठान्तरम्॥ १२ स० ६० श्लो०॥ ७३॥

आक्रमणकालमाह—'इति चेति च' इति। 'इति च इति च' इति 'सम्पश्यन्' एतत्करणे एतत् फलं भविष्यति, एतदकरणे च इयं हानिर्भविष्यति, इत्येवं पर्य्यालोचयन्, अनुकूलदेशकालसहायसम्पन्नः 'विशुद्धपार्ष्णिः' विजिगीषुः 'सदस्तु' आत्महितकरं देशनगरादिकं 'समाक्रामेत्' 'न' तु असमये 'चापलात्' आक्रामेत् इति शेषः। 'विशुद्धपार्ष्णिः सदस्तु' इत्यत्र 'विशुद्धपार्ष्णशब्दस्तु' इति, 'कालदेशसहायवान्' इत्यत्र 'काले देशे सहायवान्' इति च क्वचित् पाठः॥ १२ स० ६१ श्लो०॥ ७४॥

अविमृश्यकारिताया दोषं दर्शयन्नाह—

"अविचार्य्य बलाबलं द्विषाम् अहमित्येव समुद्धतो बलात्।
चपलः श्रमतेन सम्पतन् निपतत्यल्पमना न बुध्यते॥"

इति । 'द्विषां' 'बलाबलम्' 'अविचार्य्य' 'अहमित्येव' अहमेव बलवान् इति 'समुद्धतः' औद्धत्यशाली 'चपलः' 'स्वमतेन' मन्त्रिमतनिरपेक्षतया 'बलात्' 'सम्पतन्' आक्रामन् 'निपतति' सः 'अल्पमनाः' क्षुद्रमतिः अदूरदर्शीत्यर्थः । 'न बुध्यते' पतन्तमात्मानं न विजानाति । श्लोकोऽयं मुद्रितपुस्तके न दृश्यते ॥ १२ स० ६९ श्लो० ॥

तदेव समर्थयन् आह 'अहिते हितबुद्धिः' इति । वाक्यार्थस्तु न दुरवगाहः । 'अचिरं वै व्यसनी प्रबुध्यते' इत्यत्र 'चिरविभ्रान्तचित्तः प्रबुध्यते' इति केचित् पठन्ति ॥ १२ स० ६३ श्लो० ॥ ७५ ॥

मन्त्रबलेन भुजङ्गा इव विपक्षभूपा वश्या भवन्तीत्याह 'इति-मन्त्रबलात्' इति । 'इति' एवं यो मन्त्रसद्भावात् 'नयमार्गमाश्रितः' नीतिमार्गानुसारी 'उद्योगसमन्वितः' उद्योगी 'महीपतिः' 'दुष्टभुजङ्गमान् इव' 'महतो' 'रिपून्' 'वशं' 'विनयेत्' वशीकुर्य्यात् ॥ १२ स० ६४ श्लो० ॥ ७६ ॥

इति कामन्दकीयनीतिसारटीकायां श्रीभगवन्मोहनतर्कालङ्कारकृतायाम् उपाध्यायनिरपेक्षानुसारिण्यां हस्तलिखितपुस्तकानुसारेण मन्त्रविकल्पो नाम द्वादशः सर्गः ॥ ॰ ॥

मुद्रितपुस्तकानुसारेण एकादशः सर्गः समाप्तः ।

---

## द्वादशसर्गप्रारम्भः ।

मन्त्रविकल्पानन्तरं दूतप्रचारविकल्पं नाम [त्रयोदशं] सर्गमारभते ।

दूतप्रचारमाह 'कृतमन्त्र' इति । 'कृतमन्त्रः' कृतः मन्त्रो येन सः 'मन्त्रज्ञः' राजा 'मन्त्रिणां' मध्ये 'मन्त्रसम्मतम्' कमपीति शेषः । अथवा 'मन्त्रिणां मन्त्रसम्मतं' मन्त्रिणां मन्त्रेण अनुमोदितम् । 'दीप्ताभिमानिनम्' अहं दूत इत्यभिमानवन्तं सर्व्वथैव निःशङ्कमित्यर्थः । 'दूतं' दुनोति स्वाचारेण यातव्यम् इति दूतस्तम् । 'यातव्याय' गन्तव्यजनसमीपे 'प्रहिणुयात्' प्रेरयेत् । 'मन्त्रसम्मतम्' इत्यत्र 'मन्त्रिसम्मतम्' इति, 'दीप्ताभिमानिनम्' इत्यत्र 'दृप्ताभिमानिनम्' इति मु० पाठः ॥ १२ स० १ श्लो० ॥ १ ॥

सत्यसामान्यगुणसम्पन्नत्वे दूतस्य अवश्यम्भाविनो गुणानाह 'प्रगल्भ' इति । 'प्रगल्भः' अनुपरिषदि साध्वसहीनः । 'स्मृतिमान्' स्वामिसन्दिष्टं किमपि न विस्मरति । 'वाग्मी' स्ववचनेन सभां रञ्जयति । 'शास्त्रे' नीतिशास्त्रादिके, 'अस्त्रे' धनुरादिके च 'निष्ठितः' दक्षः । अभ्यस्तं सुशिक्षितं कर्म्म शास्त्रप्रतिपादितकार्य्यं येन सः । तादृशो भूपतेर्दूतो भवितुमर्हति, योग्यो भवति ॥ १२ स० २ श्लो० ॥ २ ॥

दूतस्यापि त्रैविध्यं दर्शयति, 'निसृष्टार्थः' इति । निसृष्टः नियमरहितः अर्थः सन्धिविग्रहादिको यस्य । यथा युधिष्ठिरेण वासुदेव एवमुक्त्वा प्रेषितः—"यद् यदस्मद्धितं कृष्ण! तत्तद्वाच्यः सुयोधनः" इति । अत्र सन्धिरेव कर्त्तव्यो विग्रहो वेति न नियमः । 'मितार्थः' मितः नियमितः निर्दिष्टः अर्थः सन्धिविग्रहादिको यस्य सः । त्वया रिपुसंसदि एवं व्यवहर्त्तव्यं यथा विग्रहो भवति, इत्येवं स्वामिना नियमितो मितार्थः । 'शासनहारकः' शासनं स्वामिसन्देशं वहति यः सः ।

ध्ययं हि यावदुक्तावितमाचष्टे। इत्थं त्रिविधो दूतः सामर्थ्यात् पादतो हीनः। सामर्थ्यं हि अमात्यानां पञ्चविंशतिगुणरूपम्। निःसृष्टार्थात् पादगुणहीनो मितार्थः। ततोऽपि पादगुणहीनः सन्देशहारकः। सन्देशवाहक इत्यत्र सन्देशहारक इति पाठान्तरम्॥ १२ स० ३ श्लो०॥ ३॥

दूतानामितिकर्त्तव्यतामाह—'स भर्त्तुः' इति। 'सः' त्रिविधोदूतः 'भर्त्तुः' विजिगीषोः 'शासनात्' 'स्वराष्ट्रपरराष्ट्राणाम्' 'उत्तरोत्तरम्' 'इति च इति च इति, चिन्तयन्' 'गन्तव्यं' यातव्यं रिपुं गच्छेत्॥ स्ववाक्यपरवाक्यानामिति चेति च चिन्तयेत् इति पाठे, स्ववाक्यपरवाक्यानाम् उत्तरोत्तरम् इति च इति च इति चिन्तयेत्। प्रथमपाठे, एवं कृते स्वराष्ट्रस्य एवं भविष्यति, एवं कृते परराष्ट्रस्य एवं भविष्यतीति उत्तरोत्तरं परिणतिं चिन्तयन्नित्यर्थः। द्वितीयपाठे मया एवं वक्तव्यं शत्रुभिरेवं कथिते मया एवमुत्तरं दातव्यमिति उत्तरोत्तरं वचनविन्यासं चिन्तयेदिति भावः। तथाच कौटिल्यः, शासनमेवं वाच्यः, स वक्ष्यत्येवं तस्येदं प्रतिवाक्यमेवेति प्रतिसन्धातव्यमित्यधीयानो गच्छेदिति। १२ स० ४ श्लो०॥ ४॥

अन्तपालानिति। स्वमण्डलपरमण्डलानाम् अन्तान् पालयन्तीति अन्तपालाः, तान्। 'आटविकान्' च, सामदानादिभिः यथायोग्यकार्य्यार्थं मित्राणि कुर्व्वीत। अन्तःपालान् इति मुद्रितपाठे तु, अन्तः स्वराष्ट्रपरराष्ट्राणाम् अन्तः अभ्यन्तरं पालयन्ति ये ते तान्। 'सम्बलसिद्धये' स्वबलानां यथायुक्ततासम्पादनाय जलस्थलानि जलमयप्रदेशान् स्थलमयप्रदेशांश्च मार्गान् स्वबलोपयोगिनिराबाधान् पथश्च विद्यात् जानीयात् आविष्कुर्य्यादित्यर्थः। विन्द्यात् इति पाठे लभेत इत्यर्थः। १२ स० ५ श्लो०॥ ५॥

'नाविज्ञात' इति। 'अविज्ञातः' अविदितवृत्तान्तः, अथवा शत्रुभिरपरिज्ञातः सन् शत्रोः पुरं संसदि च न प्रविशेत्। 'कार्य्यार्थम्'

अभिप्रेतकार्य्यसाधनार्थं 'कालम्' अवसरम् 'ईक्षेत'। 'अनुज्ञातश्च' प्रभुणानुमतश्च 'निष्पतेत्' प्रभोः पुरे सदसि च प्रविश्य स्वकार्य्यं साधयेत्। १२ स० ६ श्लो० ॥ ६ ॥

'सारवत्ताम्' इति। यतश्च-'प्रभोः' राज्ञश्च सारवत्तां दुर्गं तद्भूमिं दुर्गरक्षां दुर्गस्य छिद्रं कोषं मित्राणि बलानि च अनुसन्दध्यात्। १२ स० ७ श्लो० ॥ ७ ॥

'उद्यतेषु' इति। यथोक्तं न भयात् अपलपेत्। शेषं सुगमम् ॥ प्रकृतीनां च भर्त्तरि इत्यत्र दृष्टिवक्त्रविचेष्टितैः इति पाठान्तरम् ॥ १२ स० ८ श्लो० ॥ ८ ॥

न ब्रूयात् प्रच्युतिं प्रभोः प्रकृतीनां स्वभर्त्तरि।
कृत्यपक्षस्य चोपायं कुर्य्यादनुपलक्षितः ॥ ९ ॥

प्रभोः प्रकृतीनां जनपदकोषदण्डादीनां स्वभर्त्तरि प्रच्युतिं च्युतिं न ब्रूयात् न कस्यापि प्रकाशयेत्। शिष्टं सुगमम्। अनुपलक्षित इत्यत्र अनतिलक्षितः इत्यपि पाठः। १२ स० ९ श्लो० ॥ ९ ॥

'पृच्छ्यमानः' इति। स्वस्वामिनः प्रकृतिच्युतिं प्रकृतीनां विरागं पृच्छ्यमानोऽपि न ब्रूयात्। तत्प्रश्ने किमुत्तरं दद्यादित्याह, ब्रूयादिति। स्वस्वामिप्रकृतिच्युतिम् इत्यत्र पृथवाक् प्रकृतिच्युतिमित्यपि पाठः ॥ १२ स० १० श्लो० ॥ १० ॥

चिरसञ्जनार्थं यत् ब्रूयात् तस्यैवार्थमाह। कुलेन इति। विजिगीषुपक्ष-विजेतव्य-पक्षयोः चतुर्व्विध-स्तोत्रं यथा, कुलं विजिगीषोरभ्यर्हितं सोमान्वयायातं, त्वदीयमपि तथैव आदित्यसम्भवम्। नाम्ना विजिगीषुः श्लाघ्यतरः नाम्ना त्वमपि तथैव। श्रिया विजिगीषु र्नवतिकोटीश्वरः त्वमपि तथैव। महीयसा कर्म्मणा विजिगीषुरुत्खाताशेषप्रतिपक्षाधिगतानेकमण्डलस्त्वमपि तथा। इत्येवं चतुर्व्विधं स्तोत्रं कुर्य्यात्। मध्यस्थताख्यापनार्थमिति तात्पर्य्यम्। कुलेन इत्यत्र फलेन इति मुद्रितपाठे कार्य्यसाधनेनेत्यर्थः। १२ स० ११ श्लो० ॥ ११ ॥

विद्येति । विद्या आन्वीक्षिकीप्रभृतयः । शिल्पम् अस्त्रशस्त्रादि-सामग्रीप्रभृतिनिर्म्माणादौ असाधारणकौशलम् । तदुपदेशेन तत्तद्-विषयशिक्षादानव्याजेन संश्लिष्य सम्बन्धं घटयित्वा उभयवेतनैः स्वपक्षं भेद्यपक्षं जानीयात् । तद्भर्त्तुर्यत्नस्य विचेष्टितमपि बुध्येत इति । विद्याशिल्पोपदेशेन इत्यत्र तथाविद्योपदेशेन इति पुस्तकान्तरस्थ पाठः । १३ स० १२ श्लो० ॥ १२ ॥

तीर्थेति । तीर्थानि देवीमङ्गमप्रभृतीनि, आश्रमास्तपस्विनां तपो-वनानि, सुराः सोमेश्वर-भूतेश्वरप्रभृतयः, तेषां स्थानं तत्र शास्त्र-विज्ञानहेतुना तत्छलेनेत्यर्थः । नियुक्तैस्तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत् संवादं कुर्य्यात् । संवदेदित्यत्र संवसेत् इति, तीर्थाश्रमसुरस्थाने इत्यत्र तीर्थाश्रमाश्रयस्थाने इति च मुद्रितपुस्तकस्थपाठः । १३ स० १३ श्लो० ॥ १३ ॥

प्रतापमिति । प्रतापः पौरुषं, कुलं श्लाघ्यतरान्वयः, ऐश्वर्य्यं विभूते-राधिक्यं, त्यागो वदान्यता, उत्थानसौष्ठवम् उत्साहशक्तिप्रवणत्वम्, अक्षुद्रता अवञ्चकत्वं, भद्रता कल्याणबुद्धित्वं, भर्त्तुर्विजिगीषोः भेद्येषु विषये दर्शयेत् । दूतो भेद्यानात्मसात् कर्त्तुमिति भावः । प्रतापमि-त्यत्र सन्तापमिति मुद्रितपुस्तकस्य पाठः । १३ स० १४ श्लो० ॥ १४ ॥

सह्येत इति । असहिष्णुतया कार्य्यं नाशयेत्, कामादेरप्येको मन्त्रं भिनत्ति, इति वचनात् । अन्यैः सह एकशय्यायां न शयीत । स्वप्नाव-स्थायां मन्त्रभेदसम्भवादिति भावः । स्वं भावं मन्त्रात्मकमभिप्रायं रक्षेत । परस्य विद्यात् भावमित्यनुवर्त्तते । १३ स० १५ श्लो० ॥ १५ ॥

काले इति । दीर्घे काले अतीतेऽपि मेधावी दूतः आत्मसिद्धये स्वकार्य्यसिद्ध्यर्थं न खिद्येत । तथाच नानार्थलोभनैः विविधविषयक-प्रलोभनैः छाद्यमानां कालम् अतिवाहनानकसमयविवरणं बुध्येत जानीयात् । नानार्थलोभनैरित्यत्र नानाविलोभनैरिति पाठान्तरम् । १३ स० १६ श्लो० ॥ १६ ॥

तान्येव कालक्षेपकारणानि दर्शयन्नाह,—एतेष्विति। एतेषु काल-क्षेपदिवसेषु गच्छतु तत्र पृथिवीपतेः विजेतव्यस्य व्यसनं चेत् न पश्यति, स्वयञ्च विजेतव्यो भूपतिः वक्ष्यमाणश्लोकोक्तं किञ्चित् यन्तः-प्रकोपप्रशमनादिकं चेत् कर्त्तुम् इच्छति। न तत्र पृथिवीपतेरित्यत्र किमस्य पृथिवीपतेरिति पाठान्तरम्। १२ स० १७ श्लो० ॥ १७॥

स्वयं किं कर्त्तुम् ईहते इत्याह,—स्वान्तप्रकोपमिति। स्वान्तप्रकोपं विनेतुं, पार्ष्णिग्राहप्रोत्साहनादिकं कर्त्तुं प्रकृतिविरागं शमयितुञ्च इत्यर्थः। दुर्गसंस्कारं प्रस्तादेः संग्रहञ्च कर्त्तुं यदि ईहते इति शेषः। १२ स० १८ श्लो० ॥ १८॥

तदा किं कर्त्तव्यमित्याह—स्वपक्षेति। स्वपक्षस्य विजिगीषु-पक्षस्य अभ्युदयाकाङ्क्षी दूतः,देशकालौ प्रतीक्षते इति च तर्कयेत्। यातव्य इति शेषः। तत्र विजिगीषु-राष्ट्रे स्वयं यायी, यातव्यो यास्यतीति चित्तम् व्यास्यास्य समीहते तदनुकूलं चेष्टते, यातव्य इति शेषः। 'तत्र यायी स्वयं चित्तमास्यास्यैव समीहते' इत्यत्र 'अत यात्रां स्वयं कर्त्तुमस्यानेव समीहते इति पाठः समीचीनः। १२ स० १९ श्लो० ॥ १९॥

तर्कान्तरमाह,—यात्राकाल इति। यात्राकालस्य अस्मत्प्रभोरनुगु-णस्य च्छायार्थौ अतिवाहनाभिलाषो वा अयं यातव्यो विलम्बते काल-क्षेपं करोति, काले विक्षिप्यमाणे सति इति तर्कयेत् दूत इत्यर्थः। १२ स० २० श्लो० ॥ २०॥

तर्कस्य विनिर्णये किं कर्त्तव्यमित्याह—कार्य्येति। कार्य्यकाले विपत्तिं प्रभोरुपस्थितां विपत्तिं यथार्थं ज्ञात्वा विनिष्पतेत् स्वराष्ट्रे समागच्छेत्। अथवा तत्र तिष्ठन् भर्त्तुः विजिगीषु-समीपे सर्व्वान् वार्त्ता-विशेषाणाम् अर्थान् निवेदयेत् ज्ञापयेत्। शेषार्द्धे तिष्ठन् वार्त्ता-विशेषार्थौ भर्त्तुः सर्व्वं निवेदयेत् इति वा पाठः॥ १२ स० २१ श्लो० ॥ ॥ २१॥

तथान्यदपि दूतकर्माह,—द्विषोरिति। द्विषोर्यातव्यस्य ये परमार्थ-

भ्रुवः तेषां परिच्छेदः विनिर्णयः। सुहृदो मित्राणि, बन्धवो मातुलादयः, तेषां विभेदनं विभेदमापाद्य आत्मसात्करणं दुर्गकोषबलज्ञानं कीदृशानि दुर्गाणि, कियान् कोषः, कीदृक् बलम् एतेषां परिज्ञानम्। कल्यपक्षोपसंग्रहः इतिकर्त्तव्यताज्ञानम्। १२ स० २२ श्लो० ॥ २२ ॥

राष्ट्रेति। राष्ट्राध्यपेतपालानां राज्यस्थितप्रदेशरक्षकाणाम् आत्मसात्करणं वशीकरणम्। युद्धापसारभूमानं केन पथा मम प्रभुः संग्रामात् अपसर्त्तुं समर्थो भविष्यतीति ज्ञानम्, एतत् सर्व्वं दूतकर्म्म कथ्यते। १२ स० २३ श्लो० ॥ २३ ॥

चरलक्षणमाह—तर्क इति। तर्क ऊहः, येन अनुक्तमपि ऊह्यते। इङ्गितम् आकारस्य लक्षणं तद् जानातीति तर्केङ्गितज्ञः। स्मृतिमान् अविस्मरणशीलः, मृदुः अनिष्ठुरवचनः, लघुपरिक्रमः त्वरितगतिः, क्लेशायाससहः क्षुधाद्यभ्यादिकृतक्लेशान् मध्याह्नेऽध्वगमनजनितायासान् च सहते यः सः। दक्षः कुशलः, शीघ्रकारी च। प्रतिपत्तिमान् प्रत्युत्पन्नमतिः अनालोचितोत्तरदानकुशलः इत्यर्थः। ईदृशः चरः गूढ़पुरुषः स्यात्। १२ स० २५ श्लो० ॥ २५ ॥

चराणां वेशमाह—तपस्विव्यञ्जना इति। तपस्विनः प्रव्रजिताः ते इव व्यज्यन्ते। तपस्विलिङ्गिनः इत्यपि पाठः। धूर्त्ताः चतुराः। पण्यशिल्पोपजीविनः पण्यानि विक्रेयवस्तूनि, शिल्पानि कारुकर्म्मादीनि च उपजीवन्ति ये ते तादृशाश्चराः परितः समन्तात् द्वादश-राजमण्डलेषु जगतां जगन्निवासिनां मतमभिप्रायं पिबन्तः हृदयस्थं कुर्व्वाणाः चरेयुः। १२ स० २६ श्लो० ॥ २६ ॥

निर्गच्छेयुरिति। सर्व्ववार्त्ताविदः चराः अन्वहं प्रतिदिनं नृपतेः सकाशात् निर्गच्छेयुः तत्र विशेयुश्च। हि यतः ते चराः दूरतरं दूरवर्त्ति चक्षुः, राज्ञामिति शेषः। १२ स० २७ श्लो० ॥ २७ ॥

सूक्ष्ममिति। सूक्ष्मां परैरनुपलक्षितं सूक्ष्मं गूढ़तरपरवृत्तान्तानां सूचनं

तस्य प्रचारेण प्रकाशहेतोः चरिचेष्टितं पश्येत्। हि यस्मात् चारचक्षुर्महीपतिः स्वपन्नपि निद्रां गच्छन्नपि जागर्त्ति। चारचक्षुषा जगद्वृत्तान्तं प्रत्यक्षीकरोति इत्यर्थः। १२ स० २८ श्लो० ॥ २८ ॥

विवस्वानिति। स्पष्टम्। १२ स० २९ श्लो० ॥ २९ ॥

चारचक्षुरिति। नरेन्द्रः चारचक्षुः चारा एव चक्षुर्यस्य तादृशः स्यात्। भूयसा तेन चक्षुषा सम्पतेत् सञ्चरेत्। तेन चारमयेण चक्षुषा निर्णीय सर्व्वं कुर्य्यादिति भावः। मौढ्यात् मूढतया अनेन चारचक्षुषा असम्पतन् असञ्चरन् राजा समेऽपि समस्थलेऽपि पतति, यतः स अन्धः चारचक्षुर्विहीनः। १२ स० ३० श्लो० ॥ ३० ॥

सर्व्वसम्पदिति। चरेण प्रेरितगूढपुरुषेण द्विषदां सर्व्वसम्पत्समुदयं कोषदण्डजाभ्युदयादिकं, सर्व्वावस्थासु च विचेष्टितम् उद्यमः, तद्देशप्रार्थनानि च तद्देशवासिनाम् अभिप्रेतानि च विद्यात्। १२ स० ३१ श्लो० ॥ ३१ ॥

प्रसङ्गात् दूतस्यापि चरत्वं स्थापयन्नाह—प्रकाश इति। प्रकाशः प्रकटः, अप्रकाशः प्रच्छन्नः, अप्रकाशोऽयम् उद्दिष्टः तपस्वियज्ञमादिभिः आच्छादित-राजपुरुषत्वः प्रकाशः दूत उच्यते दूतोऽपि सर्व्ववार्त्तावित् भवति। चरति मण्डलान्तराणीति चरः। १२ स० ३२ श्लो० ॥ ३२ ॥

चरेणेति। चरेण गूढपुरुषेण राजा प्रचरेत्, पृथ्वीलाभ-पालनादर्थं व्यवहरेत्। अध्वरे स्रुवेण वेदोक्तवाक्येन ऋत्विगिव। दूते सन्धानमायाते चरेण दूते सन्धानं प्राप्ते इत्यर्थः। चरचर्य्या चरत्वं प्रतिष्ठिता दूते इति शेषः। १२ स० ३३ श्लो० ॥ ३३ ॥

तीक्ष्ण इति। सञ्चारभेदानाह—तीक्ष्णः कठोरकर्म्मा मृदुतारहितो वा। प्रव्रजितः वानप्रस्थाश्रमलिङ्गधारी, सत्री याज्ञिकवेशवान्। सचीत्यत्र छत्री इति क्वचित् पाठः। विशदः निर्म्मलचरितः। एते सञ्चारा ज्ञेया

एते सर्वे च न अन्योन्यवेदिनः न परस्परं जानन्तीत्यर्थः। १३ स० ३० श्लो० ॥ ३४ ॥

संस्थानवत्य इति। संस्थानम् एकस्मिन् प्रदेशे अवस्थितिः तद्वत्यः संस्थाः कार्य्यसंसिद्धये कार्य्याः। तथाच कौटिल्यः। "दुर्गेषु वणिजः संस्था दुर्गात् च सिद्धतापसाः, इत्येवं संस्था अवस्थानार्थम् आश्रया इत्यर्थः। यत्र सञ्चाराश्चराः तिष्ठेयुः परिचर्य्यावबाहिनः परिचर्य्यां लभमानाः। तिष्ठेयुर्यत्र सञ्चाराः परिचर्य्यावबाहिनः इत्यत्र तिष्ठेयुः पार्श्वसञ्चाराः परिचर्य्यामवादिनः इति मुद्रितपाठः। १३ स० ३४ श्लो० ॥ ३५ ॥

चारसंस्थित्यै के संस्थाः स्युरित्याह, वणिगिति। वणिगिति वैदेहिकव्यञ्जनः। कृषीवलः कर्षकः। लिङ्गी इति मठपतिव्यञ्जकः। भिक्षुकः सिद्धतापसव्यञ्जकः। अध्यापकः स्वाध्यायपरव्यञ्जकः। शुभाशयाः शुद्धचित्ताः स्वामिभक्ता इत्यर्थः। दत्तदाया अनुकूलवेतनाः एते चारसंस्थित्यै संस्थाः स्युः। वणिक् इत्यत्र वाचः इति मुद्रितपाठो न समीचीनः। १३ स० ३१ श्लो० ॥ ३६ ॥

स्वपक्षे इति। स्वपक्षे स्वमण्डले परपक्षे परमण्डले च मित्रोदासीनमध्यमेषु यावान् कश्चित् अवस्थितः यः कश्चित् विद्यते इत्यर्थः। तत्र प्रधानभूते सर्वस्मिन् चित्तवेदिनः अभिप्रायज्ञानकुशलाः सञ्चाराः चराः तिष्ठेयुः। १३ स० ३६ श्लो० ॥ ३७ ॥

चराणां संस्थान-प्रयोजनमाह—स्वपक्षे इति। यो राजा स्वपक्षे स्वमण्डले परपक्षे परमण्डले च चिकीर्षितं कर्त्तुम् ईप्सितं विरुद्धमित्यर्थात् आपदर्थे, न वेद न जानीयात् स जाग्रदपि सुप्तः निरवधानः विरुद्धचिकीर्षितानभिज्ञः इत्यर्थः। स भूयो न प्रतिबुध्यते दीर्घनिद्रां प्राप्नोतीत्यर्थः। १३ स० १८ श्लो० ॥ ३८ ॥

गूढपुरुषैर्विदितवृत्तान्तस्य विधेयमाह—कारणैः इति। कारणैः प्रतिश्रुतविषयस्य अप्रदानादिरूपकारणैः क्रुद्धान् अथवा अकारण-

क्रुद्धान् जन्मान्तरशत्रून् बुध्येत जानीयात्। स्वपरिग्रहे स्वकीयभृत्यवर्गे पापान् दुर्वाशयान् अकारणक्रुद्धान् जन्मान्तरायातवैरान् तूष्णीं दण्डेन साधयेत् उपांशुवधेन निपातयेदित्यर्थः। अकारण-क्रोधसम्भवोऽपि श्रूयते,-

"मुनेरपि निरीहस्य स्वानि कर्म्माणि कुर्व्वतः।
उत्पद्यन्ते वै त्रयः पक्षा मित्रोदासीनशत्रवः॥"

इति वचनात्। १२ स० ३९ श्लो० ॥ ३९ ॥

ये तु इति। ये तु कारणतो राजदोषात् क्रुद्धाः तान् दानमानाभ्यां शमयेत् उपशान्तक्रोधान् कुर्य्यात्। अनन्तरं पक्षपरिग्रहेण तान् वशीकृत्य तैः सह संवसेत्। छिद्रस्यापि रिपोर्मुखमित्यत्र छिद्रञ्च परिपूरयेत् इति मु० पाठः। १२ स० ४० श्लो० ॥ ४० ॥

वञ्चकान् मुखभङ्गेन राज्यस्य प्रथमं भयेत्।
उद्युक्तः सामदानाभ्यां छिद्रञ्च परिपूरयेत् ॥ ४१ ॥ इति।

वञ्चका इव ये राज्यस्य राज्ञश्च पीड़ाकराः स्वामिद्रोहबुद्धयो राज्यकण्टकास्तान् मुखभङ्गेन यथा कण्टकः मुखभङ्गे सति पीड़ां न जनयति तथा दण्डेन कण्टकत्वे त्याजिते तेऽपि दण्डभयात् न द्रोह-बुद्धयो भवन्ति। उद्युक्तश्च सन् सामदानाभ्यां छिद्रं परिपूरयेत् तथाच छिद्रमल्पमपि परिजनस्य भर्त्तरि क्रोधलोभादि रन्ध्रम् अरेर्मुखं द्वारं तेन प्रविश्यारिरपकरोति। १२ स० ४१ श्लो० ॥

छिद्रपरिपूरणे प्रयोजनमाह—अनुनेति। अनुनापि छिद्रेण रक्षा-शैथिल्यादिना प्रविश्य बलवत्तरं शक्तित्रयेणापि दुर्ध्वंसम् अरिम् उदकं कर्त्तृ यानपात्रमिव निःशेषम् अखिलं राष्ट्रं मज्जयेत् आपत्-सागरे मग्नं कुर्य्यात् विनाशयेदित्यर्थः। १२ स० ४२ श्लो० ॥ ४२ ॥

जड़ेति। जड़ाः मूकत्वबधिरत्वाभ्यां युक्ताः, मूकाः वक्तुमशक्ताः, अन्धाः दर्शनशक्तिरहिताः, बधिराः श्रवणशक्तिरहिताः,तत् छद्म विद्यते येषां ते। षण्डका अत्रापि छद्मशब्दो ज्ञेय-। किरावाः,वामनाः क्षुद्रावयवाः,

कुला वक्रावयवाः, कारवः सुवर्णकारादयः, एते अलक्षिताः सन्तः निजस्य प्रभोरपि अन्तःपुरगतां वार्त्ताम् आहरेयुः इति परश्लोकेनान्वयः। १३ स० ४३ श्लो० ॥ ४२॥

भिक्षुका इति। भिक्षुकाः भिक्षुकव्यञ्जनाः परिव्राजक-परिव्राजिकादयः, चारणा नाट्याचार्य्यादयः। दास्यः नानाकार्य्य-कलाविदश्च अन्तःपुरगतां प्रवृत्तिम् आहरेयुः। १३ स० [redacted] श्लो० ॥ ४३॥

छत्रेति। छत्रम् आतपत्रं, व्यजनं चामरादिकं, भृङ्गारो जलपात्रं, यानं शिविकादि, वाहनं हस्त्यश्वादि, एतद्धारिणः एते तद्विधाः अन्ये च महामात्रबहिर्वार्त्तां महती मात्रा गौरवं येषां ते महामात्रा मन्त्रि-पुरोहितादयः तेषां बहिर्वार्त्तां बाह्यविषयां विदुः। १३ स० ४५ श्लो० ॥ ४४॥

सूदेति। सूदाः पाचकाः। सुगमम्। १३ स० ४६ श्लो० ॥ ४५॥

जलेति। दसशब्देन विशेषोऽभिधीयते। ये चान्ये समीपवर्त्तिनः तेषामपि विषदानं सुकरम्। कार्त्तथा दसदा ह्येते इत्यत्र कार्त्तयाश्च सदा ह्येते इति मुद्रितपुस्तकस्य पाठः। १३ स० ४७ श्लो० ॥ ४६॥

चराणां वार्त्तासंप्रेषणोपायमाह—संज्ञाभिरिति। मुद्रितैः शरीर-भङ्गीभिः। मुद्रितैरित्यत्र मूर्च्छितैरिति च पाठः। लेख्यैः लिखिता-क्षरैः, आकारैः शरीरावयवैः, इङ्गितैः सङ्केतविशेषैः, अव्ययाः अनाकुलाचाराः गूढपुरुषाः चर्य्यां महामात्रादीनाम् आचरणानि परस्परं सुसंचरेयुः आहरेयुः। १३ स० ४८ श्लो० ॥ ४७॥

समापिबन्त इति। अनेकशिल्पाध्ययनप्रवीणाः बहुलिङ्गिरूपाः चराः, सूर्य्यपादाः भूमेर्जलानीव जगतां जगन्निवासिनां मतानि समापिबन्तः आचरन्तः सन्तः चरेयुः। १३ स० ४९ श्लो० ॥ ४८॥

विजिगीषोः परप्रयुक्तगूढपुरुषादि सन्धान-प्रतीकारार्थमाह—येनेति। परापरज्ञः परं शास्त्रम् अपरं लोकवृत्तं, तदुभयं जानातीति परापरज्ञः, स्वच्छमतिनिर्म्मलचित्तः, विजिगीषुः आत्मसमृद्धिद्वेषोः

येन प्रकारेण गूढपुरुषनिदेशनादिना परस्य प्रकृतं [illegible] सन्दध्यात् परेण प्रभुणा आत्मनि विदुष्यमाणं तं प्रकारं तत्कृतैः गूढपुरुषैः विद्यात् जानीयात् ज्ञात्वा प्रतिविदध्यादिति भावः । विदुष्यमाणमित्यत्र वियुज्यमानमिति मु॰ पाठः । १३ स॰ ३० श्लो॰ । २८ ।

इति कामन्दकीयनीतिसारटीकायां श्रीजगन्मोहनतर्कालङ्कारकृतायाम् उपाध्यायनिरपेक्षानुसारिण्यां हस्तलिखितपुस्तकानुसारेण दूतप्रचारविकल्पो नाम त्रयोदशः सर्गः ॥०॥

मुद्रितपुस्तकानुसारेण द्वादशः सर्गः समाप्तः ।

## त्रयोदशसर्गप्रारम्भः ।

अनन्तरोक्तदूतप्रचारचरविकल्पयोः सम्बन्धं दर्शयन् उत्साहप्रशंसा-प्रकृतिकर्म्म प्रकृतिव्यसनादि च दर्शयन्नाह—अन्वहमिति। अन्वहम् प्रतिदिनं चरचर्य्याभिः गूढपुरुषगत्यागमैः विपक्षे दूतचेष्टिते निर्णीते इति वाक्यशेषः, दूतचेष्टितवैफल्यस्य सन्देहाभावात् सूक्ष्मबुद्धिपुरःसरः सूक्ष्मा अतिदुर्लक्ष्या सर्व्वत्र अप्रतिहतप्रवेशा बुद्धिः पुरःसरा यस्य सः। यथोक्तयानः यथोक्तं यथाकथितं यथाविहितं यानं युद्धयात्रा यस्य तादृशो विजिगीषुः यायात् विजयार्थं यात्रां कुर्य्यात्। विपक्षे इत्यत्र विमर्शं, दूतचेष्टिते इत्यत्र दूतचेष्टितं, यथोक्तयान इत्यत्र यथोक्तलाभ इति मुद्रितपुस्तकपाठः। १४ स० १ श्लो० ॥ १ ॥

सूक्ष्माया बुद्धेः सामर्थ्यं दर्शयन्नाह। सूक्ष्मा इति। सत्त्वं नाम गुणः, येन व्यसने अभ्युदये च मनो न विकृतं भवति। प्रयत्नः व्यवसायः। ताभ्यां अधिष्ठिता व्याप्ता सूक्ष्मा दृढ़ा स्थिरा बुद्धिः अरणी शमीप्रभृति-काष्ठं हुताशनमिव श्रीमत् रमणीयं फलं प्रसूते। १४ स० २ श्लो० ॥ २ ॥

एतदेव स्फुटयति। धातोरिति। धातोः मृत्पाषाणादेः चामीकरं सुवर्णमिव, निर्मथनात् दधिविलोड़नात् घृतमिव, बुद्धिप्रयत्नोपगतात् अध्यवसायात् बुद्धिप्रयत्नोपष्टम्भितात् व्यवसायात् फलं ध्रुवं निश्चितं भवति। तस्मात् निश्चितफलार्थिना पुरुषेण मन्त्रशक्त्युपष्टम्भितोत्साह-शक्तिरवलम्बनीयेति भावः। १४ स० ३ श्लो० ॥ ३ ॥

धीमानिति। उत्साहसम्पन्नः प्रभुशक्त्या समन्वितो धीमान् उत्साह-शक्त्या प्रभुशक्त्या धीशक्त्या च समन्वितः युक्तो विजिगीषुः, महार्णवः अपामिव श्रियो लक्ष्म्याः परमं पात्रम् असाधारणः आश्रयः स्यात्। १४ स० ४ श्लो० ॥ ४ ॥

तदेव दर्शयन्नाह। नलिनीति। परिपाल्यत इष्यते उच्छेदात् इत्यर्थः। उत्थानाध्यवसायाभ्यां वातातपसमानाभ्यां सा नलिनीवत् श्रीः विस्तारम् उपनीयते नहि नलिनी वातातपवर्ज्जिते जलसन्निधावपि विस्तारमुपयाति। १४ स० ५ श्लो० ॥ ५ ॥

एतदेव पुनराचष्टे। लक्ष्मीरिति। बुद्धिरूर्द्धं बुद्ध्यनुसारेण प्रसर्पतः वृद्धिं गच्छतः उत्साहसम्पन्नात् लक्ष्मीर्नं अपैति। एकमन्यत्। उत्साहसम्पन्नात् इत्यत्र उत्साहसम्पन्नामिति पाठो न समीचीनः। १४ स० ६ श्लो० ॥ ६ ॥

वीत इति। वीतं विरहितं व्यसनं यस्य तम्, अश्रान्तं सततोद्योगेऽपि यस्य श्रमो नास्ति तम्, अत एव महोत्साहं, महामतिं महती मतिः मननशक्तिर्यस्य तं, तादृशं विजिगीषुम् आपगाः सरित्पतिमिव सदा सम्पदः प्रविशन्ति। १४ स० ७ श्लो० ॥ ७ ॥

उत्साहप्रशंसामभिधाय प्रशान्तिकर्म्म प्रशान्तियत्नानि च अभिधत्ते। सत्त्ववुद्ध्युपपन्नोऽपीति। सत्त्वगुणसम्पन्नः बुद्धियुक्तोऽपि यदि व्यसनासक्तमानसः अलसश्च उत्साहशक्तिविहीन इत्यर्थः, स्यात् तदा स्त्रीभिः षण्ढ इव श्रीभिः परिभूयते। १४ स० ८ श्लो० ॥ ८ ॥

उत्साहप्रशंसामाह। उत्थानेनेति। उत्थानयोगेन, सत्त्वं व्यसने अभ्युदये च यत् अविकारि तत्, एधयेत् वृद्धिं नयेत्। इन्धनेन काष्ठादिना पावकम् अग्निमिव। हि यतः सततोत्थायी सदैवोद्युक्तः दुर्बलोऽपि श्रियं समश्नुते प्राप्नोति। १४ स० ९ श्लो० ॥ ९ ॥

एतदेव समर्थयन्नाह। भोक्तुमिति। दुष्टस्त्रियमिव अविनीतां योषितमिव श्रियं भोक्तुं पुरुषकारेण सदैव व्यवसायम् उद्योगम् इच्छेत्, नहि क्लीववत् षण्ढवत् आचरेत् ॥ १४ स० १० श्लो० ॥ १० ॥

वप्र इति। सदोत्साही सदोद्युक्तः, सैंही सिंहसम्बन्धिनीं वृत्तिम् उपाश्रितः सन् श्रियं लक्ष्मीं, दुर्विनीतां दुर्वृत्तां स्त्रियमिव कचग्रहेण

केशग्रहणेन वशे कुर्व्वीत स्वायत्तां कुर्य्यात्॥ १४ स० ११ श्लो०॥ ॥ ११ ॥

भूयोऽप्युत्साहप्रशंसामेवाह। किरीट इति। किरीटमणिभिः चित्रेषु रञ्जितेषु चामरादिषु रत्नार्थं शिरस्त्राणजातेषु विहिता श्रभूणां मूर्द्धसु पादम् अदत्त्वा न निधाय पुरुषः भद्रं कल्याणं न अश्नुते न प्राप्नोति। १४ स० १२ श्लो० ॥ १२ ॥

एतदेव समर्थयन्नाह। प्रयत्न इति। प्रयत्नप्रेर्य्येणाग्रेण व्यवसाय-प्रेरितेन महता चित्तहस्तिना रूढवैरिद्रुमोत्खातं रूढो बद्धमूलो यो वैरिरूपो द्रुमः तस्य उत्खातम् उन्मूलनम् अकृत्वा सुखं कुतः? अनुन्मूलिते शत्रुद्रुमे जगति सुखं नास्ति इति भावः। १४ स० १३ श्लो० ॥ १३ ॥

हेला इति। तया हेलया निराकुलत्वेन व्यापारः, अत एव स्फुरन्ती उज्ज्वला कान्तिर्यस्य तादृशो यः खड्गः तस्य अंशुभिः किरणैः परि-पिञ्जरैः रञ्जितैः श्रीमतां शोभमानानां करिकराणां हस्तिशुण्डानाम् आकार इव आकारो येषां तैर्भुजैः श्रियो विभूतयः आक्रीयन्त आक्रियन्ते। १४ स० १४ श्लो० ॥ १४ ॥

उच्चैरिति। महान् महापुरुषः उच्चैः पदम् इच्छन् उच्चैस्तरां पदानि आयच्छते निक्षिपति, अयुक्तरं पर्व्वतशिखरमारोढ़ुमिच्छुः अयुक्तरपदविन्यासात् अभिमतस्थानं प्राप्नोति नान्यथा इति भावः। निपातभयशङ्कया नीचैः नीचैस्तरां यानि पदानि आयच्छते इत्यर्थः। १४ स० १५ श्लो० ॥ १५ ॥

एतदेव समर्थयन्नाह। प्रमाण इति। केशरी यथा करिणः शिरसि पदं धत्ते तथा महत्सत्त्वं महाबलम् अधिष्ठितः आश्रितो जनः प्रमाणाभ्यधिकस्यापि बृहत्परिमाणस्यापि जनस्य शिरसि पदं धत्त। शेषार्द्धे पदन्तु धत्ते शिरसि केशरी मत्तदन्तिनः इति पुस्तकान्तरस्य पाठः। १४ स० १६ श्लो० ॥ १६ ॥

यद्यप्युत्साहप्रशंसा परैरेवमभिधीयते तथापि परपक्षावलविमर्श-पूर्व्वकं विचेष्टितव्यमिति दर्शयन्नाह। गतभीरिति। गतभीर्निर्भयो भूत्वा भोगीव सर्प इव भीतिजननं भयजनकं भोगं शरीरम् आटोपञ्च दर्शयेत्। यथावलं बलवानपेक्षया रिपौ दण्डनिपातनं कुर्य्यात्। १४ स० १७ श्लो०॥१७॥

प्रकृतीनां कर्म्माणि चाभिधातुं प्रस्तौति। प्रकृतिव्यसनम् इति। यस्मात् कोपात् स्वाम्यादिप्रकृतीनां व्यसनं भवतीति शेषः। तत् प्रयत्नात् निवार्य्य समुत्पतेत् यात्राद्योगं कुर्य्यात्। व्यसनञ्च कुतो भवतीत्याह, अनयापनयाभ्याम् अयः शुभावहो विधिः, तस्य अभावः अनयः, अपनयः दुर्नीतिः,ताभ्यां दैवतोऽपि अदृष्टवशादपि जायते उत्पद्यते। १४ स० १८ श्लो०॥१८॥

व्यसनशब्दं व्याख्यातुमाह। यस्मादिति। यस्माद्धेतोः श्रेयः परमाभ्युदयं व्यस्यति निरस्यति दूरं क्षिपति इत्यर्थः, तस्मात् तत् व्यसनम् उच्यते नीतिविद्भिरिति शेषः। व्यसनी पुरुषः अधोधः श्रेयसः पतित्वा अधोऽधो व्रजति, तस्मात् तद्व्यसनं परिवर्ज्जयेत् यथासाध्यं परिहरेदित्यर्थः। व्यस्यतीत्यत्र व्यसति इति मुद्रितपुस्तकस्य पाठः। १४ स० १९ श्लो०॥१९॥

दैवकृतव्यसनभेदानाह। हुताशन इति। हुताशनो वह्निः, स हि ग्रामनगरादिकं दहति। जलं सलिलं, तद्धि ग्रामादिकं स्रावयति। तृतीयो व्याधिः, शारीरिकपीड़ा। चतुर्थो दुर्भिक्षः अतिवृष्ट्यादिना अन्नाभावः। मरकः सांक्रामिकपीड़ादिना बहुप्राणिसंहारहेतुः। इत्येवं पञ्चविधं दैवं दैवकृतव्यसनं,परम् अवशिष्टं प्रत्यासन्नभूपादिकृतं व्यसनं मानुषमित्युच्यते। १४ स० २० श्लो०॥२०॥

दैवमिति। दैवं पञ्चविधमपि हुताशनादिनिमित्तं व्यसनं पुरुषकारेण हुताशनादीनां जलादिभिः उपशमनलक्षण-पुरुषकारेण शान्त्या च अथर्व्ववेदोक्तया प्रशमं नयेत्। कार्य्यतत्त्ववित् नीतिकुशला

विजिगीषुः उत्थायित्वेन उत्साहप्रभवा नीत्या च नयेन च मानुषं व्यसनं प्रशमं नयेत्, पूर्व्वेणान्वयः। १४ स० २१ श्लो० ॥ २१ ॥

स्वाम्यमात्यादि-प्रकृतिसप्तकस्य चतुर्द्धेयानि व्यसनानि च आह। स्वाम्यादीति। स्पष्टम्। १४ स० २२ श्लो० ॥ २२ ॥

बहुवक्तव्यत्वात् स्वामिकर्म्म तद्व्यसनञ्च पश्चात् वक्ष्यति, सूचीकटाहन्यायेन अमात्यकर्म्म तद्व्यसनञ्चाह। मन्त्र इति। अमात्यस्य मन्त्रः पञ्चाङ्गः। अलब्धलाभादिकस्य सूचनावधि प्रयोगपर्य्यन्तं कर्म्म मन्त्रशब्देन गृह्यते। मन्त्रफलावाप्तिः पृथिवीलाभपालनादिरूपा। कार्य्यानुष्ठानम् एतदेव कार्य्यं क्रियतामित्येवं प्रेरणम्। आयतिः आगामिनि काले यद् भविष्यति तस्य शुभाशुभफलनिरूपणम्। आयः धनागमनिरूपणम्। व्ययः यथायोग्यस्थाने धनवितरणम्। दण्डनीतिः अपराधिनो दण्डार्हस्य यथाशास्त्रमर्थदण्डादिसाधनम्। अमित्रप्रतिषेधनं नीतिबलेन शत्रुदमनम्। १४ स० २३ श्लो० ॥ २३ ॥

व्यसनस्य इति। व्यसनस्य दुःखमूलस्य दुर्भिक्षादेः प्रतीकारः निवारणम्। राजराज्याभिरक्षणं, बुद्धिबलेन राज्ञो राज्यस्य च अभिरक्षणं परिपालनं तयोरनिष्टापातनिवारणमिति भावः। इति अमात्यस्य कर्म्म। स मन्त्री व्यसनेन वक्ष्यमाणलक्षणेन अन्वितः इदं सर्व्वं हन्ति। व्यसनिनो मन्त्रिणः कर्त्तव्यं कर्म्म किमपि न सिध्यतीति, भावः। राजराज्याभिरक्षणमित्यत्र राजराज्याभिषेचनमिति मु० पाठः। १४ स० २४ श्लो० ॥ २४ ॥

अमात्यव्यसनं स्वामिन एव व्यसनं भवतीति निदर्शयन्नाह। अमात्य इति। अमात्ये मन्त्रिणि व्यसनोपेते धूर्त्तैररिभिः क्रियमाणे परिगृह्यमाणेऽपि च। महीपतिः छिन्नपक्षः अपतत्रः पक्षीव उत्पतितुम् अभिसन्धानादिप्रतीकारं कर्त्तुम् अशक्त एव असमर्थ एव। प्रथमार्द्धे अमात्ये व्यसनोपेते क्रियमाणे इत्यत्र अमात्यैर्व्यसनोपेतैः क्रियमाणो महीपतिरिति मुद्रितपाठः। अत्र च अमात्ये व्यसनोपेते शक्तियुक्तो

महीपतिरिति पाठान्तरम् । अशक्त एवोत्पतितुम् इत्यत्र अशक्त एवोत्पतति इति मुद्रितपाठः। १४ स॰ २५ श्लो॰ ॥ २५ ॥

राष्ट्रकर्म्म राष्ट्रव्यसनं चाह । हिरण्य इति । सुवर्णधान्यवसनवाहनप्रभृतिद्रव्याणि प्रजाभ्यः सम्भवन्ति इत्यर्थः। १४ स॰ २६ श्लो॰॥ ॥ २६ ॥

एतदेव स्पष्टयन्नाह । वार्त्ताम् इति । प्रजा वार्त्तां कृषिवाणिज्यपाशुपाल्यलक्षणां साधयति सम्पादयति । तथाहि वार्त्ता लोकसंश्रयः लोकनिष्ठा, नानालोकेषु वर्त्तते इत्यर्थः । प्रजायां ब्राह्मणादिवर्णेषु व्यसनस्थायां विपन्नायां सत्यां किञ्चिदपि न सिध्यति, सर्व्वेषां वार्त्तामूलकत्वात् इत्यर्थः । १४ स॰ २७ श्लो॰ ॥ २७ ॥

दुर्गस्य कार्य्यं व्यसनञ्चाह । प्रजानामिति । आपदि विपक्षकृतनगराद्यवरोधकाले प्रजानां स्थानम् आत्मरक्षार्थमाश्रयः । तथैव कोषदण्डयोः कारुक-धनागाररक्षायाः दण्डरक्षायाश्च साधनम् । पौराश्च संश्रयाय आपदि आश्रयनिमित्तं दुर्गिणां दुर्गपतीनां राज्ञाम् उपकुर्व्वन्ति धनप्रदानादिनेति शेषः । १४ स॰ २८ श्लो॰ ॥ २८ ॥

तूष्णीमिति । दुर्गे स्थित्वा परैरविज्ञातो यत् सहसा परितः पतित्वा युद्धं तत् तूष्णींयुद्धम् । जनत्राणं जनानामापन्नानां त्राणं परिरक्षणम् । मित्रामित्रपरिग्रहः मित्रामित्रयोरर्थयतयोः परिग्रहः ग्रहणम् । एतच्च दुर्गबलादेव भवति । सामन्तानां संसक्तानाम् आटविकानाञ्च या बाधा आक्रमणादिकं तस्याः निरोधः निवारणम् । एतत् सर्व्वं दुर्गेणैव विधीयते । अतः दुर्गम् उच्यते, दुःखेन गम्यत्वादिति भावः । १४ स॰ २९ श्लो॰ ॥ २९ ॥

स्वपक्षैरिति । दुर्गस्थो दुर्गाधिकारी नृपो राजा स्वपक्षैः परपक्षैश्च पूज्यते, दुर्गबलेन निग्रहानुग्रहक्षमत्वादिति भावः । दुर्गव्यसनात् दुर्गसंस्काराद्यभावात् एतत् सर्व्वमेव न विद्यते, एतेषां सर्व्वेषामभावो भवतीति भावः । १४ स॰ ३० श्लो॰ ॥ ३० ॥

कोषप्रकृतेः कर्म्मव्यसने चाह। रत्नानामिति। रत्नानां चतुरङ्ग-बलादीनां भरणं भृतिः। दानं सेवाधिकं नियमाधिकञ्च। भूषण-मलङ्करणम्। वाहनक्रयः वाहनानां हस्त्यश्वादीनां क्रयः मूल्येन ग्रहणम्। स्थैर्य्यं कोषबलात् दृढ़त्वम्। परोपजापश्च परेषां शत्रुबलानाम् उपजापः भेदनम्। दुर्गसंस्कार एव च। एतत् सर्व्वमेव कोषव्यय-साध्यम्। १४ स० ३१ श्लो० । ३१ ।

सेतुबन्ध इति। सेतुबन्धः धान्यादीनां शस्यानामुत्पत्तये आलिबन्धनं, नद्योपारे गमनागमनाय च सेतुनिर्म्माणम्। वणिक्कर्म्म वाणिज्यं कोषमूलमेव। प्रजामित्रपरिग्रहः क्षीणाक्षीणप्रजा मित्राणि च कोषेणैव परिगृह्यन्ते। धर्म्मार्थकामानां सिद्धिश्च त्रिवर्गनिष्पत्तिश्च एवं सर्व्वं कोषादेव प्रवर्त्तते। १४ स० ३२ श्लो० । ३२ ।

कोषमूल इति। राजा हि कोषमूलः; कोषाभावे न राजत्व-निष्पत्तिः इत्यर्थः। इति प्रवादः जनश्रुतिः सार्व्वलौकिकः सर्व्वलोक-प्रसिद्धः। कोषव्यसनवान् नृपतिरेतत् सर्व्वं पूर्व्वोक्तसमुदायं जहाति। कोषाभावे सेतुबन्धवणिक्कर्म्मादिकं किमपि न सिध्यति इति भावः। १४ स० ३३ श्लो० । ३३ ।

क्षीणमिति। कोषवान् प्रभूतधनसम्पन्नः पृथिवीपालः क्षीणं संग्रा-मादिना क्षयक्षीयमाणं बलं वर्द्धयति। सतश्च प्रजाः क्षीणाक्षीणा गृह्णाति। परैरपि शत्रुभिरपि उपजीव्यते। धनलोभेन शत्रवोऽपि तस्य कार्य्यं साधयन्तीत्यर्थः। १४ स० ३४ श्लो० । ३४ ।

दण्डकर्म्मव्यसने चाभिधातुमाह। मित्रामित्र-इति। मित्राणि बान्धवाः, अमित्राः शत्रवः, हिरण्यानि च तेषां भूमीनाञ्च अधिकृत-प्रदेशानाञ्च प्रसारणं परिवर्द्धनम्। दूरकार्य्येषु व्यवहितकर्म्मसु आशु-कारित्वं क्षिप्रकारिता, कलत्रस्य राज्यादिकस्य परिपालनम् एतत्सर्व्वं दण्डसाध्यमेव इत्यर्थः। १४ स० ३५ श्लो० । ३५ ।

परेति। परचक्राभिघातश्च परचक्राणां शत्रुसम्बन्धि-चतुरङ्ग-

बलानाम् अभिघातः विनाशः । स्वदण्डस्य परेण परिपीड्यमानस्येत्यर्थः । परिग्रहो रक्षणम् । दण्डात् एतत् सर्व्वं प्रकर्षेण भवति, तद्व्यसने च क्षयं याति । १४ स० ३६ श्लो० ॥ ३६ ॥

ध्रुवं इति । ध्रुवं निश्चये दण्डवतो नृपतेः अरयः शत्रवोऽपि मित्रत्वं यान्ति, दण्डभयादिति भावः । श्लोकार्द्धं स्पष्टम् । १४ स० ३७ श्लो० ॥ ३७ ॥

संस्तम्भयतीति । मित्राणि विक्रमवत्त्वात् विचलन्ति संस्तम्भयति । अमित्राम् विजिगीषून् नाशयत्यपि । मित्रमिति चार्द्धपदम् उह्यम् । भूकोषदण्डैः प्राणैश्चापि उपकारितां व्रजति भूमिधनदानादिना प्राणव्ययेनापि च उपकारं करोतीति भावः । अमित्राम् इत्यत्र अमित्रम् इति उपकारितामित्यत्र उपकारिणे इति च क्वचित् पाठः । १४ स० ३८ श्लो० ॥ ३८ ॥

तत इति । ततः स्नेहनिबन्धनं परस्परप्रीतिजनितं सवत्र मित्रं करोति साधयति । तस्मिन् मित्रे व्यसनम् आपन्ने सति मित्रकर्म्म मित्रसाध्यं कार्य्यं न विद्यते न सिध्यतीत्यर्थः । ततः करोतीत्यत्र तत्करोतीति पाठान्तरम् । १४ स० ३९ श्लो० ॥ ३९ ॥

उपकारादिति । उपकाराद्दते प्रत्युपकारं विनापि मित्रं श्रेयसि श्रेयस्करकार्य्ये तिष्ठति शुभं सम्पादयतीत्यर्थः । मित्रवान् राजा दुःसाध्यानपि अर्थान् विषयान् अनादरात् अनायासेन साधयति । १४ स० ४० श्लो० । ४० ।

स्वामिप्रकृतेः कर्म्माह । अन्वीक्षयमिति । इतिरक्तं सद्गीपतेरिति अष्टपञ्चाशत्तमश्लोकेनान्वयः । विद्यानां त्रयी-वार्त्ता-दण्डनीतिप्रभृतीनाम् अन्वीक्षणं समालोचनं; स्ववर्णाश्रमरक्षणं ब्राह्मणादिवर्णानां ब्रह्मचर्य्यप्रभृत्याश्रमाणाञ्च रक्षणं, युद्धशस्त्राणां विषस्पर्शादिरहित-शरादीनां ग्रहणं; युद्धमार्गेऽपि शिक्षणं धर्म्मयुद्धस्य कूटयुद्धादेरपि अभ्यासः । अन्वीक्षयमित्यत्र अन्वीक्षणं इति, स्ववर्णाश्रमरक्षणमित्यत्र

सद्वर्णाश्रमरक्षणमिति, सद्धर्माश्रमरक्षणमिति च पाठान्तरम्। १४ स० ४१ श्लो० ॥ ४१ ॥

व्यायाम इति। व्यायामः परिश्रमाभ्यासः; शस्त्रविज्ञानं शस्त्राणां लक्षणादिकज्ञानं; कर्म्मणां लोहाकरपरिज्ञानादिकर्म्मणां कवचावरणादीनाञ्च लक्षणानि; गजाश्वरथपृष्ठेषु यथावत् यथारीति सम्यवर्त्तनम् उपवेशनमित्यर्थः। १४ स० ४२ श्लो० ॥ ४२ ॥

नियुद्धकौशलमिति। नियुद्धं मल्लयुद्धं तत्र कौशलं कुशलता; नियुद्धकुशलमिति मुद्रितपाठे स एवार्थः। मायया कौशलेन परेषां चित्ते हृदये प्रवेशनं सर्व्वेषां मनो विज्ञानमित्यर्थः। तथा चोक्तं,

यस्य यस्य हि यो भावः तेन तेन हि तं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥

इति। शाठ्ययुक्तिषु शठेषु धूर्त्तता। तथा चोक्तं,

शठे शाठ्यं समाचरेत्। इति;

सत्सु साधुषु सद्व्रतदर्शनं साधुव्यवहारप्रकाशः। तथा चोक्तं,

सारल्यं सरले कुर्य्यात्। इति;

सद्व्रतदर्शनमित्यत्र सद्वृत्तदर्शनमिति समीचीनः पाठः। १४ स० ४३ श्लो० ॥ ४३ ॥

मन्त्रोद्योग इति। मन्त्रोद्योगः। मन्त्रिभिः सह मन्त्रस्य आरम्भः। अनुमन्त्रत्वं मन्त्रिभिः सह कृते मन्त्रे पश्चादपि मन्त्रणं, तस्य मन्त्रस्य रक्षा रक्षणं, सामर्थ्यं सत्यचित्तता;• सामदानस्य उपेक्षा तस्मिन् उपेक्षाप्रदर्शनमित्यर्थः। भेदः शत्रूणां परस्परमनोभङ्गसाधनम्। दण्डस्य साधनं दण्डनानां दण्डकरणमित्यर्थः। १४ स० ४४ श्लो० ॥ ४४ ॥

प्रशास्तृ इति। प्रशास्ता सैन्यप्रसाधकः, अध्यक्षः उक्तव्यतिरिक्तसेनानीः, सेनानाथ, मन्त्री मन्त्रसहायः, अमात्यः मन्त्रस्य तत्कार्य्यस्य च सहायः, पुरोधाः पुरोहितः, तेषाञ्च सर्व्वेषां सम्यक् प्रचारविज्ञानं तेषां

मध्ये कः स्वामिहितकारी को वा तद्विपरीत इत्यस्य सम्यक् विज्ञानम्। दुष्टानामहितकारिणाम् अध्यक्षाणाम् अपरोपणं स्वनियोगात् अपनयनम्। अपरोपणमित्यत्र अवरोधनमिति मुद्रितपाठे कारागारे अवरोध इत्यर्थः। १४ स० ४५ श्लो० ॥ ४५ ॥

गतागतपरिज्ञानमिति। यः कार्य्यात् अकार्य्यात् वा गत आगतश्च तस्य परिज्ञानं दूतसम्प्रेषणानि च। प्रकृतीनाम् अमात्यादीनां यत् व्यसनं अस्यति क्षिपति यत् तत् व्यसनं तस्य अपोहः निराकरणम्। क्रुद्धानां कुपितानां क्रोधप्रशमनानि च। १४ स० ४६ श्लो० ॥ ४६ ॥

गुरूणामिति। गुरूणाम् उपाध्यायादीनाम् अनुवृत्तिः अनुकूलप्रवर्त्तनम्। पूज्यानाम् इष्टदेवतादीनाम् अभिपूजनम्। धर्म्मासनप्रतिष्ठानं विवादपदविचारार्थं धर्म्मासने प्रतिष्ठानं आस्थाने उपवेशनम्। राज्यस्य ये कण्टकाः दुष्टात्मानः चौरपारदारिकादयः तेषां शोधनम् अर्थदण्डेन वधदण्डेन वा दमनम्। पूज्यानां चाभिपूजनमित्यत्र पूज्यानां चापि पूजनमिति पाठान्तरम्। १४ स० ४७ श्लो० ॥ ४७ ॥

भूताभूतपरिज्ञानमिति। सर्व्वेषाम् अनुजीवनमित्यत्र सर्व्वेषामनुजीविनामिति समीचीनः पाठः। अर्थस्तु सुगमः। १४ स० ४८ श्लो० ॥ ४८ ॥

मध्योदासीनेति। मध्यानां मध्यवर्त्तिभूपानाम् उदासीनानां निरपेक्षभूपानां चरितस्य व्यवहारस्य ज्ञानं परिज्ञानम्। तत्सिद्धिपालनं तेन मध्योदासीनचरितज्ञानेन या सिद्धिः कार्य्यसिद्धिः तस्याः पालनं साधनं दृढ़स्थापनं वा। तत्सिद्धिसाधनमिति पाठे मध्योदासीनभूपतिभिः सन्धिरक्षणम् इत्यर्थः। मित्राणां परिग्रहः संग्रहः। १४ स० ४९ श्लो० ॥ ४९ ॥

पुत्रदारेति। पुत्रदारादिभिः सह गुप्तिः आत्मरक्षणम्। स्वद्धिरूपः आत्मानुरूपः पवनः आदौ मूले यासां तासां स्वद्धीनां निजधनागमानां प्रवर्त्तनम्। स्वद्धिपवनादीनाम् इत्यत्र खनिदीपवना-

दीनाम् इति पाठे खनिद्दीपवनादिषु अर्थागमस्य उपायनिर्द्धारणम् इति भावः। १४ स० ५० श्लो० ॥ ५० ॥

असतामिति। असतां दुर्वृत्तानां परिक्लेशः दण्डदानादिना क्लेशप्रदानम्। परिक्लेश इत्यत्र परित्याग इति पाठे परित्याग इत्यर्थः। सतां साधूनां परिग्रहणं परिरक्षणम्। अहिंसा सर्व्वभूतानामधर्म्माणाञ्च वर्ज्जनम् इत्यत्र अभूतानाञ्च हिंसानामधर्म्माणाञ्च वर्ज्जनमिति पाठे अभूतानां शास्त्रनिषिद्धानां हिंसानाञ्च अधर्म्माणाञ्च परिहार इत्यर्थः। १४ स० ५१ श्लो० ॥ ५१ ॥

अकार्य्येति। अदेयानां कुलधनादीनां राजचिह्नानां वा। १४ स० ५२ श्लो० ॥ ५२ ॥

अदण्डनमिति। अदण्ड्यानां निर्द्दोषाणां देवद्विजादीनाम् अदण्डनं दण्डेन धनादीनामग्रहणम्। अयाह्यानां देवद्विजभूम्यादिषु करादीनाम् अग्रहणम् अनादानम्। १४ स० ५३ श्लो० ॥ ५३ ॥

अर्थयुक्तस्येति। अर्थयुक्तस्य त्रिवर्गोपेतस्य। अनर्थस्य फलविवर्ज्जितस्य। न्यायानुसारेण करग्रहणम्, अथवा प्रतिमोक्षणं शस्याभावादिदर्शनेन प्रजावात्सल्यात् स्वयं करादीनामग्रहणम्। १४ स० ५४ श्लो० ॥ ५४ ॥

संवर्द्धनमिति। प्रधानानां प्रधानराजपुरुषाणां संवर्द्धनं पालनम्। समर्थनमिति पाठे समर्थकरणं परीक्षणमिति वार्थः। निरस्तानां प्रच्युतिर्योग्यानामपराधिनां च निर्वृतिः निर्द्धारणम्। दैवभ्याणां दैवमानुषक्षतानां व्याधिदुर्भिक्षमरकावरोधप्रभृतीनां प्रशमनं निवारणम्। भृत्यानां परस्परसख्यसंस्थापनं च। १४ स० ५५ श्लो० ॥ ५५ ॥

अविज्ञातस्य इति। श्लोकद्वयं स्पष्टम्। १४ स० ५७ श्लो० ॥ ५७ ॥

अधर्मोति। एतत् सर्व्वं महीपतेः राज्ञः वृत्तम् अवश्यमवलम्बनीयम्। उपकार्य्युपकारित्वं वृत्तमेतन्महीपतेरित्यत्र उपकार्य्यापकारित्वमिति वृत्तं महीपतेरिति मुद्रितपाठः। १४ स० ५८ श्लो० ॥ ५८ ॥

एतदिति। नयपुरःसरो नीतिमार्गानुसारी, उद्युक्तः उद्योगशीलः एषो राजा, एतत् पूर्व्वोक्तं सर्व्वम् अमात्यादि राज्यं च उन्नतिं नयति। तु किन्तु व्यसनी अनन्तरोक्तवाक्पारुष्य-दण्डपारुष्यार्थदूषण-पान-स्त्री-मृगया-द्यूतरूप-व्यसनवान् राजा क्षयमेव नयति। १४ स० ५९ श्लो०॥५९॥

तस्मिन्निति। तस्मिन् राजनि धर्म्मोपार्ज्जनार्थोपार्ज्जनयोर्यये। तथाच व्यसनचेतसि रोगादिना विकृतचित्ते सति मन्त्री एतत् सर्व्वम् अशेषेण साकल्येन सन्धातुं सम्पादयितुम् अर्हति। सन्धातुम् इत्यत्र सन्नेतुम् इति पाठान्तरम्। १४ स० ६० श्लो०॥६०॥

एवं प्रकृतिसप्तकस्य प्रत्येकं कर्म्म प्रतिपादितमिदानीं व्यसनं प्रतिपाद्यते, वाग्दण्डयोरिति। वाक्पारुष्यं वचनैः परदुःखोत्पादनम्। दण्डपारुष्यं तीक्ष्णदण्डता। अर्थदूषणम् अर्थानाम् अदानमादानं नाशः त्यागश्च। तथाच कौटिल्यः, अदानं पूर्व्वकृतस्य पुनरस्य यददानं तेन पूर्व्वदत्तोऽप्यर्थो विनष्टो भवति। आदानं दत्तस्य पुनराच्छेदनमपि तथैवानर्थाय भवति। नाशोऽपि चौरादिभिरपहारः। त्यागः उपनतस्यार्थस्य परित्यागः, इत्येव दूषणमुच्यते। पानं सुरासक्तिः, स्त्री रमणीष्वासक्तिः, मृगया मृगमारणासक्तिः, द्यूतम् अक्षक्रीड़ादि, व्यसनानि। महीपतेरित्युपलक्षणं सामान्यजनस्यापीति बोध्यम्। व्यसनानि महीपतेरित्यत्र व्यसनं पृथिवीपतेरिति पुस्तकान्तरस्य पाठः। १४ स० ६१ श्लो०॥६१॥

तथा मन्वादिकथितान्यपि व्यसनानि अभिधत्ते, आलस्यमिति। आलस्यं दीर्घसूत्रता, निरुद्यमो वा। स्तब्धता गुरुषु प्रश्रयः, जड़ता वा। दर्पः शौर्य्याद्यहङ्कारः। प्रमादः अनवधानता अवशेन्द्रियता वा। वैरकारिता वैरकारणं विनापि बहुभिः सह वैरकरणम्। इति इत्येतदालस्यादि पूर्व्वोपदिष्टं च वाक्पारुष्यादि सप्तसङ्ख्यं यथा महीपतेस्तथा सचिवस्यापि व्यसनम्। पूर्व्वोपदिष्टं च इत्यत्र पूर्व्वोपदिष्टं हि इति पाठान्तरम्। १४ स० ६२ श्लो०॥६२॥

राष्ट्रव्यसनमाह। अतिकरैरिति। असत्कारः असदुपायेन कर-संग्रहः। यथा करसंग्राहकेण प्रदेशपतिना प्रथमं करे संगृहीतेऽपि तत्प्रतारणया अप्राप्तकरेण भूपालेन पुनरपि करसंग्रहार्थं प्रजानां शस्यादिनिर्लुण्ठनम्। दण्डः विद्रोहिशङ्कया प्रजानां धनधान्यादिक-स्यात्मसात्करणम्। परचक्राणि विपक्षभूपालादिकृताक्रमणावरोध-विलुण्ठनादिकम्। तस्कराः आटविकादयः। शेषः सुगमः। १४ स० ६३ श्लो० ॥ ६३॥

राजानीकेति। राजानीकप्रियोत्सर्गः राजानीकानां राजवल्लभानाञ्च उत्सर्गः राज्यपरित्यागः। एतत्सर्व्वं राष्ट्रव्यसनमुच्यते। १४ स० ६४ श्लो० ॥ ६४॥

दुर्गव्यसनमाह, विशीर्णेति। दुर्गस्थितानां यन्त्राणां प्राकाराणां परिखाणाञ्च विशीर्णत्वं, जीर्णता इति भावः। अशस्त्रता धनुःशर-खड्गचक्रतोमरपरशुगदाप्रभृति-शस्त्रहीनता। यवसानां पशूनामा-हारीयद्रव्यविशेषाणाम् इन्धनानाम् अन्नानाञ्च चीणता स्वल्पता। एतत्सर्व्वं दुर्गव्यसनम् उच्यते। क्षीणघासेन्धनान्नत्वम् इत्यत्र क्षीणवासेन्ध-नान्नत्वम् इति मुद्रितः पाठः। १४ स० ६५ श्लो० ॥ ६५॥

कोषव्यसनमाह, व्ययीकृत इति। व्ययीकृतः भृत्यादिभ्यो दत्तः। परिक्षिप्तः बहुधा विक्षिप्तः। भक्षितः रक्षकादिभिरिति शेषः। असं-चितः न संगृहीतः। मुषितः चौरादिभिरपहृतः। दूरसंस्थः व्यव-हितः। एतत्सर्व्वं कोषव्यसनम् उच्यते। १४ स० ६६ श्लो० ॥ ६६॥

सम्प्रति बलव्यसनमाह, उपरुद्धम् इति। उपरुद्धं शत्रुसैन्येन कृतोपरोधमित्यर्थः। परिक्षिप्तं परि समन्तात् वेष्टितं विशृङ्खलतया नानाप्रदेशे विकीर्णं वा। विमानितं विगतमानम् अपमानितम् इत्यर्थः। अमानितम् असम्मानितम्। अमतम् अनिष्टम् अप्रियमित्यर्थः। स्पष्ट-मन्यत्। अमतम् इत्यत्र अभृतम् इत्यपि पाठः। अभृतम् अप्रदत्तवे-तनम्। १४ स० ६७ श्लो० ॥ ६७॥

परिक्षीणेति। परिक्षीणमयरहितं परिक्षीणं हतभूयिष्ठम्, नय-रहितं हतमुख्यप्रवीरम् अधिनायकहीनमित्यर्थः। अग्रे जवः वेगो यस्य सः अग्रजवः संग्रामे अग्रवर्त्ती। प्रहतः अग्रजवः अग्रवर्त्ती वीरो यस्य तत्। आशानिर्व्वेदभूयिष्ठम् आशया निर्व्वेदेन च भूयिष्ठम्। बलवत्या आशया बलवता निर्व्वेदेन च अनायत्तचित्तमित्यर्थः। तत्त्वज्ञानापदीर्ष्यादेर्निर्व्वेदः स्वावमानना इति दर्पणम्। १४ स० ६८ श्लो० ॥ ६८ ॥

कलत्रगर्भमिति। कलत्रं कुलस्त्री गर्भे विद्यते यस्य तत्। विक्षिप्तम् अनेकराज्ये विकीर्णं सुदूरं प्रेषितं वा। अन्तःशल्यम् अन्तर्गतमित्र-शल्यम्। भिन्नगर्भम् अन्योन्यमेव निर्भिन्नम्। अपसृतं स्वराज्य एव मण्डलान्तरव्यवहितम्। अवियुक्तं कदापि न देशान्तरितम्। अवि-युक्तमित्यत्र अपसृष्टमिति पाठे युद्धे अग्निच्छितमित्यर्थः। परिम्लष्टम् इति पाठे युद्धभिन्ना-कुर्व्वन्तमित्यर्थः। १४ स० ६९ श्लो० ॥ ६९ ॥

क्रुद्धमौलेति। क्रुद्धमौलाविमिश्रम्, मौलं पितृपैतामहं सैन्यम्। क्रुद्धं मौलं यत्र तत्। अविमिश्रं विभिन्नमतम्। विविधं विश्लिष्टं प्रभुणा एकत्र स्थितम्। दूष्ययुक्तं दूष्येण विपक्षेण युक्तं मिलितम्। स्वविच्छिन्नं स्वविषये विच्छिन्नं छिन्नवत् वर्त्तमानम्। मित्रविच्छिन्नं मित्रकार्य्यार्थं छिन्नम्। १४ स० ७० श्लो० ॥ ७० ॥

विच्छिन्नवीवधासारमिति। वीवधो धान्यादेः प्राप्तिः। आसारः सुहृद्बलम्। विच्छिन्नौ भग्नौ वीवधासारौ यत्र तत्। विच्छिन्नविवि-धासारमिति पाठान्तरम्। शून्यमूलं शून्यं मूलं जनपदे धनकलत्रादि-रक्षास्थानं यस्य तत्। अस्वामिसङ्गतं स्वामिनोऽनुमतिं विना यत् सङ्गतम्। भिन्नकूटं भिन्नं पृथक् पृथक् कूटं लक्ष्यं यत्र तत्। १४ स० ७१ श्लो० ॥ ७१ ॥

दुष्पार्ष्णिग्रहमिति। दुष्पार्ष्णिग्रहं दुरभिसन्धियुक्तपार्ष्णिग्राहस-मेतम्। अन्धं दैशिकानभिज्ञम्। अन्धम् इत्यत्र अज्ञमित्यपि पाठः।

एतत् सर्व्वं बलव्यसनम् उच्यते। अत्र बलव्यसने किञ्चित् साध्यं प्रयत्नेनापनेतुं शक्यं, किञ्चित् असाध्यम्। एतद् द्वयं पश्चादुच्यते। १४ स० ७२ श्लो०। ७२॥

बलव्यसनेषु किं साध्यं किमसाध्यमित्याह, उपरुद्धमिति। उपरुद्धं शत्रुणा कृतावरोधं बलं निर्गत्य यदा अत्यन्तमूर्जितं बलवत् भवति तदा युध्येत। अपरुद्धमिति मुद्रितपाठः। परिक्षिप्तं परि समन्तात् वेष्टितम् अतएव निर्मार्गं न, युध्येत इति शेषः। १४ स० ७३ श्लो०॥ ७३॥

अमानितम् असम्मानितं बलं कृतमानार्थसंग्रहं सत्, कृतः मानार्थाभ्यां संग्रहो यस्य तत् युध्येत। साध्यमेतत्। विमानितं विगतमानम् अपमानितमित्यर्थः। अतएव प्रदीप्तक्रोधपावकं समुज्ज्वलकोपानलम् अतएव न युध्येत। अपमानात् प्रदीप्तकोपानलस्य कोपशान्तिरसाध्यैव। १४ स० ७४ श्लो०॥ ७४॥

युध्येतेति। अभृतम् अप्रदत्तवेतनं तदाप्ते कृतवेतनं तत्काले दत्तवेतनं युध्येत। साध्यमेतत्। व्याधितम् अकर्म्मण्यं न, युध्येत इति शेषः। यतः व्याधितं पीड़ितं परिभूयते पराभवमाप्नोति। असाध्यमेतत्। १४ स० ७५ श्लो०॥ ७५॥

परिश्रान्तमिति। परिश्रान्तं बलं सुविधानतः स्नानभोजनादिना, विश्रान्तं विगतश्रमं सत् युध्येत। साध्यमेतत्। दूरायातं दूरात् मित्रकार्य्यं समाप्य दूरदेशात् आयातम् अतएव हृतप्रायं निःसत्त्वं न प्रत्यग्रहयावरं न प्रत्यग्रहणे समर्थं भवति। असाध्यमेतत्। १४ स० ७६ श्लो०॥ ७६॥

नवागतम् इति। नवागतम् अभिनवागतं तद्देश्यैः तद्देशसम्भूतैर्बलैर्मिश्रं युध्येत। साध्यमेतत्। हतमुख्यप्रवीरं हता मुख्यप्रवीरा धुरन्धरा यस्य तत् अतएव परिक्षीणं न, युध्येत इति शेषः। हतमुख्यप्रवीरन्तु इत्यत्र हतमुख्यमवीरं तु इति मुद्रितपाठः। १४ स० ७७ श्लो०॥ ७७॥

युध्येतेति। प्रतिहतम् अन्यैर्वीरैर्भग्नं प्रवीरैः सह सङ्गतं मिलितं सत् युध्येत। साध्यमेतत्। हताग्रजं हतः अग्रजः श्रेष्ठो यस्य तत्। अतएव प्रमाथितपुरःसरम् प्रमाथितो ध्वस्तः पुरःसरः सेनानीर्यस्य तत्। अनासक्तं संग्रामपराङ्मुखम्। न युध्यते इति परश्लोकेनान्वयः। हताग्रजमनासक्तमित्यत्र हताग्रजं च नासक्तमिति पाठान्तरम्। १३ स० ७८ श्लो० ॥ ७८॥

आशेति। आशानिर्वेदलब्धार्थम् आशायां निर्वेदे च सिद्धप्रयोजनम् अतएव पूर्णाशं न युध्यते, युद्धप्रवृत्तिकारणाभावादिति भावः। निरुद्धे अवरुद्धे सति अभूयिष्ठप्रसारे अल्पपरिसरस्थाने भुवोऽल्पतया न युध्येत इति शेषः। आशानिर्वेदलब्धार्थं पूर्णाशं नात्र युध्यते इत्यत्र आशानिर्वेदि लब्धा तु युध्यते न तु युध्यते इति पाठान्तरम्। १४ स० ७९ श्लो० ॥ ७९॥

युध्येत इति। आदत्तसंप्राप्तं पूर्व्वमाहतं शत्रुसैन्येन कृतावरोधं पश्चात् संप्राप्तम् अपहृतं बलं यथार्हायुधवाहनं सत्कारेण सम्पादित-युद्ध-वाहनं सत् युध्येत। यथार्हायुधवाहनम् इत्यत्र अपूर्व्वायुधवाहन-मिति मुद्रितपाठः। कलत्रगर्भात् कलत्रं कुत्सितो गर्भो यस्य तस्मात् सैन्यसमूहात् उन्नीतकलत्रम् अपसारितकलत्रं बलं सङ्कटस्थं युद्ध-कार्य्ये समर्थं, भवतीति शेषः। १४ स० ८० श्लो० . ८०॥

अनेकेति। अनेकराज्यान्तरितं मित्रसाहाय्यार्थं प्रेषितम् अनेकैः राज्यैः अन्तरितं व्यवहितम् अतएव अतिक्षिप्तम् अतिदूरं प्रेषितं न युध्यते। अन्तःशल्यम् अन्तर्गतामित्रशल्यम् अन्तर्गतम् अमित्राणां शत्रूणां शल्यं यस्य तत् न क्षमं, युद्धकरणे न समर्थमित्यर्थः। १४ स० ८१ श्लो० ॥ ८१॥

अन्योन्यमिति। भिन्नगर्भं बलम् अन्योन्यमेव निर्भिन्नं परस्परं विरोधि, तत् न युध्यते। तथाच अपसृतं स्वाधिकारमध्ये माण्ड-लान्तरव्यवस्थितम्। तथा राज्यान्तरोत्कृतं भिन्नराज्ये प्रेरितम्।

व्ययर्थं श्रान्तत्वात् न युद्धक्षममिति भावः। १४ स० ८२ श्लो० ॥ ८२ ॥

अविमुक्तमिति। अवियुक्तं न देशान्तरगतम्। देशान्तरगमनाभावात् संग्रामदक्षताभावः। अपक्रान्तं पलायितं युधि योद्धुं न क्षमम्। परिसृष्टं त्वपक्रान्तमिति पाठे परिसृष्टम् अर्थादुपक्रान्तम् अशिक्षितमित्यर्थः। मौलं मूलतः स्थितं पितृपैतामहमित्यर्थः। मुक्तं तत् बलं सान्त्वितं सान्त्वनाप्राप्तं क्षमं योद्धुमिति शेषः। १४ स० ८३ श्लो० ॥ ८३ ॥

मिश्रं शत्रुभिरेकस्थं सदाक्रान्ततयाऽक्षमम्।
शत्रोरुपनिविष्टं यत् सामर्थ्यात्माक्षमं युधि ॥ ८४ ॥

मिश्रमिति। मिश्रम् अर्थात् शत्रुभिरेकस्थं शत्रुभिः आक्रान्ततया निरुद्धप्रसरं बलम् अक्षमम्। शत्रोः उपनिविष्टं शत्रुकर्तृक-समीकृत-शिविरनिवेशं बलं न सामर्थ्यात् सामर्थ्याभावात् युधि अक्षमम्। असाध्यमेतत्। १४ स० ८४ श्लो० ॥ ८४ ॥

दूष्ययुक्तं न युध्येत युध्येतोद्धृतकण्टकम्।
प्रधानयोधसंगुप्तं दूष्यञ्चापि समुत्पतेत् ॥ ८५ ॥

दूष्ययुक्तमिति। दूष्ययुक्तं बलं न युध्येत, तदेव उद्धृतकण्टकम् अपनीतदूष्यं युध्येत। पक्षान्तरमाह, प्रधानयोधसंगुप्तं वीरप्रधानेन संरक्षितं दूष्यं चापि बलं समुत्पतेत् युद्धार्थं संप्रेरयेत्। प्रधानयोधसंगुप्तं दूष्यं चापि समुत्पतेत् इत्यत्र प्रधानयोधसंयुक्तं दूष्ययुक्तं समुन्नयेत् इति मुद्रितः पाठः। १४ स० ८५ श्लो० ॥ ८५ ॥

स्वविच्छिन्नमिति। स्वविच्छिन्नम् अर्थात् आपदि आपत्काले स्वविषये आत्मकार्ये आच्छिन्नं सम्पूर्णमोत्सृष्टम्। एवं प्रकृष्टदेशकालत्वात् मित्रकार्यसाधनार्थम् उत्क्षिप्तम्, अयोजितं युद्धयोगाय न समर्थं भवति। स्वविषयाच्छिन्नमित्यत्र सविषयाच्छिन्नमिति मुद्रितः पाठः। १४ स० ८६ श्लो० ॥८६ ॥

धान्यादेरिति। वीवधः धान्यादेः प्राप्तिः। आदिपदात् वस्त्र-घृत-लवणादि सर्व्वं स्कन्धावारोपयोगि गृह्यते। बहुपुस्तकेषु, धान्यादेर्वीवधा प्राप्तिरिति पाठः। विवधो वीवधश्चापि पर्य्याहारे इति मेदिनी। आसारः सुहृद्बलम्। विच्छिन्नः वीवधः आसारश्च यस्य तत् सैन्यं युद्धाय न इष्यते, आहारप्रतिबलाभावादिति भावः। युद्धाय नेष्यते इत्यत्र युद्धाय नेष्यते इति च पाठः। १४ स० ८७ श्लो०॥ ८७॥

पितृपैतामहं मौलं तेन शून्यं न तत् क्षमम्।
हतजानपदारब्धं शून्यमूलं युधि क्षमम्।
अस्वामिसंहतञ्चैव स्वामिना यद्विना हतम्॥ ८८॥

पितृपैतामहमिति। मौलं पितृपैतामहं, तेन मौलेन शून्यं तत् बलं न क्षमं न युद्धे समर्थमित्यर्थः। शून्यमूलं कलत्रादिरक्षायागच्युतम् अपीति शेषः। हतजानपदारब्धं हता जानपदैः आरब्धा, कलत्रादीनामिति शेषः। यस्य तत् बलं युधि क्षमं संग्रामे समर्थम्। स्वामिना विना यत् हतं नियुक्तं तत् अस्वामिसंहतम्। तादृशं बलं न युध्येत इति परश्लोकेनान्वयः। प्रथमचरणद्वयं मुद्रितपुस्तके नास्ति। श्लोकाङ्कसामञ्जस्यरक्षणाय मया षड्भिश्चरणैरेकः श्लोको गृहीतः। हतजानपदारब्धमित्यत्र हतजानपदारब्धम् इति मुद्रितपुस्तकस्य पाठः। १४ स० ८८ श्लो०॥ ८८॥

न युध्येत इति। भिन्नकूटं भिन्नः कूटो दम्भो यस्य तत्। सर्वमेव स्वस्वप्रधानम् अतएव अनायकम्। तथाच पश्चात् कोपाभिसन्तप्तं रोगाभिभूतम्। दुष्पार्ष्णियाहं दुर्दुरभिसन्धियुक्तः पार्ष्णिग्राहो यस्य तादृशं बलम् अक्षमं संग्रामेऽयोग्यमित्यर्थः। १४ स० ८९ श्लो०॥ ८९॥

आदेशिकमिति। आदेशिकं दशाङ्गभिन्नं, तत् अन्धं स्मृतम्। तन्मूलत्वात् क्रियायां युद्धक्रियायाम् अक्षमम्। आदेशिकं स्मृतं ह्यन्धं तन्मूलत्वात् क्रियाक्षमम् इत्यत्र आदेशिकं स्मृतं युद्धं मूढत्वान्न क्रियाक्षमम् इति मुद्रितपाठः। उपसंहरन्नाह, बलव्यसनमित्यादि इति।

अत्र आदिपदात् अन्यान्यपि द्यूतस्त्रीपानादीनि आक्षिप्यन्ते। तत् समीक्ष्य तत् प्रतीकारानन्तरं पर्य्यवसानं समालोक्य पश्चात् युद्धार्थं समुत्पतेत् । १४ स० ६० श्लो० ॥ ६० ॥

मित्रव्यसनमाह, दैवोपपीड़ितमिति दैवान्युपपीड़नानि कथित-प्रकाराणि आधिमरकादीनि तैः समाक्रान्तम् । शत्रुबलेन ग्रस्तम् आक्रान्तम् । तथा संपरिकीर्त्तितैः कथितैः कामक्रोधसमुत्थैश्च दोषैः युक्तं मित्रं, व्यसनोपेतमिति शेषः । मृगयाद्याः स्त्रियः पानमिति कामजश्चतुर्वर्गः । वाक्पारुष्यं दण्डपारुष्यम् अर्थदूषणमिति क्रोधज-स्त्रिवर्गः । १४ स० ६१ श्लो० ॥ ६१ ॥

व्यसनतारतम्यमाह, नरेन्द्राद्या इति । मित्रव्यसनात् दण्डव्यसनं, ततोऽपि कोषव्यसनं, ततोऽपि दुर्गव्यसनं, ततोऽपि राष्ट्रव्यसनं, ततोऽपि अमात्यव्यसनम्, अमात्यव्यसनात् स्वामिव्यसनं गरीय इति तात्पर्य्यम् । १४ स० ६२ श्लो० ॥ ६२ ॥

इतीति । राजा इत्यादि वाग्दण्डयोश्च पारुष्यम् एतत्प्रभृति दुष्पार्ष्णिग्राहमन्तश्च बलव्यसनमुच्यते एतत्पर्य्यन्तं सर्व्वं प्राकृतं प्रकृतेः प्रस्तुतं व्यसनं यथावत् बुध्येत अनुसन्दध्यात् । तथाच प्रयत्नात् यत्नेन, बुद्ध्या ध्यानेन, प्रज्ञया सामर्थ्येन च व्यसनस्य पूर्व्वोल्लिखितस्य अकाल-हीनं न कालेन यथायोग्यसमयेन हीनं अपेतं, अपरोपयम् अपसारणं कुर्य्यात् ॥

बुध्येत राजा व्यसनं प्रयत्नात्
बुद्ध्या च प्रज्ञया व्यसनस्य कुर्य्यात् ।
अकालहीनं व्यपरोपणं सः
राजा प्रजारञ्जनतत्परो भवेत् ॥

इति पुस्तकान्तरस्य पाठः । १४ स० ६३ श्लो० ॥ ६३ ॥

कालात्यये हि व्यसनं आधिवदसाध्यं स्यादिति तदुपेक्षायां दोषं दर्शयन्नाह, प्रकृतिव्यसनानीति । इन्द्रियार्थेषु गीतवाद्यादिषु

प्रसक्तिरत्र प्रमादशब्देनाभिधीयते। दर्पः यौवयादिजनितोऽहङ्कारः, तस्मात् यो राजा प्रकृतिव्यसनानि उपेक्षते, रिपवः न चिरात् तं पराभवन्ति इति प्रतीतम्। १४ स० ८४ श्लो०॥ ८४॥

इदमिदमिति। इदं चेदं च कार्य्यं स्वविषये दुर्गादिकं परविषये सन्ध्यादिकं विचिन्त्य मन्त्रपूर्व्वकं निश्चित्य सम्यक् कर्म्मणा योजनीयम् अनुष्ठेयम्। तत्र ईहमानः चेष्टमानः राजा नियतं निश्चयेन प्रापयेत् समापयेत्। यस्य नृपतेः प्राकृतो वर्गः प्रकृतीनां स्वाम्यमात्यादीनां वर्गः समूहः समर्पितच्छिद्रम्ध्रः सुनयेन शास्त्रोपदिष्टरीत्या पिहितं रन्ध्रं छिद्ररूपव्यसनं यस्य तथा स क्षितिपतिः चिराय त्रिवर्गं धर्म्मार्थ-कामरूपम् उपभुङ्क्ते। १४ स० ८५ श्लो०। ८५।

इति कामन्दकीयनीतिसारटीकायां श्रीशम्भोश्चन्द्रतर्कालङ्कार-कृतायाम् उपाध्यायनिरपेक्षानुसारिण्यां हस्तलिखितपुस्तकानुसारेण प्रकृतिकर्म्मव्यसनादिनिरूपणं नाम चतुर्दशः सर्गः॥०॥

मुद्रितपुस्तकानुसारेण त्रयोदशः सर्गः॥

## चतुर्दशसर्गप्रारम्भः ।

राज-राज्य-व्यसनयोः स्वरूपं तारतम्यञ्चाह, अमात्याद्या इति। अमात्यः आद्यो यासां ताः षड़पि विपाका राज्यम् उच्यते। स्पष्टमन्यत्। १५ स० १ श्लो० ॥ १ ॥

राजेति। व्यसनी राजा राज्यव्यसनापोहनक्षमः षड़ङ्गराज्यव्यसनस्य निराकरणे समर्थः। ऊर्ज्जितं व्यसनादिशून्यं राज्यं न राजव्यसनापोह-समर्थं न राज्ञो व्यसनदूरीकरणे समर्थं भवति। १५ स० २ श्लो० ॥ २ ॥

आत्मामात्यप्रजाकोषदुर्गाणां दण्डमित्रयोः।
व्यसनेभ्यः समुन्नेता राजा यः स त्रिवर्गभाक् ॥ ३ ॥

आत्मेति। आत्मनः अमात्यानां प्रजायाः कोषस्य दुर्गस्य दण्डमित्रयोश्च व्यसनेभ्यः समुन्नेता वियोजको यो राजा स त्रिवर्गभाक् धर्म्मार्थकामभाजनं भवति। १५ स० ३ श्लो० ॥ ० ॥

अशास्त्रचक्षुरिति। अशास्त्रचक्षुः नास्ति शास्त्रं नीतिशास्त्ररूपं चक्षुर्यस्य सः नृपतिः अन्ध इत्यभिधीयते। अन्धः शास्त्रलोचनरहितो नृपतिर्वरं तथापि मदात् गर्व्वात् व्याप्तिसत्पथः परित्यक्तसन्मार्गः चक्षुष्मान् नृपतिर्न। तथाहि अन्धो नृपतिर्मन्त्रिभिर्मन्त्रकुशलैरसन्मार्गात् निवर्त्तते, चक्षुष्मांस्तु मदान्धः कुमार्गमाश्रित आत्मानं राज्यं चाश्रयितो हन्ति। १५ स० ४ श्लो० ॥ २ ॥

मन्त्रिभिरिति। आत्मानं सराज्यमपीत्यर्थः। स्पष्टम्। १५ स० ५ श्लो० ॥ ४ ॥

शास्त्रचक्षुरिति। धर्म्मार्थौ प्रतिघ्नन्ति यानि तानि धर्म्मार्थप्रतिघातीनि धर्म्मार्थविध्वंसकानि व्यसनानि परित्यजेत्। १५ स० ६ श्लो० ॥ ५ ॥

वाग्दण्डयोरिति । वाक्पारुष्यं दण्डपारुष्यम् अर्थदूषणं चेति व्यसनत्रयं क्रोधजं स्मृतम् । १५ स० ७ श्लो० ॥ ६ ॥

कामजमिति । कामजं व्यसनं चतुर्विधम् । चतुर्विधमित्यत्र चतुष्टयमिति पाठान्तरम् । स्पष्टम् । १५ स० ८ श्लो० ॥ ७ ॥

वाक्पारुष्यमिति । वाक्पारुष्यं वाचां तीक्ष्णत्वं लोके उद्वेजनम् अतएव अनर्थकृत् अनर्थम् अपायं करोतीति । तस्मात् तत् न कुर्यात् । प्रियया वाचा जगत् आत्मसात् प्रकुर्यात् । अनर्थकृत् इत्यत्र अनर्थकम् इति, आत्मसात् इत्यत्र आत्मताम् इति, वाक्पारुष्यं परम् इत्यत्र वाक्पारुष्यपरम् इति मुद्रितपुस्तकस्य पुस्तकान्तरस्य च पाठः । १५ स० ९ श्लो० ॥ ८ ॥

अकस्मादिति । कोपात् परधनम् इत्यत्र कोपादभीक्ष्णम् इति मु० पाठः । इति प्रतीतम् । १५ स० १० श्लो० ॥ ९ ॥

हृदये इति । हृदये हृदयस्थित इत्यर्थः । मर्म्मच्छित् मर्म्मभेदी तीक्ष्णो वाग्सिः तेजस्विनं जनं दीपयति । दीप्त उद्दीप्तश्च स वैरितां याति । तेजस्विनं दीपयति इत्यत्र तेन च्छिन्नो नरपतिरिति मु० पाठः । १५ स० ११ श्लो० ॥ १० ॥

नोद्वेजयेदिति । लघयो लुब्ध उच्यते । १५ स० १२ श्लो० ॥ ११ ॥

असिद्धसाधनमिति । असिद्धस्य प्रतिपक्षादेर्दण्डनक्रियया साधनं दण्डः तथा शासनं शिक्षामपि दण्ड उच्यते सद्भिः । तथाच कौटिल्यः, "वधः परिक्लेशोऽर्थहरणं दण्डः" इति । तं दण्डं युक्त्यैव शास्त्रोक्तप्रमाणेनैव नयेत् प्रापयेत् । दण्ड्ये दण्डार्हे जने युक्तदण्डः प्रयुक्तो दण्डो येन तादृशो नरपतिः प्रशस्यते । तं युक्त्यैव नयेत् इत्यत्र सद्युक्त्योऽपनये इति, दण्ड्ये इत्यत्र दण्डं, दण्डम्, इति च, सद्भिरित्यत्र षड्भिरिति पाठान्तरम् । १५ स० १३ श्लो० ॥ १२ ॥

उद्वेजयतीति । प्रतीतम् । १५ स० १४ श्लो० ॥ १३ ॥

संश्रयाश्चैव लोकस्य इति । लोकस्य संश्रयाः आश्रयदातारः ।

संश्रया इत्यत्र आश्रिता इति मु॰ पाठः। आश्रिताश्चैव लोकेन इत्यपि पाठः। विद्वद्वाः वृद्धिं गताश्च विद्विषः विनाशाय भवन्ति। १५ स॰ १५ श्लो॰ ॥ १४ ॥

लोकानुग्रहकर्त्तार इति। स्पष्टोऽर्थः। १५ स॰ १६ श्लो॰ ॥ १५ ॥

महत्स्वपीति। तत्र राज्यापहारे प्राणान्तिको दण्डः प्रशस्यते। अन्यत्र विगर्हितः। तत्र दण्डः प्रशस्तो इत्यत्र युक्तदण्डः प्रशस्यते इति, तत्र दण्डं प्रशस्यते इति वा पाठः। १५ स॰ २० श्लो॰ ॥ १६ ॥

अर्थदूषणमाह, दूष्यस्य दूषणार्थमिति। दूष्यस्य शङ्कितापराधस्य दोषयुक्तस्य वा दूषणार्थं दोषनिरूपणार्थं वधार्थं वा महीयसो बहु-संख्यस्य अर्थस्य परित्यागः व्ययः, नीतितत्त्वज्ञैः नीतिशास्त्रविचक्षणैः अर्थदूषणम् उच्यते। दूष्यस्याद्दूषणार्थञ्च इति पाठे दूष्यस्य अदूषणार्थं निर्दोषिताख्यापनार्थम् इत्यर्थः। कौटिल्येनाप्युक्तम्, अदानमादानं विनाशस्त्यागः। तदपि कोपेनैव यत्र दीयते तत्कृतार्थदूषणमुच्यते। कोपेनैव यद्दीयते तत्कृतार्थद्रूषणमुच्यते स्थितिविनाशोऽपि कोपे-नैवोपलक्षितः। अर्थस्य त्यागोऽपि दूष्यवधार्थं यद्बहु दीयते इत्येकमेव तत् इति। १५ स॰ १८ श्लो॰ ॥ १७ ॥

अर्थदूषणस्याविधेयतामाह, तदकस्मादिति। तत् तस्मात् नित्यम् आत्महिताकाङ्क्षी राजा, अकस्मात् अतिबलीयसा कोपेन समाविष्टः सन् अर्थदूषणं न कुर्यात्। १५ स॰ १९ श्लो॰ ॥ १८ ॥

मृगयाव्यसनदोषान् अभिधातुमाह, यानक्षोभ इति। यानवतः यानेन रथादिना अरण्यं प्रविशतः यानक्षोभः बन्धुरप्रदेशे यान-प्रतिघात इत्यर्थः। तथा यानाभिहरणं यानानां ध्वंसः। क्षुत् क्षुधा, पिपासा जलपानेच्छा, श्रमः परिश्रमः, आयासः शैत्सुक्यम् इत्यादि-जनितं पीड़नं परिक्लेशः। इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् इति चतुर्विंशश्लोकेनान्वयः। यानक्षोभो यानवतो यानाभिहरणं तथा इत्यत्र पानक्षोभो पानरतो पानाभिहरणं तथा इति पाठे

पानरतौ सुरापानाभ्यासे सति पानक्षोभो सर्व्वदा पानं, तज्जनितः क्षोभः सम्मोहश्च। तथा पानाभिद्रवणं पानरत्याकर्षणं, सर्व्वदा सुरासेवनप्रवृत्तिरित्यर्थः। १५ स० २० श्लो० ॥ १९ ॥

अभियानस्येति। अभियानस्य युद्धयात्रायाः सम्पत्त्या संग्रामसामग्रीणामपचयेनेति भावः। यानव्यसनजं यानव्यसनजनितं महत् दुःखम्। अभियानस्य सम्पत्त्या यानव्यसनजं महत् इत्यत्र अभिपानस्य सम्पत्त्या पानव्यसनजं महत् इति पाठे, अभिपानस्य निरन्तरसुरासेवनस्य सम्पत्त्या संघटनेन पानव्यसनजं सुरापरायणताऽऽत्म-व्यसनजनितं महत् दुःखम्। स्पष्टमन्यत्। १५ स० २१ श्लो० ॥ २० ॥

हस्तसङ्कटेति। हस्तसङ्कटजा हस्तसन्निपातजनिताः। लताकण्टकपाटनं लताभिः कण्टकैश्च पाटनं शरीरविदारणम् इत्यर्थः। शैलपादलताजालश्वाणुवल्मीकपीडनम् इत्यत्र शैलपादशिलाजालश्वाणुवल्मीकपीडनम् इति पाठान्तरम्। अर्थोऽत्र न दुरवगाहः। १५ स० २२ श्लो० ॥ २१ ॥

प्रच्छन्नोपगतैरिति। शैलानां सरितां विपिनानां कुक्षिषु गर्भेषु प्रच्छन्नोपगतैः अलक्षितरूपेणोपस्थितैः सामन्ताटविकादिभिः कृता बधबन्धपरिक्लेशाः बधबन्धनादिजनिताः क्लेशाः सम्भवन्तीति शेषः। बधबन्धपरिक्लेशा इत्यत्र बधबन्धपरिक्लेशैरिति मु० पाठस्तु न समीचीनः। १५ स० २३ श्लो० ॥ २२ ॥

खसैन्यैरिति। परभिन्नैः परेण शत्रुणा भिन्नैः भेदमायादितैः आयत्तीकृतैरित्यर्थः। खकल्पैः आत्मसदृशैः खसैन्यैः मारणं शून्यमित्येति भावः। स्पष्टमन्यत्। १५ स० २४ श्लो० ॥ २३ ॥

दवाग्निधूमसंरोध इति। दिङ्मोहो दिग्भ्रमः। भ्रमणानि दिग्भ्रमात् दुर्गमप्रदेशेषु चंक्रमणानि। इत्यादि दोषजातमिति वाक्यशेषः। १५ स० २५ श्लो० ॥ २४ ॥

अपरोक्षिखित-मृगयागुणानभिधाय तत्खण्डनमाह, 'जितश्रमत्व-

मिति। जितश्रमत्वं श्रमसहिष्णुता। व्यायामः बलवृद्धिकरमङ्गसञ्चालनम्। श्लेष्ममेदःकफक्षयः शरीरस्थानां जड़तासम्पादकानाम् श्लेष्मादीनाम् अपचयः। श्लेष्ममेदःकफक्षय इत्यत्र आममेदःकफक्षय इति मु० पाठः। श्लेष्मणः मेदसः क्षय इति तु क्वचित् पाठः। चलस्थिरेषु चलाचलेषु लक्ष्येषु अनुत्तमा अस्खलिता बाणसिद्धिः। १५ स० २६ श्लो०॥ २५॥

मृगयायामिति। अन्ये अपरे मृगयायाम् एतान् गुणान् आहुः। तत् एवंविध-गुणकीर्त्तनं न धर्म्मं न युक्तिसङ्गतम्। यतः दोषाः मृगयायामतिप्रापाताः प्रायः प्राणहराः जीवननाशिनः तस्मात् तत् मृगयाकरणं महत् व्यसनम्। १५ स० २७ श्लो०॥ २६॥

मृगयां विनापि मृगयोक्तगुणाः सम्पद्यन्ते इति प्रदर्शयन्नाह, श्लेष्मादय इति। योग्या अश्वारोहणाद्यभ्यासः, तयैव श्लेष्मादयः श्लेष्मकफमेदाः दिवानिद्रा जीर्य्यन्ते क्षीणा भवन्ति। तथाच चलेषु स्थितिस्थापकगुणोपेतपदार्थेन, वायुना, बाष्पादिना वा प्रचलत्सु यन्त्रलक्ष्येषु यन्त्रकल्पलक्ष्येषु धावत्शशक-मृगादिषु वा बाणसिद्धिः जायते। श्लेष्मादय इत्यत्र आमादय इति, चलेषु यन्त्रलक्ष्येषु इत्यत्र चरेषु यत्र लक्ष्येषु इति मुद्रितः पाठः। १५ स० २८ श्लो०॥ २७॥

मृगयासक्ति-चरितार्थताया उपायान्तरमाह, अथ चेदिति। व्याख्या सुगमा। १५ स० २९ श्लो०॥ २८॥

कृत्रिमं मृगयारण्यं कीदृशं करणीयमित्याह, परिक्षिप्तमिति। मृगाणामपि अगम्यया अलङ्घनीयया परिखया परिक्षिप्तं परि समन्तात् वेष्टितम्। अन्यथा रक्षितमृगाणां पलायनसम्भावना। परिखाशब्देन प्राकारोऽप्युपलक्षितः। आयामपरिणाहाभ्यां दैर्घ्यविस्ताराभ्याम् अर्द्धयोजनसम्मितम् क्रोशद्वयपरिमितम्। अर्द्धयोजनसम्मितमित्यत्र अर्द्धयोजनसंश्रितम् इत्यपि पाठः। १५ स० ३० श्लो०॥ २९॥

गिरेरिति। स्पष्टम्। १५ स० ३१ श्लो०॥ ३०॥

पादपैरिति। स्निग्धनीलघनच्छायैरित्यत्र स्निग्धनीलघनच्छायैरिति, प्रख्यातैरित्यत्र विख्यातैरिति, विटपैरित्यत्र विटपैरिति मुद्रितः पाठः। १५ स० ३२ श्लो० ॥ ३१ ॥

पांशुपूरितेति। पांशुभिः पूरिताः, अत एव निश्छिद्राः छिद्र-रहिताः श्वभ्रप्रदरकन्दरा यत्र तत्। श्वभ्रं बिलं, प्रदरो विदीर्णस्थानं, कन्दरो दरी। पांशुपूरितनिश्छिद्र-श्वभ्रप्रदरकन्दरम् इत्यत्र पांशुपूरित-निश्छिद्रं श्वभ्रप्रदरकन्दरम् इति मुद्रितः पाठः। दलिताः पातिताः स्थाणु-वल्मीक-पाषाणा यत्र तत्, अत एव समभूतलम्। निम्नस्थान-पूरणात् उच्चस्थानविध्वंसाच्च सर्व्वं च समीभूतमिति भावः॥ १५ स० ३३ श्लो० ॥ ३२ ॥

शोधितग्राहसलिलमिति। शोधिता निःसारिता ग्राहाः कुम्भी-रादयो येभ्यः, तादृशानि सलिलानि यत्र तत्। सुगम्भीरजलाशय-मित्यत्र सम्भृतजलदाशयमिति, नानापक्षवनाकीर्णमित्यत्र नानापुष्प-समाकीर्णमिति, नानाविहगशोभितमित्यत्र नानाविहगसङ्कुलमिति च मुद्रितः पाठः। स्पष्टोऽर्थः॥ १५ स० ३४ श्लो० ॥ ३३ ॥

मृगसङ्घातसम्पूर्णमिति। छिन्नानि पक्षाणि येषां ते छिन्नपक्षाः, तादृशा विघातिनः पक्षिणो यत्र तत्। स्पष्टमन्यत्॥ मृगसङ्घात-सम्पूर्णमित्यत्र व्याघ्रमृगसम्पूर्णमिति क्वचित्पाठः॥ १५ स० ३५ श्लो० ॥ ३४ ॥

सुखसंसेव्यलतयेति। पुष्पवल्लीपिनद्धया कुसुमश्रेणीयुक्तया सुख-संसेव्यलतया सुखेन संसेव्या पुष्पादिचयनार्थमाश्रयणीया लता यत्र तया, परिखायास्तटे जाता समुत्पन्ना तया वनराज्या परिक्षिप्तं समन्तात् परिवेष्टितम्। १५ स० ३६ श्लो० ॥ ३५ ॥

बहिरिति। बहिः वनाद्बहिः बाह्यप्रदेशे इत्यर्थः। दूरान्तरस्य सु-दूरस्थानस्य च आभोगः परिसरः तत्र निर्वृक्षं वृक्षशून्यं समं समस्तं भूतलं यत्र तत्। निवृक्षेति पाठे निवृक्षेण क्षुपेण क्रकचाख-वृक्षेणेत्यर्थः।

समं समीकृतं भूतलं यत्र तत्। पूर्वार्द्धे, वहिर्भूरान्तराभोगनिरुद्ध-समभूतलम् इत्यपि पाठः। शेषार्द्धं सुगमम्। १५ स० ३७ श्लो०। ३६।

तद्वनम् इति। तद्वनं मृगयावनम्। रक्षिभिः रक्षितं सत् भूभुजां भूतये भवति। तद्वनम् इत्यत्र तद्वने इति, चाप्तैरित्यत्र स्वाप्तैरिति, भूभुजां भूतये भवेत् इत्यत्र भूभुजां भूरिभूतये इति मु० पाठः। १५ स० ३८ श्लो० ॥ ३७॥

तत्कर्म्मास इति। तत्कर्म्मणि मृगयाकर्म्मणि आप्तः अन्तरङ्गीभूतः। स्पष्टमन्यत्॥ क्रीड़नायास्य विविधा इत्यत्र क्रीड़नाय नरेन्द्रस्य इति पाठान्तरम्। १५ स० ३९ श्लो० ॥ ३८॥

अन्वेति। मातङ्गतुरगस्य मः अभुक्तापि अश्वादिगमनादक्षापि या-वनादिसमर्थः, राजा अन्यकार्य्याविरोधेन अन्यकार्य्यस्य प्रजापालनादि-राजकार्य्यस्य धर्म्मार्थादिरूपपुरुषार्थसाधनस्य च अविरोधेन अव्याघातेन क्रीड़नाय मृगयाविहारार्थम् आप्तैः विश्वस्तैः मत्तैः प्रियैः पुरुषैः सहितः सन् मृगयारण्यम् आविशेत् प्रविशेत्। अन्यकार्य्याविरोधेन इत्यत्र धर्म्मार्थाद्यविरोधेन इति, क्रीड़नायाविशेत् इत्यत्र क्रीड़नाय विशेत् इति, सदाप्तैरित्यत्र सहाप्तैरिति, मत्तैरित्यत्र मित्रैरिति पाठा-न्तरम्। १५ स० ४० श्लो० ॥ ३९॥

यदा चेति। दूरान्तगोचरं दूरस्य दूरवर्त्तिनः अन्तस्य मृगया-रण्यप्रान्तभागस्य गोचरम्। सम्रद्धं यत्नतस्तिष्ठेदित्यत्र सम्रद्धं तत्र संतिष्ठेदिति क्वचित् पाठः। १५ स० ४१ श्लो० ॥ ४०॥

सद्भिरिति। गुणाः साधु प्रकीर्त्तिता इत्यत्र गुणाः संपरिकीर्त्तिता इति पाठान्तरम्॥ अर्थः सुगमः। १५ स० ४२ श्लो० ॥ ४१॥

विधिरेष इति। अन्यथा रक्षकमृगयारण्यादिकं विना मृगयुर्यथा व्याध इव राजा मृगयां न गच्छेत्। मृगयां मृगयुर्यथा इत्यत्र मृग-यायां मृगा इव इति, पर इत्यत्र वर इति मु० पाठः। स्पष्टमन्यत्। १५ स० ४३ श्लो० ॥ ४२॥

द्यूतव्यसनदोषानभिधातुमाह, अक्षेति। द्राक् झटिति विमुक्तता, निवसने हारितेऽपि नग्नो दीव्यतीति दर्शनात्। निःसत्त्वता, पराजयभयात् सत्त्वरहितत्वमित्यर्थः। निष्ठुरता, पुत्रस्य सर्पदंशनान्मरणे श्रुतेऽपि अनास्थया कस्य सर्प इति प्रश्नपूर्व्वकमेकाग्रमनसा क्रीड़ासक्तिदर्शनात्। क्रोधः, हारिते पार्श्ववर्त्तिनामपि क्रुध्यतीति दर्शनात्। वाक्प्रस्खलनं, क्रोधान्धतया वाक्पारुष्यमपि भवतीति तात्पर्य्यम्। १५ स० ४४ श्लो० ॥ ४३ ॥

लोभ इति। लोभः हारिते लोभवृद्धिः। धर्म्मक्रियालोपः द्यूतादरादित्यर्थः। कर्म्मणां प्रारब्धकर्म्मणाम् अप्रवर्त्तनम् अननुष्ठानम्। सत्समागमविच्छित्तिः, द्यूतासक्तं सन्तः परिहरन्तीति दर्शनात्। असद्भिः कितवैः सह वर्त्तनम्। १५ स० ४५ श्लो० ॥ ४४ ॥

अर्थनाशेति। अवश्यम् अर्थनाशक्रिया, कोषध्वंसकारणम्। नित्यं नियतं वैरानुबन्धिता शत्रुताकरणम्। हारितवित्तो वैरीभवतीति भावः। प्रतिद्युवं जयपराजयसम्भावनया, सत्यपि अर्थे निराशत्वं धनशून्यताज्ञानम्, असत्यपि अर्थे रागिता धनवत्ताज्ञानम्। १५ स० ४६ श्लो० ॥ ४५ ॥

प्रतिक्षणमिति। प्रतिक्षणं जये क्षये क्रोधहर्षौ। पराजितस्य क्रोधः, जयिनो हर्षश्च भवतीति भावः। प्रतिक्षणं सन्तापः परितापः। प्रतिक्षणञ्च संक्लेशः कष्टापातः, पराजितस्येत्यर्थः। प्रतिक्षणं साक्षिप्रश्नः। सन्दिग्धाक्षपातने साक्षिपृच्छामित्यर्थः। १५ स० ४७ श्लो० ॥ ४६ ॥

स्नानादीति। द्यूतासक्तिवशात् स्नानादिषु अनादरः अनास्था। अव्यायामः अङ्गपरिचालनराहित्यम्। अङ्गदौर्बल्यम् उक्तकारणसमुदयात् शरीरावसादः। शास्त्रार्थस्य अप्रत्यवेक्षणम् अनालोचनम्। १५ स० ४८ श्लो० ॥ ४७ ॥

गूहनमिति। मूत्रशकृतोः गूहनं वेगरोधः। क्षुत्पिपासोपपीड़नं

क्षुधा पिपासया च उपपीड़नं परिक्षोभः। नीतिशास्त्रप्रवीणा इत्यादीन् द्यूतदोषान् प्रचक्षते कीर्त्तयन्ति। १५ स० ४६ श्लो० ॥ ४८॥

पाण्डव इति। अपरो द्वितीयः लोकपाल इन्द्र इव पाण्डवो धर्मराजः युधिष्ठिरः स्वयं विद्वानपि असता अयोगेनानेन द्यूतेन कलत्राणि धर्मदारान् अपि द्रौपदीं हारितः। द्यूतेन असता विद्वान् इत्यत्र द्यूतव्यसनमापन्नः इत्यपि पाठः। १५ स० ५० श्लो० ॥ ४९॥

नल इति। महान् उदयः अभ्युदयो यस्य तस्मिन् राज्ये द्यूतेन हृते हृतान्तरं नीते सति प्रभुः प्रभावशाली राजा नलः वने हिंस्रसमाकुलारण्ये धर्मदारान् दमयन्तीं त्यक्त्वा परित्यज्य परकर्म्म ऋतुपर्णगृहे दासवृत्तिम् अकरोत्। हृते राज्ये महोदये इत्यत्र हृते राज्यमहोदये इति मु० पाठः। परकर्म्माकरोत् प्रभुः इत्यत्र परकर्म्मपरोऽभवत् इति पाठान्तरम्। १५ स० ५१ श्लो० ॥ ५०॥

तुल्य इति। इन्द्रतुल्यस्य महेन्द्रसमानस्य यस्य तुल्यो धनुर्द्धरः भुवि पृथिव्यां नास्ति, रुक्मशैलाभः सुवर्णपर्व्वतसदृशः सः रुक्मी रुक्मिणीभ्राता, द्यूतदोषात् क्षयं गतः, बलभद्रेण जर्ज्जरीकृताङ्गो मृत्युमुखे पतितः। रुक्मशैलाभ इत्यत्र रुक्मतुल्याभ इति मु० पाठः। १५ स० ५२ श्लो० ॥ ५१॥

राजेति। कौशिकाख्यायां सदाख्यजनपदानां राजा मन्दधीः अल्पबुद्धिः दन्तवक्रोऽपि तीव्रद्यूतकृतात् दोषात् अत्यन्तद्यूतासक्तिजनितदोषेण दन्तभङ्गम् अवाप्तवान् प्राप्तवान्। बलदेवेन द्यूतफलकाहतस्य दन्तवक्रस्य दन्ता भग्ना इति भावः। १५ स० ५३ श्लो० ॥ ५२॥

द्यूतादिति। द्यूतात् अनर्थसंरम्भः, अनर्थं विनाकारणं संरम्भः अमर्षः। द्यूतात् महान् खेदक्षयः। संहतानां दृढ़तरसम्बद्धानां महात्मनाञ्च कुरुपाण्डवसमानानामपीत्यर्थः। द्यूतात् भेदः परस्परमनोभङ्गः प्रभुतापरत्वमपि प्रवर्त्तते जायते। संहतानाञ्च महात्मनामित्यत्र महात्मा सचिवानाञ्च इति मु० पाठः॥ १५ स० ५४ श्लो० ॥ ५३॥

इतीति। इत्येवं केवला दीव्यत् यत्र तत् द्यूतं राजा परित्यजेत्। मेधावी राजा अन्येषां दर्पिणां भूपालानामपि समाह्वयं द्यूते आह्वानम् अथवा द्यूतस्य नामापि विनिवारयेत्। आहूतो न निवर्त्तेत द्यूतादपि रणादपि इति वचनात् द्यूते आह्वानमपि निवारयेत्। समाह्वय-मित्यत्र समाह्वयमिति मु० पाठः; तसाह्वयमित्यन्यत्र पाठः। १५ स० ५५ श्लो०॥ ५४॥

स्त्रीदोषानभिधातुमाह, कालातिपात इति। कार्य्याणां सकल-करणीयानां कालातिपातः। स्त्रीव्यसनासक्तस्येति शेषः। धर्म्मार्थयोः प्रधानपुरुषार्थयोः परिपीड़नम्। धर्म्मस्यासेवया अर्थस्य च कामोप-भोगव्ययेन हानिरित्यर्थः। नित्याभ्यन्तरवर्त्तित्वात् सर्व्वदान्तःपुर-वासात् सर्व्वप्रकृतिकोपनं भवतीति शेषः। सचिवादयः सर्व्वाः प्रकृतयः कुप्यन्ति इति भावः। सर्व्वप्रकृतिकोपनमित्यत्र साधु प्रकृति-कोपनमिति पाठान्तरम्॥ १५ स० ५६ श्लो०॥ ५५॥

रहस्यभेद इति। तत्पक्षात् स्त्रीपक्षात् रहस्यभेदः। स्त्रीजितस्य स्त्रियो रहस्यं जानन्ति, चापल्यात् तदपि प्रकाशयन्तीति लोके प्रसि-द्धिः। अकार्य्येषु परदारादौ प्रवर्त्तनं प्रवृत्तिः। अथवा तत्पक्षादिति परेणान्वयः। प्रथमम् ईर्ष्या प्रार्थितायाः कामिन्याः प्रणयार्थिनि अन्यस्मिन् पुरुषे इति शेषः। ततस्तस्मिन्नेव अमर्षः असहिष्णुता। ततः क्रोधः, ततो विरोधः, ततः साहसानि, रावणस्येव इत्यर्थः।

ईर्ष्यामर्षौ तथा क्रोधो विरोधः साहसानि च। इत्यत्र

ईर्ष्यामर्षस्तथा क्रोधोऽनुरोधः साहसं तथा।

इति मु० पाठः। १५ स० ५७ श्लो०॥ ५६॥

इत्यादीति। स्पष्टम्। १५ स० ५८ श्लो०॥ ५७॥

स्त्रीति। स्त्रीमुखालोकनतया अयाणां स्त्रीमुखदर्शनलालसानाम् अल्पचेतसां क्षुद्राशयानाम् ईहितानि चेष्टितानि यौवनेन सह क्षयं गच्छन्ति। १५ स० ५९ श्लो०॥ ५८॥

मद्यव्यसनदोषानभिधातुमाह, गमनमिति । गमनं यथा तथा सञ्चरणम् । विकलत्वम् अनायत्तशरीरता । संज्ञानाशः अचेतनत्वम् । विवस्त्रता दिगम्बरत्वम् । असम्बद्धप्रलापित्वम् योग्यतादिरहित-वचनप्रयोगः । मुहुर्वारंवारम् अकस्मात् हठात् व्यसनम् असुस्थता । असम्बद्धप्रलापित्वमकस्माद्व्यसनं मुहुः इत्यत्र बहुबद्धप्रलापित्वम् अकस्माद् व्रजनं मुहुरिति पाठान्तरम् । असम्बद्धप्रलापित्वमित्यत्र असम्बन्धप्रलापित्वमिति पाठे परस्परसम्बन्धविवर्जितवाक्यप्रयोग इत्यर्थः । १५ स० ६० श्लो० ॥ ५८ ॥

प्राणग्लानिरिति । प्राणग्लानिः निःसत्त्वता । सुहृन्नाशः बन्धुविच्छेदः । प्रज्ञाश्रुतिमतीनां बुद्धिविद्याज्ञानानां भ्रमः वैलक्षण्यम् । सद्भिः साधुभिर्वियोगः विच्छेदः । असद्भिः सङ्गः सङ्गमः । अनर्थेन सह सङ्गमः अनिष्टापात इत्यर्थः । प्राणग्लानिरित्यत्र प्राणलाभ इति पाठस्तु न समीचीनः । १५ स० ६१ श्लो० ॥ ६० ॥

स्खलनमिति । स्पष्टम् । १५ स० ६२ श्लो० ॥ ६१ ॥

पुनरपि सोदाहरणं पानदोषमाह, श्रुतशीलबलोपेता इति । श्रुतं शास्त्राध्ययनम् । शीलं सच्चरितम् । बलं शौर्य्यम् । तद्युक्ताः । अक्षीणनामानः सर्व्वत्र विख्याताः बलदेवप्रद्युम्नादयः । अन्धकवृष्णयः, भूयसा पानदोषेण अपरिमितसुरासेवनदोषेण क्षयं जग्मुः उच्छेदं प्रापुः । १५ स० ६३ श्लो० ॥ ६२ ॥

योगीश्वर इति । औरसं हृदयग्राहिणं प्रियं कचम् । पुरा देवासुराणां संग्रामे प्रवृत्ते शुक्रो मृतसञ्जीवन्या विद्यया मृतानसुरान् सञ्जीवयति । देवास्तु मृता न जीवन्ति । तदा देवानां बृहस्पतेश्चानुरोधेन मृतसञ्जीवन्या विद्यायाः संग्रहार्थं कचः शुक्रदुहित्रा सह सख्यमकरोत् । तद्द्वारेण शुक्रस्य च प्रियतमशिष्योऽभवत् । तज्ज्ञात्वा दैत्यैर्बहुशो व्यापादितोऽपि कचो दुहित्रनुरोधात् शुक्रेण मृतसञ्जीवन्या विद्यया पुनः पुनः सञ्जीवितः । अथ दैत्याः कचं व्यापाद्य तन्मांसानि

बहुधा पक्वानि कृत्वा सुरया सह शुक्राय ददुः। शुक्रस्तु मदान्धः सुरया सह कचस्य मांसं भक्षितवान्। तेन च तदवधि ब्राह्मणानां सुरापानं निषिद्धम्, इति पौराणिकी वार्त्ता। १४ स० ६४ स्लो०॥ ६३॥

पानच्छिन्न इति। पानासक्तो हि चाण्डालादिकान्नभोजनादिरूपे ऽकार्य्येऽपि प्रवर्त्तते। तेनासौ शास्त्रनिषिद्धाचरणात् आर्य्यसमाजे ऽप्यवधार्य्यो भवतीति भावः। शब्दार्थस्तु सुगमः। १४ स० ६५ स्लो०॥ ६४।

मृगयाद्यूतयोर्दोषाधिक्यमाह, काममिति। कामं सर्व्वथा वरं स्त्रियं निषेवेत गच्छेत्, अथवा साधुमात्रया परिमितमात्रया स्वल्पपरिमाणेनेत्यर्थः। पानं सुरापानं निषेवेत कुर्य्यात्। तथापि विद्वान् द्यूतमृगये न, निषेवेत इति शेषः। यतः ते द्यूतमृगये अत्यन्तव्यसने। १४ स० ६६ स्लो०। ६५।

उपसंहरति, तदिति। तत् तस्मात्, श्रेयसो यस्ति इत्यस्मात्, अपनयविधिज्ञैः अपनयस्य दुर्णीतेः शास्त्रनिषिद्धाचरणस्येति यावत्। विधिज्ञैः विधिम् अनिष्टफलत्वं जानन्तीति तैः आचार्य्यैः, श्रेयसां कल्याणानां विघ्नकारि विघातकं व्यसनं सप्त सप्तधा, उदारम् अप्रतिहतं यथा तथा उपदिष्टं कथितम्। तथा हि एकमपि व्यसनं निषङ्गात् दृढ़संसर्गात् आशु शीघ्रं नाशं विनाशं जनयति सम्पादयति। निषङ्गादित्यत्र निसर्गादिति मुद्रितपाठे स्वभावादित्यर्थः। किमु किमुत यौगपद्योदयेन युगपदेकाधारे सर्व्वेषां समवायेन न हन्ता उच्छेदकारी भवति? परलोकोऽस्तो दुरन्तो व्यसनसप्तकसमवाय इति शेषः॥ १४ स० ६७ स्लो०॥ ६६॥

घटयतीति। विबुधमनसोनामपि देवसमानबुद्धीनामपि दुरन्तः दुष्परिपाकः अशुभावसानो वा अयं सप्तको गण इति शेषः। इन्द्रियाणां श्रोत्र-त्वक्-घ्राण-रसन-नयनादीनां परिभोगप्राप्तितां तत्तद्विषयासक्तिं घटयति संवर्द्धयति। घटयतीति पाठे जनयतीत्यर्थः।

श्रुतमपि आलोचितशास्त्रमपि श्रेष्ठतामुत्कृष्टत्वमपि, प्रेष्ठताम् अग्रगामित्वं च विनिघ्नन्ति नाशयति । विभूतिं निरूढामपि श्रियं भूयसीं महाप्रमाणामपि अनीचैरत्यर्थं यथा तथा चलयति अपसारयति । १५ स० ८८ श्लो० ॥ ८७ ॥

अदिगया इति । अदिगयाः प्रगुणाः अपगतव्यसना इति विशेषणमत्रापि योजनीयम् । नियतं निरन्तरं व्यसने स्थितं स्त्रीद्यूतमृगयादौ निरतं राजानं परिभवन्ति पराजयन्ते । स्वयञ्च दुष्छिदो दुर्भेद्या भवन्ति । अपगतव्यसना व्यसनविवर्जिता बुधा नीतिशास्त्रविदः पण्डिताः रिपून् प्रभून् परिभवन्ति, स्वयं च ते दुष्छिदो भवन्ति । १५ स० ८९ श्लो० ॥ ८८ ॥

इति कामन्दकीयनीतिसारटीकायां श्रीजगन्मोहनतर्कालङ्कारकृतायां हस्तलिखितपुस्तकानुसारेण व्यसनविस्तृतिर्नाम पञ्चदशः सर्गः ॥०॥

मुद्रितपुस्तकानुसारेण चतुर्दशः सर्गः ॥

पञ्चदशसर्गप्रारम्भः ।

व्यसनविहीनस्य विजिगीषोः कार्य्यमाह, नानाप्रकारैरिति । विजयाभिकाङ्क्षी विजिगीषुः नरेन्द्रः नानाप्रकारैः पूर्व्वनिरूपितैः व्यसनैः, व्यस्यन्ति निराकुर्व्वन्ति श्रेयांसि यानि तानि तैः विमुक्तः विरहितः सन् अप्रतिमेन असामान्येन शक्तित्रयेण प्रभुशक्ति-मन्त्रशक्ति-उत्साहशक्तिरूपेण युक्तः विशिष्टश्च सन्, दुरन्तव्यसनोपपन्नं दुरपनेय-प्रकृतिसप्तकव्यसन-दूषितं परं यातव्यं यायात् विजयार्थमभिगच्छेत् ॥ १६ स० १ श्लो० ॥ १ ॥

प्रायेणेति । सन्तः विपश्चितः प्रायेण, रिपूणां विजेयानां व्यसने यातव्यं युद्धयात्रा कर्त्तव्या इत्यर्थः । इत्येव समादिशन्ति कथयन्ति । हि निश्चये तत्र व्यसने विपक्षप्रकृतिसप्तकनिष्ठे व्यसने सति नित्यं नियतम् एव पक्षः, अवलम्बनीय इति शेषः । क्षमः समर्थश्चेत् अभ्युदितः अभ्युदययुक्तः सन् अभियायात्, शत्रोर्व्यसनाभावेऽपीति शेषः । तत्रैव पक्षो व्यसने हि नित्यम् इत्यत्र तत्रैव पक्षो व्यसने हि नियम् इति, तत्रैव पक्षो व्यसनं ह्यनित्यम् इति च पाठान्तरम् । १६ स० २ श्लो० ॥ २ ॥

यदेति । यदा ऊर्ज्जितं प्रबलम् अमित्रं शत्रुं पराक्रमात् बलेन प्रसभं निहन्तुं क्षमः समर्थः । तदा परस्य यातव्यस्य पीडनकर्षणानि पीड़नं प्रपीड़नं कर्षणं धनधान्यादीनाम् आकर्षणम् इत्यादीनि अहितानि अनिष्टाचरणानि कुर्व्वन् यायात् अभिगच्छेत् । पीड़नकर्षणानि इत्यत्र कर्षणपीड़नानि इति मु० पाठः ॥ १६ स० ३ श्लो० ॥ ३ ॥

सम्पन्नशस्यमिति । राजा विजयोत्यर्थः । विजयाय सम्पन्नशस्यं परिपक्वानेकशस्यं प्रस्मयं यानयोग्यं परस्य यातव्यस्य विषयं राज्यं यायात् आक्रामेत् । यायात् प्रस्मयमित्यत्र यायादिभूतिमिति पाठे परस्य देशं

विभूतिं च व्याप्नुयात् इति भावः। यतः शस्योपघातेन शस्यनिर्लुण्ठनेन परस्य वृत्तिच्छेदः स्वसैन्यानाम् उपचयः पुष्टिश्च साधु यथा तथा भवेदिति शेषः। १६ स० ४ श्लो०॥४॥

विशुद्धपृष्ठ इति। पार्ष्णिग्राहविधानात् विशुद्धपश्चाद्भागः। पुरतः अग्रे भयप्रदेशान् सङ्कटस्थानानि विचिन्वन् निरूपयन्। परकर्म्मवेदी शत्रुचेष्टितमभिजानन्। सवीवधासारविशुद्धमार्गः स्व अप्रतिहतः वीवधः धान्यादेः प्राप्तिः, आसारः सुहृद्बलं, विशुद्धमार्गश्च यस्य सः। अप्रमत्तः सावधानः, विजिगीषुः, दियतः शत्रोः धरित्रीम् अधिकृतां भूमिं विशेत्। विशुद्धमार्ग इत्यत्र विशुद्धमार्गाम् इति पाठे धरित्रीम् इत्यस्य विशेषणत्वेन योजनीयम्। १६ स० ५ श्लो०॥५॥

समे इति। सन्नद्धः सुसज्जितः गुल्मः कल्पितसैन्यव्यूहभेदो यस्य सः। विहितान्नपानः विहितं सुनिरूपितम् आहृतञ्च अन्नं भक्ष्यं पानं जलादिकं येन सः। विद्वान् नीतिशास्त्रनिपुणः विजयी, समे प्रदेशे समभूमौ, विषमे उन्नतानतस्थाने च, भूमेः निम्ने स्थले निम्नस्थाने वा अनातुरः कातरताहीनः, अभयः निर्भीकश्च सन् सुमुखेन वीरपुरुषाधिष्ठितसेनामुखेन यायात् अभिगच्छेत्॥

सम प्रदेशे विषमे च निम्ने स्थले क्षते यानहितान्नयुक्ते।
स्वसैन्यपर्य्याप्तविहारयुक्ते देशे विदध्याद् विजयाय राजा॥

इति पाठान्तरम्। १६ स० ६ श्लो०॥६॥

ग्रीष्मे इति। ग्रीष्मे ग्रीष्मसमये करिणां हस्तिनां निर्वापणार्थं श्रेयोविधानार्थं प्रभूताम्बुवनेन प्रभूतानि बहुलानि अम्बूनि जलानि वनानि च यत्र तेन पथा इति शेषः। यायात् गच्छेत्। अम्बु पेयं वनं भक्ष्यं करिणां भविष्यतीति भावः। निर्वापणार्थमित्यत्र निर्वासनार्थमिति पाठान्तरम्। अम्भस ऋते जलाभावेन ग्रीष्मप्रभावात् हस्तिनां कुष्ठानि श्विनरोगा भवन्ति; इति हस्तिचिकित्सासम्मतम्। १६ स० ७ श्लो०॥७॥

स्वस्थक्रियायामिति। स्वस्थक्रियायां स्वस्थाः सुस्थतायञ्जिकाः क्रियाः कार्याणि येषां ते स्वस्थक्रियाः, तेषामपि कुञ्जराणां शरीरेषु उष्मा उत्तापः ह्यभिजाज्वलीति देदीप्यते। हि निश्चये स प्रतापः कुञ्जर-शरीरान्तर्गततापः, व्यायासयोगेन पथिश्रान्त्या सम्बद्धः उत्तेजितः सन् द्विरदान् तानेव कुञ्जरान् प्रसह्य सहसा हन्ति विनाशयति। शरीरेष्वभिजाज्वलीति इत्यत्र शरीरेषु हि जाज्वलीति इति पाठान्तरम्। १९ स० ८ श्लो० ॥ ८॥

सर्व्वाणीति। परामवस्थां मरणावस्थाम्। शिष्टं स्पष्टम्। १९ स० ९ श्लो० ॥ ९॥

सुगन्धीति। सुगन्धिदानच्युतिशीकरेषु सुरभिमदक्षरणाल्पजलबिन्दुषत्सु। दन्ताभिघातेन स्फुरिता उत्पन्ना येषां तेषु। तड़िताम्यमेतत्। शेषं सुगमम्। १९ स १० श्लो०। १०॥

गजेषु राज्यं निबद्धमित्यस्य हेतुमाह, सुकल्पित इति। सुकल्पितः जययोग्यस्थाने रचितः। संयुगदृष्टमार्गः संयुगे दृष्टः मार्गो येन, संग्रामकौशलज्ञ इति भावः। षष्टिशतानि षट्सहस्राणि। शेषं स्पष्टम्। १९ स० ११ श्लो० ॥ ११॥

गजेषु राज्यं निबद्धमित्यस्य हेत्वन्तरमाह, जले स्थले इति। जले नदीतड़ागाद्युत्तारे, महाप्रमाणत्वात्। स्थले वालुकाचित-दुर्गमस्थाने। द्रुमसङ्कटे, द्रुमभङ्गसमर्थत्वात्। साधारणे जलस्थलमिश्रे वा। विषमे उन्नतपाषाणवल्मीकस्थाणुप्रभृतिभिर्बन्धुरे। समेऽपि कान्तारे प्रान्तरे वापि। प्राकारहर्म्म्यादिविदारणे च नागवतां बलानां सकुञ्जर-सैन्यानां जयः ध्रुवं निश्चयेन भवतीति शेषः॥ जले स्थले पङ्कसङ्कटे च समेऽसमे साधुबलेऽबले च। प्राकारहर्म्म्यादिविदारणेन जयो ध्रुवं नागवतां बलानामिति पाठान्तरम्। १९ स० १२ श्लो० ॥ १२॥

तस्मादिति। यस्मात् नागवतां बलानां ध्रुवं जयः, तस्मात्, यतो भूरिजलः पन्थाः, यतश्च अन्नपानाभ्याम् उपचितः पुष्टो भवति, तेन

यथा, विशुद्धः शङ्कारहितः सन् प्रतापं जनयन् प्रभावं प्रकटयन् बलानि अश्रमयन् न श्रान्तानि कुर्व्वन् शनैः शनैः अभियायात् शत्रुपुरीं प्रविशेत्। १६ स० १३ श्लो० ॥ १३ ॥

अभ्युन्नतानामिति। अणुरपि स्वयं क्षीणशक्तिरपि अभ्युन्नतानां शक्तित्रयसम्पन्नानामपि अरीणां शत्रूणां पश्चात्प्रकोपम् उदारम् उत्कृष्टं जनयेत्। अप्रमत्तः प्रमादरहितः सन् तञ्च पश्चात्प्रकोपं प्रसमीक्ष्य प्रतिविधाय यायात् युद्धयात्रां कुर्य्यात्। कस्मादित्याह, अदृष्टस्य अप्राप्तस्य अनिश्चितस्येत्यर्थः। यानफलस्य हेतोः दृष्टं पूर्व्वोपार्ज्जितं स्वहस्तगतमित्यर्थः। राज्यं न नाशयेत्। पश्चात्प्रकोपः सर्व्वनाशं करोतीति भावः। १६ स० १४ श्लो० ॥ १४ ॥

पश्चात्प्रकोप इति। पश्चात् स्वामीयादेः प्रकोपः वाह्यैराभ्यन्तरैर्व्वा अर्थलोभादिकः। पुरतः प्रयाणसिद्धौ फलं राज्यधनादिलाभश्च। तयोर्मध्ये किं गरीय इति परामर्शे पश्चात्प्रकोपस्तु गरीयान् गुरुतरः। हि यतः विप्रकृताः विरोधिताः विपक्षभूपालाः तत् पश्चात्प्रकोपलक्षणं रन्ध्रं छिद्रं महत्त्वं नयन्ति प्रवर्द्धयन्तीत्यर्थः। तस्मात् प्रतिविधाय प्रतिविधानं कृत्वा यायात्, नान्यथेत्यर्थः। १६ स० १५ श्लो० ॥ १५ ॥

पुरश्चेति। अविशुद्धपृष्ठः अप्रतिविहितपार्ष्णिग्राहादिः प्रसमेन युद्धयात्रां कुर्व्वन् तीव्रं पार्ष्णिभेदं पार्ष्णिग्राहजनितमहाभयं प्राप्नोति। शेषं स्पष्टम्। १६ स० १६ श्लो० ॥ १६ ॥

यास्यन्निति। यास्यन् युद्धयात्रां करिष्यन् विजिगीषुः पुरोऽग्र स्वं स्वामीयरक्षकम् अनेकवर्गम् अनेके वर्गाः अष्टवर्गिकैकादशवर्गिकादयो हस्त्यश्वरथप्रभृतयो वर्गा यस्मिन् तत्। अनेकमुख्यम् अनेकप्रधानं बलं निदध्यात् स्थापयेत्। कस्मादित्याह, अनेकमतम् अनेकमतविमिश्रम् अनेकमुख्यस्य बहुप्रधानाधिष्ठितस्य बलस्य ऐकमत्यं द्विषतां शत्रूणाम् अभेद्यम्। १६ स० १८ श्लो० ॥ १० ॥

अवश्ययातव्यत्वे पश्चात्प्रकोपशङ्कायां किं प्रतिविधेयमित्याह, अवश्ययातव्यतयेति। अवश्ययातव्यतया यानस्य अवश्यकरणीयतया उद्यतः उद्युक्तः सन्। पश्चात्प्रकोपाहितयानशङ्कश्चेत् पश्चात्प्रकोपेण आहिता उपस्थिता यानशङ्का यस्य तादृशश्चेत् तदा सेनापतिं सेनानीम् अथवा कुमारं बलैकदेशेन बलस्यैकांशेन सह पुरः शङ्का-स्थानस्याग्रे निदध्यात् रक्षार्थं स्थापयेत्। पश्चात्प्रकोपाहितयानशङ्क इत्यत्र पश्चात् प्रकोपाहितयानशङ्का इति मु० पाठः। १६ स० १८ श्लो० ॥ १८ ॥

बाह्याभ्यन्तरकोपयोर्गुरुलाघवमभिधातुमाह, आभ्यन्तरादिति। आभ्यन्तरात् अभ्यन्तरसमुत्पन्नात् पुरोहितामात्यादिकृतात् बाह्यकृतात् बाह्यैरन्तःपालाटविकादिभिः कृतात् च दोषात् कोपात् कारणात् तयोः दोषयोः मध्ये आभ्यन्तर एव गरीयान् बलवत्तरः, आभ्यन्तरकोपात् भयं भवतीति भावः। अवश्ययातव्यत्वे एतद्दोष-विनिवारणाय किं कर्त्तव्यमित्याह, अवहिःप्रचारान् अन्तर्गताम दोषहेतून् प्रकुपितानित्यर्थः। आदाय पुरस्कृत्य अर्थदानादिना संगृह्य इत्यर्थः। सार्द्धं गृहीत्वा वा गच्छेत्। बाह्यान् वक्ष्यमाण-प्रकारान् राष्ट्रान्तपालादीन् दोषहेतून् विहितानुकल्पान् विहितः कृतः अनुकल्पः सामादिना प्रतिविधानं येषां तादृशान् कृत्वा गच्छेत् इति सम्बन्धः। १६ स० २० श्लो० ॥ १९ ॥

बाह्याभ्यन्तरयोः पश्चात्प्रकोपयोराभ्यन्तरं प्रकोपमाह, पुरोहितेति। पुरोहिताः, अमात्याः, कुमाराः राजपुत्राः, कुल्याः विजिगीषुकुलभवाश्च; एते प्रधानाः सेनाभिगोप्तारः सेनाध्यक्षाः। सन्तः साधवः, तेषां पुरोहि-तादीनाम् अन्योन्यतमप्रकोपं परस्परविद्वेषम् अन्तःप्रकोपं समुपादि-शन्ति निर्दिशन्ति निरूपयन्तीत्यर्थः। तेषां हि सन्तोऽन्यतमप्रकोप-मन्तःप्रकोपं समुपादिशन्ति इत्यत्र एषां हि मन्त्रोऽन्यतमप्रकोपमन्तः-प्रकोपं समुपादिशन्ति इति मु० पाठः। १६ स० १९ श्लो० ॥ २० ॥

वाह्यं प्रकोपमाह, राष्ट्रेति। राष्ट्रपाला दण्डनायकाः, अन्तपालाः सन्धिरक्षणनियुक्ताः, आटविकाः अटवीभोक्तारः अन्त्यजा म्लेच्छमुख्यादयः, अभिसीमानः सीमासमीपस्थाः। वङ्गवनवसेन समाहर्त्तृप्रमुख्यादयः। एतेषाम् अन्यतमप्रकोपः वाह्यप्रकोपः कथित इति शेषः। उत्पद्यमानं तम् उभयविधं पश्चात्प्रकोपं निपुणप्रचारैः कार्य्यकुशलैः मन्त्रिभिः सचिवैः सम्यक् उपाददीत संवृणुयेत्। प्रतीकारार्थमिति भावः। उत्पद्यमानम् इत्यत्र उत्पद्यमान इति पाठान्तरम्। १६ स० २१ श्लो० ॥ २१ ॥

सामादिभिरिति। सामादिभिः उपायैः, परस्परम् अवग्रहैः संरोधैः, भेदनैः विश्लेषणैश्च प्रकोपं संशमयेत् शान्तिं नयेत्, विजिगीषुरिति शेषः। प्रततः सन्ततहृदया यथा परान् शत्रून् न भजेरन् न आश्रयेयुः सचिवादय इति शेषः। धीरः नीतिशास्त्रज्ञः राजा तथा विकारं शमयेत् च। तथाच धीरः शमयेद्विकारम् इत्यत्र तथापि धीरः शमयेत् प्रकोपमिति सु० पाठः। १६ स० २२ श्लो० ॥ २२ ॥

कीदृशी यात्रा न कर्त्तव्या इत्याह, मनुष्येति। मनुष्याणां पुरुषगुणोपेतानां, युग्यानां वाहनानाम् अपचयः ह्रासः, व्ययः ध्वंसश्च। हिरण्यानां सुवर्णानां धान्यानाम् अपचयः क्षतिः, व्ययश्च नाशश्च। हिरण्यपदेन धनस्य, धान्यपदेन खाद्यद्रव्यमात्रस्य उपलक्षणम्। तस्मात् विदग्धबुद्धिः राजा, क्षयव्ययायासकरीं, क्षयस्य अपचयस्य व्ययस्य वितरणादिकस्य, आयासस्य परिश्रममात्रस्य च हेतुम् इमां फलहीनयात्रां नैव उपेयात् स्वीकुर्य्यात्। १६ स० २३ श्लो० ॥ २३ ॥

कीदृशी यात्रा विधेयेत्याह, अवश्येति। अवश्यभाविनी निष्पत्तिः कार्य्यसिद्धिरेव महाफलं तेन आढ्या सम्पन्ना, ताम्। अदीर्घं न दीर्घकालव्यापि सूत्रं यस्याः ताम्। परिणामकल्यां परिणतफलोन्मुखीम्। कामं वरं व्ययायासकरीम् उपेयात्, यात्रामिति शेषः। तु किन्त

जातु कदाचित् नैव व्ययदोषयुक्तां मनुष्यगुण्यादिविनाशरूपदोष-दूषिताम् उपेयात्। १६ स० २४ श्लो०॥ २४॥

कार्य्यव्यसनमभिधातुमाह, वस्तुष्विति। अशक्येषु असाध्येषु वस्तुषु कार्य्येषु त्रिवर्गफलकव्यापारेषु इत्यर्थः। चेत् यदि समुद्यमः समुद्योगः। शक्येषु साध्येषु वस्तुषु च मोहात् अज्ञानात् असमुद्यमः उद्योगाभावः। शक्येषु विषयेषु अकालेषु असमये अनुपयोगिसमये निजस्य व्यसनान्तः-प्रकोपादिसमये इति भावः। समुद्यमश्च। अकालेषु इत्यत्र बहुवच-नात् अदेशेषु समुद्यम इत्यपि आक्षिप्तम्। एवं त्रिधैव त्रिविधमेव कार्य्यव्यसनं वदन्ति कथयन्ति। नीतिशास्त्रविशारदा इति शेषः। श्रेयसो यस्यति निराकरोति यत् तत् व्यसनम्। श्रेयस्तु कार्य्यस्य फलम्। शक्येष्वकालेषु समुद्यमश्च इत्यत्र शक्येषु कालेन समुद्यमश्च इति मु० पाठः। शक्येषु लोकेन समुद्यमश्च इति पाठस्तु न समीचीनः १६ स० २५ श्लो०॥ २५॥

अन्यान्यपि कार्य्यव्यसनान्याह, काम इति। कामः इन्द्रियग्राह्येषु रूपरसगन्धस्पर्शशब्देषु तदनुषङ्गात् मद्यद्यूतमृगयादिषु च आसक्तिः। अक्षमा क्रोधः। वाक्पारुष्यं दण्डपारुष्यमर्थदूषणमिति व्यसनत्रयं तज्जनितमेव। अदाक्षिण्यता अदाक्षिण्यम्। दाक्षिण्याभावे अनुजी-विनां भक्तिह्रासेन कार्य्यविध्वंसः। अनुकम्पा विजितेष्वपि विद्वे-षिषु दया। एतेन च यथोचिताकरणात् लाभविध्वंसः। ह्रीः लज्जा। क्रिया च यथोचिताकरणात् लाभहानिः। साध्वसम् अप्रति-पत्तिः। अप्रतिपत्तिर्हि कार्य्यं नाशयति। क्रौर्य्यं क्रूरता। क्रूरो हि अना-श्रयणीयो भवति। अनार्य्यता अशिष्टता। अशिष्टानां सत्कार्य्यकर-णादपि लाभहानिर्भवति। दम्भः परवञ्चकता। वञ्चकस्याविश्वसनीयतया लाभविध्वंसः। अभिमानोऽहङ्कारः। अहङ्कारस्य न केवलं कार्य्यवि-ध्वंसिता, क्षयहेतुतापि। अतिधार्म्मिकत्वम् धर्म्मान्धत्वम्। अतिधार्म्मि-को हि करतलस्थमपि राज्यं रक्षितुं न शक्नोति। दैन्यं शौर्य्यं कार्य्यकाले

कातरता। कातर्य्येण च कार्य्यहानिर्भवति। स्वयूथस्य विमाननं च धात्मपक्षस्य अवमाननं च। सम्मानिता अनुजीविनः प्राणव्ययेनापि कार्य्यं साधयन्ति, अवमानितास्तु कार्य्यहानिमेव कुर्व्वन्ति। १९ स० २६ श्लो० ॥ २६ ॥

द्रोह इति। द्रोहो मित्रद्रोहादिकम्। भयं भीरुता। शश्वत् निरन्तरम् उपेक्षणम् आपदामायतन्तीनामुपेक्षा। शीतोष्णवर्षाणाम् अप्रसहिष्णुता असहनशीलता। ऋतुप्रभावासहिष्णुः कथं सर्व्वस्मिन् देशे सर्व्वस्मिन् काले च स्वकार्य्यं साधयितुं समर्थो भवति। काले कार्य्यसाधनसमये समुपार्ज्जितानि समुपार्ज्जितानि स्वीकृतानीत्यर्थः। एतानि उक्षिखितकार्य्यव्यसनानि खलु निश्चये अवश्यम् अव्यभिचरितं सिद्धिविघ्नं कार्य्यसिद्धिव्याघातं कुर्व्वन्ति। १९ स० २७ श्लो० ॥ २७ ॥

सहायसाधं सप्तविधं पक्षमभिधातुमाह, निज इति। निजः अनुरक्तः स्वाभाविक-बन्धुवर्गः। मैत्रः मित्रमित्ररूपः। समाश्रितः प्रतिपक्षभयात् शरणमापन्नः। सम्बन्धजः कन्यादानादिना वैवाहिकसम्बन्धेन मिलितः। कार्य्यसमुद्भवः व्यवहारादिना समुत्पन्नः। भृतः स्वेच्छया देशहितैषितया वा पक्षमाश्रितः। भृत इति पाठे वेतनदानादिना प्रतिपालितः। विविधोपचारैः भोजनाच्छादनादिभिः गृहीतः आत्मसात् कृतः। बुधाः पण्डिताः एवं सप्तविधं पक्षं वदन्ति कीर्त्तयन्ति। १९ स० २८ श्लो० ॥ २८ ॥

सप्तविधपक्षस्यानुरागलिङ्गान्याह, सदानुवृत्त्या इति। सदा सर्व्वदैव अनुवृत्त्या अनुवर्त्तनेन। अनुसृत्या इति पाठे स एवार्थः। गुणकीर्त्तनेन गुणप्रख्यापनेन। निन्दासहत्वेन परकृतनिन्दासहिष्णुतया। रन्ध्रगुप्त्या छिद्रसंगोपनेन। तदर्थशौर्य्योद्यमसंकथाभिः, तस्य अर्थः प्रयोजनं, शौर्य्यं शूरता, उद्यमः उद्योगः, तेषां संकथाभिः समालोचनैः। अनुरागी अनुरागवान् पक्षो वेदितव्यः ज्ञेयः। एतैश्चिह्नैः स्वपक्षस्यानुरागो निर्णेय इति भावः। १९ स० २९ श्लो० ॥ २९ ॥

कुलीनमिति। कुलीनम् उभयकुलविशुद्धम्, आर्य्यं महावंशसम्भूतं, श्रुतवविनीतं श्रुतं शास्त्रश्रवणं विद्यते यस्य असौ श्रुतवान्, श्रुतवांश्चासौ विनीतश्चेति स तम्। मानोन्नतं मानेन सम्मानेन उन्नतं महान्तम्। अलोलुपमिति पाठे परस्त्रीधनादिषु लोभशून्यम्। सभ्यं साधारणरीतिविनीतिज्ञम्। सत्यमिति पाठे अमृत्यावादिनम्। अहार्य्यबुद्धिं प्रतिपक्षादिभिः अहार्य्या अनभिभवनीया बुद्धिर्यस्य तम्। कृतज्ञतोर्ज्ज्वामतिसत्त्वयुक्तं कृतज्ञता प्रत्युपकारप्रवणता, ऊर्ज्जा बलं, मतिः प्रज्ञा, सत्त्वं व्यसने अभ्युदये च अविकारिता, तैर्युक्तं समेतम्। तादृशं नरं सद्सत्पक्षं सदाचारपक्षं स्वगणमध्ये सुचरितमिति भावः। विद्यात् जानीयात्। १६ स० ३० श्लो०। ३०।

उक्तापि विजिगीषोरात्मसम्पत् प्रसङ्गात् पुनरुच्यते, उद्योगेति। उद्योग उत्साहः, मेधा स्मृतिः, धृतिः धैर्य्यं, सत्त्वं बलं, सत्यम् अवितथव्यवहारः, त्यागः पात्रेषु धनादिप्रतिपादनम्, अनुरागः गुणपक्षपातिता, स्थितिः अविचलितभावः, गौरवं महिमा, तानि। जितेन्द्रियत्वं जितानि वशीकृतानि इन्द्रियाणि येन तस्य भावः, प्रसहिष्णुता क्षोभायासादिसहनसामर्थ्यं, क्रीनेच्छा, प्रागल्भ्यं दृढता, जितसभत्वमित्यर्थः। एतानि आत्मगुणान् आत्मनो विजिगीषोर्गुणान् वदन्ति, नीतिज्ञा इति शेषः। १६ स० ३१ श्लो०। ३१।

प्रवसरप्राप्तं शक्तित्रयमाह, मन्त्रस्येति। षाड्गुण्यस्य यथोद्देशावस्थानं नयः। सुनयस्य उपचारं प्रयोगं मन्त्रस्य शक्तिम् आहुः। सुनयोपचारमित्यत्र सनयप्रचारमिति पाठान्तरम्। सुकोषदण्डौ सु शोभनौ कोषदण्डौ प्रभुशक्तिम् आहुः। कोषदण्डबलं हि प्रभुशक्तिरिति कौटिल्यः। बलवद्विचेष्टां बलवतो विजिगीषोर्विचेष्टाम् उत्साहशक्तिम् आहुः। आर्य्या इति शेषः। इत्थं विशक्तियुक्तः तिसृभिः शक्तिभिर्युक्तः, इह मनुष्यलोके जेता जयी भवति। १६ स० ३२ श्लो०। ३२।

उत्साहगुणानाह, शौर्य्यमिति। शौर्य्यम् आशुकार्य्यनिष्पादकत्वं, सदाक्ष्यं सुकौशलं, व्यसनेषु आपत्सु अदैन्यम् अक्लैव्यम्। उत्साहसम्पत् उद्योगशील-

त्वम्। युधि संग्रामे धीरता धैर्य्यम्। युधि धीरता च इत्यत्र स्वतिधीरता च इति मुद्रितः पाठः। आत्यन्तिकी वऊला शास्त्रसमुद्भवा नीतिशास्त्रालोचनजनिता सांसर्गिकी विचक्षणसंसर्गसमुत्पन्ना परिणामिनी परिणतिशीला धीर्बुद्धिः। एवं चतुर्विधा बुद्धिरित्यर्थः। १६ स० ३३ श्लो० ॥ ३३ ॥

भूयोऽपि यानगुणानुष्ठाने विजिगीषोः सामग्रीमभिधातुमाह, उत्साहेति। उत्साहः उद्योगः, सत्वं बलम्, अध्यवसायः स्थिरता, चेष्टा अनालस्यं, दार्ढ्यं कर्म्मसु दृढ़ता, कर्म्मसु कार्य्येषु अतिशौर्य्यम् अतिशौर्य्यम्, अरोगता घोड़ादाढ्यं, कर्म्मफलोपपत्तिः कर्म्मफलस्य आक्रमणादिजनितफलस्य उपपत्तिः उपपादनं, दैवानुकूल्यं दैवस्य अदृष्टस्य अनुकूलता। निराधिता, आधिः मानसी व्यथा, तत्शून्यत्वम्। १६ स० ३४ श्लो० ॥ ३४ ॥

पक्षादिनानेन गृहीतकोष इति। अनेन पूर्व्वोक्तप्रकारेण पक्षादिना, विधिना इत्यर्थः। उक्तञ्च, "मित्रोऽथ मैत्रञ्च समाश्रितञ्च सम्बन्धजः कार्य्यसमुद्भवञ्च। भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति॥" इति। आदिपदात् उत्साहशक्त्यादिसमन्वितः इत्यर्थः। गृहीतकोषः गृहीतः समभिव्याहारे नीतः कोषो येन। कोषाधीनो राजेति वचनात्। विजिगीषुराजेति शेषः। पक्षादिहीनं पक्षादिभिः पक्ष-सन्त्रशक्ति-कोषप्रभृतिभिः हीनं न्यूनं रिपुं रातव्यं शत्रुम् अभ्युपेयात् आक्रामेत्। जयस्य निःसन्दिग्धत्वादिति भावः। इति एवमुक्तप्रकारेण प्रसर्पन् विपक्षाक्रमणार्थं निर्गच्छन् विजिगीषुः समुद्रप्रक्षालितां सागरमेखलामित्यर्थः। तां अखण्डां धरित्रीं लभते। पक्षादिनानेन इत्यत्र पक्षादिदानेनेति पाठो नासम्यं रोचते। १६ स० ३५ श्लो० ॥ ३५ ॥

काल इति। सजलाभ्रजालः सजलजलदपटलयुक्तः कालः गजानां, तदन्यः वर्षातिरिक्तः कालः तुरङ्गमाणामश्वानां यातुं प्रयातुं, प्रशस्त इति शेषः। अतएव नात्युष्णवर्षोऽपि समधिकवर्षा-समधिकशीतपरिरहितोऽपि तुषारयुक्तः शीतसमन्वितः। सम्पन्नशस्यः सम्पन्नानि समुद्भूतानि शस्यानि यत्र तादृशः कालः, प्रशस्ततर इति शेषः। इति कालसम्पत्, निर्दिष्टा

इत्यर्थः। सजलाम्बुजालः इत्यत्र सजलोऽम्बुदोऽसौ इति, नात्युष्णवर्षोऽपि तुषारयुक्त इत्यत्र नात्युष्णवर्षोऽप्यतुषारयुक्त इति पाठान्तरम्। नात्युष्ण-घर्मातितुषारयुक्तः इत्येवं पाठः संगच्छते। १६ स० ३६ श्लो०॥ ३६॥

रात्राविति। अनुकूलप्रतिकूलयोः कालयोर्गुणदोषानाह, रात्राविति। उलूकः पेचकः रात्रौ काकं वायसं विनिहन्ति विनाशयति। रजनीव्यपाये दिवसे काकोऽपि उलूकं विनिहन्ति। इति हेतोः कालम् आत्मबलानुकूल-समयं प्रसमीक्ष्य पर्यालोच्य यायात् युद्धयात्रां कुर्यात्। यतः इह जगति काले उपयोगिसमये समीहितानि अभिलषितानि, पृथिवीलाभपालनादीनि फलन्ति सफलानि भवन्ति। काले फलन्तीह इत्यत्र काले भवन्तीह इति पाठान्तरम्। १६ स० ३७ श्लो०॥ ३७॥

कालबलाबलमभिधाय देशबलाबलमाह, श्वा नक्रमिति। श्वा कुक्कुरः कूलसंस्थं तीरस्थितं नक्रं कुम्भीरम् आकर्षति आक्रामति। नक्रश्च सलिलाभ्यु-पेतं जलेऽवतीर्णं श्वानम् आकर्षति। एवं देशस्थितः अनुकूलस्थानस्थः आय-च्छमानः उद्योगं कुर्वन्। विजिगीषुरिति शेषः। ध्रुवं निश्चयं कर्म्मफलोप-भोगं कर्म्मणः प्रयाणादिकस्य यत् फलं पृथ्वीलाभादिकं तस्य उपभोगम् उपैति प्राप्नोति। कर्म्मफलोपभोगम् इत्यत्र कर्म्मबलोपभोगम् इति मु० पाठः। १६ स० ३८ श्लो०॥ ३८॥

समविषममिश्रदेशेषु यानक्रममाह, सममिति। समं समतलदेशं मधु-रासदृशं तुरगैः अश्वप्रधानबलैः गच्छेत्। तथा विषमं निम्नोन्नतं सङ्कटमि-त्यर्थः। देशं नागैः गजप्रधानबलैः। तथा जलाढ्यं जलप्रधानं देशमुपद्वीप-प्रायद्वीपादिकं नावारूढैः जलयानपूर्णबलैः, तथा समहीधरं पर्व्वतप्रधानदेशं नागरूढैः द्विरदपूर्णबलैः गच्छेत्। अथवा समहीधरं जलाढ्यं देशं नावारूढैः नागरूढैश्च बलैः गच्छेत् इत्यन्वयः। मिश्रं देशं च यथाबलं बलानुसारेण प्रसमीक्ष्य पर्यालोच्य गच्छेत्। नावारूढैर्नागरूढैश्च गच्छेत् इत्यत्र नागारूढं पद्मबलानुपेतैः इति मु० पाठः। १६ स० ३९ श्लो०॥ ३९॥

मरुप्रगाढ़मिति। मरुप्रगाढ़म् अतिनिर्जलं देशम्। तोये पतति पर्ज्जन्ये

वर्धति सति। जलसौकर्य्यार्थमित्यर्थः। ग्रीष्मे ग्रीष्मसमये, अनूपोदककक्षदुर्गम् अनुगता आपो यत्र स्थाने तस्य उदकैः सलिलैः कक्षैस्तृणगुल्मादिभिः दुर्गं दुःखेन गमनीयं देशम्. तथा शिशिरम् अनूपत्वमरुत्वादियुक्तं देशं संवीक्ष्य विचार्य्य यथासुखं सुखानतिक्रमेण नरेन्द्रः विजयाय गच्छेत्। १९ स० ४० श्लो० ॥ ४० ॥

एतदेव द्रढ़यति, न चातितोयमिति। न च अतितोयं बहुजलं, गमनविघ्नहेतुत्वात्। न च तोयहीनं पिपासाबाधभयात्। यवसैः तृणादिभिः अश्वगजादिभक्ष्योपयोगिभिः, इन्धनेन काष्ठेन पाकोपयोगिना युक्तं मार्गं पन्थानम् उपेत्य अवलम्ब्य। बहुभिः बहुसङ्ख्यकैः तक्षैः कारुकरैः शिल्पजीविभिरित्यर्थः। युक्तः समेतः सन् सुखप्रयाणैः सुखं क्लेशहीनं प्रयाणं येषां ते, तैः सैन्यैरित्यर्थः। रिपुं यातव्यशत्रुम् उपेयात् यायात्। बहुतक्षयुक्त इत्यत्र बहुतज्ज्ञयुक्त इति पाठे, तं मार्गं जानन्ति ये ते तज्ज्ञाः इत्यर्थः। सुखप्रयाणैरित्यत्र सुखप्रयोगैरिति पाठान्तरम्। १९ स० ४१ श्लो० ॥ ४१ ॥

सुवीवधासारमिति। सु शोभनौ वीवधासारौ यत्र तम्। वीवधः धनधान्यादेः प्राप्तिः, आसारः सुहृद्बलम्। उपेततोयम् उपेतं युक्तं तोयं यत्र, स्नानपानाद्युपयोगिजलसमन्वितमित्यर्थः। विश्वासिभिः विश्वस्तैः अनुजीविभिरित्यर्थः। आप्तजलं आप्तम् आयत्तीकृतं जलं यत्र तम्। अन्यथा कूपादौ विपक्षकृतविषप्रयोगेण प्रत्यावर्त्तनकाले तज्जलपायिसैन्यविनाशसम्भवः। विशुद्धं चरादिभिः कृतशोधनम्। तस्मात्तमेव तावत्परिमाणमेव द्विषतां शत्रूणां मार्गं पन्थानम् उपेयात् गच्छेत्, यस्मात् पथः, आर्त्तः शत्रुकृतोपद्रवेण विपन्नः सन् न अपयानं पलायनं कुर्य्यात्। विश्वासिताप्तजलमिति पाठे स एवार्थः। १९ स० ४२ श्लो० ॥ ४२ ॥

एतदतिक्रमे दोषमाह, ये दूरमार्गमिति। ये मूढाः विपक्षभूपालाधिकृतदेशमार्गानभिज्ञाः परामर्शरहिता वा रिपूणां शत्रूणां भूमिम् अधिकृतदेशम् अविचार्य्य अपरिज्ञाय सहसा हठात् दूरगाम्यां दूरतरप्रदेशे यात्रां विशन्ति आश्रयन्ति। दूरमार्गमिति पाठे तु, ये अभियोक्तारः दूरमार्गम्

अभिहितप्रमाणाधिकभूमिम् इत्यर्थः। अयत्नसाध्याः सुखसाध्यास्ते अचिरेण शीघ्रमेव तेषां शत्रूणां खड्गधारापरिष्वङ्गं खड्गधाराया आलिङ्गनात् मृत्युं यान्ति प्राप्नुवन्तीत्यर्थः। १६ स० ४३ श्लो०॥ ४३॥

यथास्थानसंस्थापितबलस्य तु मार्गेऽपि शयनकल्प इत्याह, मार्ग इति। मार्गे प्रयाणस्य पथि, दुर्गे जलपर्व्वतवनादिभिर्यो दुर्गप्रदेशः तत्र विनिविष्टं सन्निविष्टं सैन्यं यस्य सः। विधिवत् यथाविधानं विधिम् आत्मरक्षायाः परावस्कन्दस्य च विधिं विधानं जानाति यः सः। सन्नद्ध-पार्श्वस्थित-वीरयोधः सन्नद्धाः सर्व्वदा बद्धपरिकराः, कृतसंग्रामसज्जा इत्यर्थः। पार्श्वस्थिताः आत्मनः नगरस्य च सन्निहितप्रदेशावस्थायिनः वीराः संग्रामकौशलाभिज्ञाः संग्रामेऽपराङ्मुखाश्च योधाः युद्धविद्याविशारदाः यस्य सः। तादृशो विजिगीषुः रक्षां सर्व्वत्र आत्मरक्षोपायम् विधाय सुसम्पाद्य साध्वीम् उत्तमां सुखयोगनिद्रां सुखयोगेन सुखसङ्गेन निद्राम् अत्याहित-भयाशङ्कापरिशून्यतया उद्वेगराहित्यं सेवेत। अथवा साध्वीं निर्द्दिष्टरात्रियाममानान्न्यूनानधिकां सुखयोगनिद्रां सुखयोगेन निद्रां सेवेत स्वीकुर्य्यात्। अथवा सुखेन योगनिद्रां योगीव निद्रावसरे सचेतन इत्यर्थः। सुखयोगनिद्रामित्यत्र निशि योगनिद्रामिति पाठे स एवार्थः। १६ स० ४४ श्लो०॥ ४४॥

भ्रमत्तुरङ्गद्विरदेन्द्रक्रेषाघण्टास्वनासादितकर्णरन्ध्रः।
तदन्तरालप्रतिबोधवर्त्ती के जाग्रतीत्यादरमाद्रियेत॥ ४५॥ इति।

निशि राजावासपार्श्वतो भ्रमन्तः परिवर्त्तमानाः ये तुरङ्गाः अश्वाः, द्विरदेन्द्रा मातङ्गश्रेष्ठाः, तेषां यथाक्रमं क्रेषाणां क्रेषितानां घण्टानां गजकण्ठलम्बितवृहद्घण्टानां च स्वनेन रवेण आसादितं स्पृष्टं कर्णरन्ध्रं श्रवणविवरं यस्य विजिगीषोः सः, तथा तदन्तराले तस्य क्रेषादिरवस्य अन्तराले मध्ये प्रतिबोधवर्त्ती प्रतिबोधे जागरणे वर्त्तते योऽसौ निद्राच्छेदवर्त्तीत्यर्थः। के जाग्रति? के यामिकपुरुषाः जाग्रति प्रतिबोधवर्त्तिनो वर्त्तन्ते, एवंविधप्रश्नपूर्व्वकम् आदरं समादरपूर्व्वकम् आद्रियेत भूयोभूयः पृच्छेदित्यर्थः। क्रेषा इत्यत्र हेषामिति, तदन्तरालप्रतिबोधवर्त्ती इत्यत्र

सदन्तरा च प्रतियोधवत्ताम् इति च पाठान्तरम्। १६ स० ४५ श्लो०॥ ४५॥

तत इति। ततो निशायमने प्रबुद्धः जागरितः, शुचिः कृतशौचक्रियः। इष्टदेवः पूजितेष्टदेवतः। श्रीमद्विभूषोज्ज्वलितः श्रीमतीभिः शोभासम्पादिकाभिः विभूषाभिः परिच्छदालङ्कारैः उज्ज्वलितः दीप्यमानः। प्रहृष्टः सर्व्वदा सहर्षमनाः। विजिगीषुरित्यर्थः। मन्त्रिप्रवरैः सचिवप्रधानैः पुरोहितामात्यसुहृद्भिश्च यथावत् यथाविधि सेवेत। एतैः सह विजिगीषुर्यात्रार्थं निरूपयेदिति तात्पर्य्यम्। १६ स० ४६ श्लो० ॥ ४६॥

कर्त्तव्यतामिति। तैः पुरोहितामात्यादिभिः सह कर्त्तव्यतां करणीयं यत् तत् सम्प्रधार्य्य निर्णीय विचित्रयानं विचित्राणि यानानि युग्यवाहनानि यस्मिन् तादृशं यानं रथादिकं समास्थाय आरुह्य कुलोद्गतैः कुलक्रमादागतैः आत्मतुल्यैः आत्मसदृशैः विश्वस्तैरित्यर्थः। शस्त्रिभिः शस्त्रधारिपुरुषैः परिवारितः परिवेष्टितः सन् बहिः निरोयात् निर्गच्छेत्। सम्प्रधार्य्य इत्यत्र संविचार्य्य इति, विचित्रयानमित्यत्र विचित्रयान इति, शस्त्रिभिरित्यत्र पत्तिभिरिति, आत्मतुल्यैरित्यत्र इष्टतुल्यैरिति पाठान्तरम्। १६ स० ४७ श्लो० ॥ ४७॥

विजिगीषोरवश्यकर्त्तव्यं कर्म्माह, पश्येदिति। स्वैरं विजिगीषुः हस्तिरथाश्वचर्य्यां हस्तिनां रथानाम् अश्वानां च चर्य्यां गतिं, तथा सामूहिकं व्यूहरचनाधिष्ठितं योधगणं योद्धृपुरुषसमूहं, पृथक् प्रत्येकं योधवृन्दञ्च, तथा विवल्गितान् परीक्षार्थम् इतस्ततः विधावमानान् संग्रामसज्जादिसमेतान् संग्रामनैपुण्यप्रदर्शिनश्च द्विरदेन्द्रमुख्यान् प्रधानमातङ्गान् तुरङ्गमान् अश्वांश्च पश्येत् निरीक्षेत॥ हस्तिरथाश्वचर्य्याम् इत्यत्र हस्तिरथांश्च चर्य्यान् इति पाठान्तरम्। १६ स० ४८ श्लो० ॥ ४८॥

सुखोपगम्य इति। सुखोपगम्यः सुखेन उपगम्यते सेवार्थमित्यर्थः। स्मितपूर्व्वभाषी स्मितपूर्व्वम् ईषद्धास्यपूर्व्वकं भाषते योऽसौ मधुरभाषीत्यर्थः। एवंविधो विजिगीषुः प्रियं वदेत् सर्व्वदा प्रियवादी भवेदित्यर्थः। वृत्त्यधिकं च नियमितवृत्त्यतिरिक्तञ्च दद्यात्। एतेन कार्य्यकाले किं भवतीत्याह, प्रियेण प्रियवचनादिना दानेन च वृत्त्यधिकप्रदानेन च संगृहीताः आत्म-

सात्मताः। भक्त्या इति शेषः। भर्त्तरि स्वामिनि, प्रभुकार्य्यसाधनार्थमित्यर्थः। जीवितानि त्वपि प्राणानपि त्यजन्ति। शरीरव्ययेनापि प्रभुकार्य्यं साधयन्तीति भावः। १६ स० ४८ श्लो० ॥ ४६ ॥

सर्व्वत्र अभ्यासेनैव पाटवं भवतीत्याह, रथाश्वेति। रथाश्च अश्वाश्च नावश्च कुञ्जराश्च यानानि च तानि रथाश्वनौकुञ्जरयानानि। तेषु योग्यो निपुणः दक्ष इत्यर्थः। स्यन्दनारोहणे तुरगारोहणे नौकारोहणे गजारोहणे मनुष्यवाह्ययानाद्यारोहणे च कुशल इति भावः। धनुषि चापे धनुर्वेदे इत्यर्थः। प्रगल्भः प्रौढ़ः। नित्यक्रियः नित्या नियता क्रिया कार्य्यानुष्ठानं व्यवसाय इति यावत्। एवंविधस्य स्यात् भवेत्। तथाहि नित्यक्रिया कार्य्येषु नियतव्यापारः सुमेधसां सुबुद्धिजनानां सम्बन्धे दुष्करेऽपि दुःसाध्येऽपि कर्म्मणि कौशलं नैपुण्यम् आदधाति सम्पादयति। तथा चोक्तम्, अभ्यासः कर्म्मणां सम्यमुत्पादयति कौशलमिति। रथाश्वनौकुञ्जरयानयोग्य इत्यत्र रथाश्वनौकुञ्जरयानयोग्य इति मुद्रितपाठे रथादीनां याने परित्यागे योग्यः समर्थः। रथादिकमभ्रेष्य गन्तुं समर्थ इत्यर्थः। रथाश्वनौकुञ्जरयानयोग्या नित्यक्रिया इति पाठे तदुभयपदयोर्विशेष्यविशेषणभावः। १६ स० ५० श्लो० ॥ ५० ॥

सन्नद्धेति। सन्नद्धं सुसज्जितम् उच्चैः महान्तं द्विपं मातङ्गम् आस्थितः आरूढ़ः। तथा सन्नद्धसैन्यानुगतः सन्नद्धैः कृतसन्नाहैः सैन्यैः सेनाभिः अनुगतः अनुयातः। अविकुर्व्वन् विकारपरिवर्ज्जितः। प्रवीरयोधान्तरितेन, प्रवीराः संग्रामकुशलाः योधाः योद्धृपुरुषाः तैः अन्तरितेन व्यवहितेन सामन्तदूतेन। परदूतेन सह शुभभावसम्भावनीयत्वात्। साधुमन्त्रः साधुः सम्यक् मन्त्रः कर्त्तव्यावधारणार्थकथोपकथनं यस्य तादृशस्य सन् यायात् संग्रामे यात्रां कुर्य्यात्। द्विपमित्यत्र द्विषमिति, विकुर्व्वन् इत्यत्र प्रकुर्व्वन् इति, साधुमन्त्र इत्यत्र साधुमन्त्रमिति पाठे मन्त्रं प्रकुर्व्वन् इत्यन्वयः। १६ स० ५१ श्लो० ॥ ५१ ॥

आलोकयेदिति। बुद्धिगुणोपपन्नैः बुद्धेर्गुणाः शुश्रूषाश्रवणग्रहणधारणविज्ञानानुपहततत्त्वाभिनिवेशादयः, तैः उपपन्नैः दान्तैः सुविनीतैः चरैः दूतैः

परप्रचारं परस्य प्रतिद्वन्द्विभूपालस्य प्रचारं प्रयोगादिकम् आलोकयेत् निरूपयेत्। यतः एतैः सर्वविधबुद्धिगुणोपपन्नैश्चरैरित्यर्थः। विमुक्तो निरहितः क्षितीन्द्रो राजा अनेत्रैः नयनविरहितैः जनैः समानधर्म्मा समानगुणो भवति, अन्धवत् भवतीत्यर्थः। दान्तैरित्यत्र सर्व्वैरिति, परप्रचारमित्यत्र परायचारमिति पाठान्तरम्। १६ स० ५२ श्लो० ॥ ५२ ॥

यथा पद्मनालेन कश्चित् सलिलमादत्ते तथा प्रलोभनादिद्वारा परिगृहीतदण्डनायकेन प्रभोरन्तःसारमाददीत इत्याह, विलोभयन्निति। विलोभयन्, भवन्तं राष्ट्रस्वामिनं करिष्यामीति आशाजनकवचनेन प्रलोभयन्। किञ्चिदपि अल्पमात्रं प्रयच्छन् ददत्। बहुदानेन विपक्षप्रयुक्तिसम्भावना माभूत् इति तात्पर्यम्। द्विषतः विपक्षस्य अन्तपालं राज्यप्रान्तरक्षायां नियुक्तं दण्डनायकं मित्रं स्वायत्तं कुर्व्वीत विदध्यात्। हि यतः पण्यैः किञ्चिद्दानपूर्व्वकाशाप्रदानरूपमूल्यैः तन्नालिकया अन्तपालरूपनालेन द्विषतः प्रभोः राष्ट्रात् राज्यात् अभीक्ष्णं बहुपरिमाणं प्रपण्यं बहुमूल्यं वस्तु आददीत गृह्णीयात् आकर्षेत् इत्यर्थः। द्विषतोऽन्तपालम् इत्यत्र क्वचित् पुस्तके द्विषतां स्वपालं, क्वचित् पुस्तके द्विषतोऽप्रपालं, मु० पुस्तके द्विषतो न पानम् इत्येवं पाठो दृश्यते। कुर्व्वीत इत्यत्र गृह्णीत इति, तन्नालिकया इत्यत्र तन्नाडिकया इति पाठान्तरम्। १६ स० ५३ श्लो० ॥ ५३ ॥

उपक्रममिति। दूतोपयानात् दूतस्य चारस्य उपयानात् उपस्थितेः क्रियमाणसन्धिः अनुलीयमानः सन्धिर्येन तादृशः सन्, सन्ध्यनुरागं कुर्व्वन् इत्यर्थः। आशु अविलम्बितमेव वाञ्छितम् अभिप्रेतम् उपक्रमं चेष्टितं कुर्यात् विदध्यात्। स चेत् प्रतिपक्षश्चेत् विसन्धिः सन्धिविघटको भवतीत्यर्थः। स तु तस्य यातव्यस्य भेदः कृतो भवति। तेन आत्मसमुच्छ्रयश्च आत्मनः समुन्नतिश्च भवति। स चेद्विसन्धिः स तु तस्य भेदः इत्यत्र स चेद्विसन्धिर्न हि तत्र भेदः इति मु० पाठः। १६ स० ५४ श्लो० ॥ ५४ ॥

दौर्गान् इत्यादि। पथिषु प्रयाणमार्गेषु दौर्गान् दुर्गपालान्, आटविकान् अटवीपालान्, अन्तपालान् राज्यप्रान्तरक्षकभूमिपान्, दानवता

साम्ना वक्ष्यमाणलक्षणेन दानेन साम्ना च संश्लेषयेत् आत्मनि विश्लेषयेत् विजिगीषुरिति शेषः। विरुद्धदेशेषु एकायनमार्गादिषु, तन्निरोधे यातव्यकृत-निरोधे सति, ते च स्वायत्तीकृतदुर्गपालादयश्च अस्य विजिगीषोः मार्गोपदिशः मार्गं पन्थानं उपदिशन्ति दर्शयन्ति ये ते तादृशाः मार्गोपदेशदातारो भवन्ति ॥ १६ स० ५५ श्लो० ॥ ५५ ॥

अकारणादिति। 'अकारणात्' परित्यागकारणं विनैव, 'कारणात्' क्रोधादिहेतोः, 'वा', 'यः कश्चित् अरिसेवी' शत्रुसेवकः, 'पुरुषः', 'एति' आयाति, शत्रुपक्षं परित्यज्य सेवार्थमुपगच्छति, 'तस्य', तथा कश्चित् 'निजः' आत्मीयः, भृत्य इति शेषः। 'विश्लिष्टः' परित्यक्ताश्रयः सन्, 'शत्रुं' प्रतिपक्षभूपम्, 'उपेत्य', 'आयाति' पुनराश्रयार्थमागच्छति, 'तस्य', 'गतिं' चेष्टितं, 'प्रपश्येत्' निरीक्षेत्। "य एति कश्चित् पुरुषोऽरिसेवी। निजश्च विश्लिष्ट उपेत्य शत्रुं" इत्ययं हस्तलिखितपुस्तकपाठः समीचीनः। "य एव कश्चित् पुरुषोऽरिसेवी। निजश्च विश्लिष्ट उपेतशत्रुः" इत्ययं मुद्रितपुस्तकपाठो न समीचीनत्वेन प्रतिभाति ॥ १६ स० ५६ श्लो० ॥ ५६ ॥

बाहुबलात् मन्त्रबलं गरीयः इत्याह, आरिप्सुनेति। 'आरिप्सुना' संग्रामादिप्रयोगोपक्रमवता, 'मन्त्रबलान्वितेन' मन्त्रबलयुक्तेन, विजिगीषुणा इति शेषः। 'प्रागेव' प्रयोगात् प्रथममेव, 'निपुणं' यथा तथा 'विचारः' मन्त्रणापूर्व्वकेतिकर्त्तव्यतानिरूपणं, 'कार्य्यः' विधेयः। यतः 'दोर्भ्यां' दोर्दण्डाभ्यां, 'बलात्', 'मन्त्रबलं', 'गरीयः' श्रेष्ठतरं। तथा च कौटिल्यः "एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता। प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि" इति। तथा च 'शुक्रः' दैत्यगुरुः, 'मन्त्रबलात्' मृतसञ्जीवन्या विद्यया, 'सुरान्' देवान्, 'विजिग्ये' जितवान्। 'शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये' इति पाठे शक्रो देवराजः बृहस्पतिना मन्त्रयित्वा तद्विद्यामुपलभ्य असुरान् जिगाय इति पौराणिकी वार्त्ताऽत्रानुसन्धेया ॥ १६ स० ५७ श्लो० ॥ ५७ ॥

सम्यगनुष्ठितमपि कार्य्यं कालातिक्रमे न सिद्ध्यतीति दर्शयन्नाह, मनीषयेति। 'फलाय' प्रयोगफलसिद्धये, 'नयवित्' नीतिशास्त्रज्ञः, 'परं' उत्कृष्टं,

'उद्यमं' उद्योगं, 'आस्थितः' आश्रितः, सन्, 'निर्म्मलया', 'मनीषया' बुद्ध्या, 'विलोकितं' पर्य्यालोचितं, 'अकालहीनं' 'अकालेन' अयथासमयेन, 'हीनं' 'परिहीयमाणं' 'कर्म्म' सन्धिविग्रहादिरूपं कार्य्यं, 'समाचरेत्'। 'हि' यतः, 'अकालः' अनवसरः, 'नियतं' निश्चयेन, 'फलं' प्रयोगफलं, 'ग्रदस्यति', निराकरोति। 'अकाले' इतिमुद्रितपुस्तकपाठे फलं इति कर्त्तृपदं, 'अदस्यति' विच्छिन्नं भवति इत्यर्थः॥ १६ स० ५८ श्लो०॥५८॥

उपसंहरन्नाह, प्रभावितानामिति। 'प्रभावितानां' प्रभावयुक्तानां, 'श्रुतशौर्य्यशालिनां' 'श्रुतं' साङ्गोपाङ्गवेदाध्ययनं, 'शौर्य्यं' शूरत्वं, ताभ्यां, शालन्ते ये ते तेषां। 'यथावत्' यथाविधि, 'आलोकिते' शास्त्रेण प्रदर्शिते, 'मार्गे' पथि, 'चरन्ति' तिष्ठन्ति, ये ते तेषां। 'उन्नतात्मनां' 'उन्नतः' उच्छ्रितः, आत्मा येषां ते तेषां। 'भुजङ्गदीर्घेषु' भुजङ्गमवत् आयतेषु, 'भुजेषु' बाहुषु, 'दैवी' देवतासम्बन्धिनी, 'द्युतिः' प्रभा, 'चिराय' निरन्तरं, 'लभ्यते' सम्बध्यते, एवम्भूता विजिगीषवः देवसमाना अप्रतिहतवीर्य्या भवन्तीत्यर्थः॥ १६ स० ५६ श्लो०॥५६॥

यात्राकालमाह, समुदितेति। 'समुदिता' सम्यग् गुप्ता, अथवा समुद्भूता, 'नराणां' योधपुरुषाणां, 'सम्पत्' सम्पत्तिः, यस्य विजिगीषोः स तथा 'उद्युक्तशक्तिः' उद्योगशीलः, 'उद्भूतशक्तिरिति पाठे 'उद्भूता' उत्पन्ना, 'शक्तिः' सैन्यानां वर्द्धनोपायः, यस्य सः। उद्भूतशक्तिरिति पाठे शक्तिसम्पन्न इत्यर्थः। 'नरपतिः' विजिगीषुः, 'भूरिसम्पन्नशस्ये' परिपक्वबहुशस्यसमये, शरत्काले इत्यर्थः। 'विगतसलिलपङ्के' जलकर्दमरहितसमये वा, हैमन्तादावित्यर्थः। 'कुसुमितसहकारश्रीज्वलत्कानने वा' 'कुसुमितानां' मञ्जरितानां, 'सहकाराणां' चूततरूणां, 'श्रिया' लक्ष्म्या, 'ज्वलन्ति' भास्वराणि भवन्ति, 'काननानि' उद्यानानि, यस्मिन्, वसन्त इत्यर्थः, 'काले', 'जयाय' विपक्षविजयार्थं, साधु यथा तथा 'अरिभूमिं' विपक्षाधिकारं, 'गच्छेत्' यायात्। १६ स० ६० श्लो०॥ ६०॥

इत्येवं यानं सिध्यतीत्युपसंहरन्नाह, इतीति। 'नरपतिः' विजिगीषुः,

'इति' अनेन प्रकारेण, 'आहितादरः सन्' कृतप्रयत्नः सन्, 'परं' शत्रुं, 'अभियोक्तुमनाः' 'अभियोक्तुं' अभिभवितुं, मनो यस्य तादृशः सन्, 'समुत्पतेत्' यातव्यं यायात्, 'इतिविधिविषयोपसेवनेन' 'इति' एवंविधानां, 'विधीनां' नीतिशास्त्रनिर्दिष्टविधानानां, 'विषयाणां' योधपुरुष-दूत-हस्त्यश्व-रथादीनां, 'उपसेवनेन' पालनेन, 'अरातिः' शत्रुः, 'नियतं' निश्चयमेव, 'गोचरं' अधीनतां, 'उपैति' । 'इतिविधिविषयोपसेवनेन नियतमरातिरुपैति गोचरत्वं' इत्यत्र 'इतिकृतविषयोपसेवमानो नियतमरातिरुपैति गोचरं स्वं' इति मुद्रितपुस्तकपाठे तु 'इति' अनया पूर्व्वोक्तरीत्याऽऽनीयः, 'कृतः' उद्दिष्टः, 'विषयः' अधिकारः, यस्य सः अतएव 'उपसेवमानः' भृत्यवत् प्रणामादिना सेवां कुर्व्वन्, 'अरातिः' शत्रुः, 'नियतं' निश्चयं, 'स्वं गोचरं' निजाधीनतां, 'उपैति' गच्छति, 'इतिविधिविषयोपसेवनेन' इत्यत्र 'इतिविधिविषयोपसेवनेन' इति 'इतिविधिविषयोपसेवनात्' इति च पाठः पुस्तकद्वये दृश्यते । १६ अ० ६१ श्लो० । ६१ ।

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानुसारिण्यां षोड़शः सर्गः ।

मुद्रितपुस्तकानुसारेण पञ्चदशः सर्गः ॥

## अथ सप्तदशः सर्गः॥

मुद्रितपुस्तकानुसारेण षोड़शः सर्गः॥

यानानन्तरं साङ्ग्रामिकस्कन्धावारसन्निवेशमाह, यायादिति। 'वैरि-पुराभ्यासं' शत्रुनगरोपकण्ठं, अथवा यानस्थशिविरसमीपं, 'यायात्' पूर्व्वोक्तरीत्या गच्छेत्, विजिगीषुरिति शेषः। पश्चात् 'साधुसम्मते' 'साधूनां' वास्तुविद्याविदां, 'सम्मते' अभिप्रेते, 'भूभागे' व्यास्तरक्षणोपयोगिप्रदेशे इत्यर्थः। 'स्कन्धावारनिवेशज्ञैः' 'स्कन्धावारस्य' सेनासन्निवेशस्य, 'निवेशज्ञैः' निर्माणकुशलैः, शिल्पविद्याविशारदपुरुषैरित्यर्थः। 'स्कन्धावारं' सेनानिवेशस्थानं, 'निवेशयेत्' निर्मापयेत्. १७ स० १ श्लो० ॥१॥

स्कन्धावारनिवेशप्रणालीमाह, चतुरस्रमिति। 'चतुरस्रं' समचतुष्कोणं, 'चतुर्द्वारं' दिक्चतुष्टये द्वारचतुष्टयभूषितमित्यर्थः। 'नाति-विस्तारसङ्कटं' नातिविस्तृतं, नाप्यतिसङ्कीर्णमित्यर्थः। 'महाप्रतोलीप्राकारं' 'महत्यः' सुदीर्घाः, 'प्रतोल्यः' अभ्यन्तरमार्गाः, दुर्गद्वाराणि वा, 'प्राकाराः' प्राचीराश्च, यस्य तं। 'महापरिखया' 'महत्या' दुरतिक्रमणीयया, 'परि-खया' नगरादिवेष्टनखातेन, 'वृतं' परिवृतं। परिखालक्षणं यथा ब्रह्म-वैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे २०२ अध्याये 'प्रस्थे च परिखामानं शतहस्त-प्रमाणकं। परितः शिविराणाञ्च गम्भीरं दशहस्तकं"। "सङ्केतपूर्व्वकञ्चैव परिखाद्वारमीप्सितं। अन्येषाम्‌ भिन्नस्य गम्यमेव सुखेन च"। इति। १७ स० २ श्लो० ॥२॥

शृङ्गाटमिति। 'भूमिप्रदेशसामर्थ्यात्' 'भूमेः' मृत्तिकायाः, 'प्रदेशस्य' स्थानस्य च, 'सामर्थ्यात्' व्यानुगुण्येन, 'व्यागारं' तन्मध्यपटावाससन्निवेशं 'शृङ्गाटं' त्रिकोणाकारं, 'अर्द्धचन्द्रं वा' अर्द्धचन्द्राकारं वा, 'मण्डलं वा' गोलाकारं वा, 'दीर्घं वा' दीर्घाकारं वा, 'उपकल्पयेत्' रचयेत्, 'शृङ्गाट-

मर्द्धचन्द्रं वा' इत्यत्र 'शृङ्गाटकार्द्धचन्द्रं वा' इति पाठे 'शृङ्गारकार्द्धचन्द्रं वा' इति च पाठे स एवार्थः । शृङ्गाट-शृङ्गाटक-शृङ्गार-शृङ्गारक शब्देन त्रिकोणाकारोऽभिधीयते ॥ १७ स० ३ श्लो० ॥ ३ ॥

सेनासन्निवेशप्रणालीमाह, विविक्तैरिति । 'विविक्तैः' विरलैः, न तु सङ्कीर्णैः । 'विभक्तैः' यथास्थानं पृथक् पृथक् संस्थापितैः । 'चायतैः' दीर्घैः, 'पटाकारैः' वस्त्रमयैः, 'शृङ्गैः' शिखरैः, पटमण्डपैरित्यर्थः । 'चन्वितं' युक्तं, 'गुप्तकक्षं' 'गुप्ताः' गूढाः, सुरक्षिता वा, 'कक्षाः' सेनानिवेशान्तरालानि, यस्य तं । 'महामार्गसमावृतं' चतुर्द्वारत्वात् द्वारचतुष्टयस्पृशा चतुर्विधेन 'महामार्गेण' सुप्रशस्तमार्गेण, 'समावृतं' व्याप्तं ॥ १७ स० ४ श्लो० ॥ ४ ॥

राजगृहसन्निवेशमाह, तस्य मध्ये इति । 'तस्य' स्कन्धावारस्य, 'मध्ये', 'मनोज्ञादि' चित्तप्रसादजनकं, 'महामौलबलावृतं' 'महद्भिः' 'मौलबलैः' भूरिपरिमाणान्तरङ्गयोधपुरुषैः, 'आवृतं' परिवृतं । 'अन्तःकोषगृहोपेतं' 'अन्तः' मध्ये, 'कोषगृहेण' धनागारेण, 'उपेतं' युक्तं । कोषाधीनो हि राजा इति अयहितः कोषो न विधेयः इति । 'राजमन्दिरं' नरपतिगृहं, 'कारयेत्' स्थापयेत् ॥ १७ स० ५ श्लो० ॥ ५ ॥

बलानां सन्निवेशमाह, मौलभृत्यकमिति । 'राजहर्म्यं' राजगृहं, 'समावृत्य' वेष्टयित्वा, 'क्रमेण' यथाक्रमं, 'मौलभृत्यं' पुरुषानुक्रमेण वेतनभोगिसैन्यं । ततः 'श्रेणि' श्रेणिबलं, पृथक्‌पृथक्‌जनतया सहवेतनभोगिवर्ग इत्यर्थः । तद्बहिः 'सुहृत्' मित्रबलं, तद्बाह्ये 'द्विषत्' शत्रुबलं । तद्बहिः 'आटविकं' अटवीपालीनां बलं, एतत् पञ्चविधं बलं 'विनिवेशयेत्' स्थापयेत् ॥ १७ स० ६ श्लो० ॥ ६ ॥

अन्ते चेति । 'अन्ते च' स्कन्धावारप्रान्तभागे च, सर्वदिक्षु इत्यर्थः । 'दर्शप्रवेतनान्' प्रार्थनाधिकवृत्तिप्रदानेनात्मसात्कृतान्, अत एव 'स्वामान्' निर्वाहभूमिमधिरूढान्, 'अगणितान्' असंख्यान्, 'दुष्टकर्माण' क्रूरकार्यनियतान्, 'क्रूरान्' खलान, 'लुब्धकान्' कोभिन, 'मण्डलेन' परितोमण्डलाकारेण, 'निवेशयेत्' स्थापयेत् ॥ १७ स० ७ श्लो० ॥ ७ ॥

हस्तिन इति। 'लब्धनामानः' संग्रामे विख्याताः, तादृशाः 'मनोजवाः' वातरयाः, 'तुरङ्गाः' अश्वाः, 'साधुरचिताः' विश्वस्तपुरुषैः पालिताः सन्तः, 'नृपतेः' भूपालस्य, 'गृहोपकण्ठे' राजमन्दिरसन्निधौ, 'वसेयुः' तिष्ठेयुः॥ १७ स० ८ श्लो० ॥ ८॥

अन्तर्वंशिकसैन्यमिति। 'अन्तर्वंशः' राज्ञः पुत्रदारं, तत्र नियुक्तं सैन्यं 'अन्तर्वंशिकसैन्यं,' 'यामवृत्त्या' 'यामः' अहोरात्राष्टमभागः, तत्र सावधानत्वेनावस्थितिः 'यामवृत्तिः' तत्पर्यायेण इत्यर्थः। 'रात्रिन्दिवं' अहोरात्रं, 'सुसन्नद्धं' कृतसन्नाहं, संग्रामसज्जया सज्जितमित्यर्थः। 'उदायुधं' उद्यतशस्त्रं, च सत् 'राजाभिगुप्तये' नरपतिशरीररक्षार्थे, 'तिष्ठेत्'। 'अन्तर्वंशिकसैन्यमित्यत्र' 'अन्तर्वंशिकसैन्यं' इति 'अन्तर्वासकसैन्यमिति च' पाठान्तरं॥ १७ स० ९ श्लो० ॥ ९॥

युद्धयोग्य इति। स्पष्टः श्लोकार्थः॥ १७ स० १० श्लो० ॥ १०॥

सैन्यैकदेश इति। 'सेनापतिपुरःसरः' 'सेनापतिः' सेनानीः, 'पुरःसरः' अग्रसरः, यस्य तादृशः। 'सन्नद्धः' कृतसन्नाहः, 'सैन्यैकदेशः' बलैकभागः, 'प्रयत्नवान्' अवहितः, सन्, 'निशि' रात्रिकाले, 'वहिः' स्कन्धावारस्य सर्व्वदिक्षु, 'परिचरेत्' परिभ्रमेत्। 'प्रयत्नवान् परिचरेत्' इत्यत्र 'प्रपन्नवान् परियतेत्' इति मुद्रितपुस्तकपाठः॥ १७ स० ११ श्लो० ॥ ११॥

परसैन्येति। 'सन्नद्धाः' कृतसंग्रामवेशाः, 'वाताश्वकाः' पवनवद्वेगशालितुरङ्गमारूढाः, अतएव 'शीघ्रपातिनः' द्रुतगामिनः, 'दूरसीमान्तपातिनः' दूरस्थिताक्रान्तभूभागप्रान्तपर्यन्तचारिणः, पुरुषा इति शेषः 'परसैन्यप्रचारं' शत्रुसैन्यानां गतिविधिं, 'विजानीयुः'। 'दूरसीमान्तपातिनः' इत्यत्र 'दूरसीमान्तचारिणः' इति पाठान्तरं॥ १७ स० १२ श्लो० ॥ १२॥

तोरणेति। 'तोरणेषु' वहिर्द्वारचतुष्टयशिखरेषु, 'आवद्धानि' विन्यस्तानि, 'माल्यानि' पुष्पमालाः नवपल्लवमालाश्च, येषां तेषु। 'यन्त्रवत्सु' यम्यते संयम्यते अनेनेति 'यन्त्रं' प्राकृतिकसाधनं, तद्वत्सु, विपक्षाणां

दुष्प्रवेशेषु इत्यर्थः। 'पताकिषु' पताकामण्डितेषु, 'द्वारेषु' बहिर्द्वारचतुष्टयेषु, 'व्याप्तकारिभिः' 'व्याप्तं' हितं, कर्त्तुं शीलं येषां तैः, पुरुषैरिति शेषः। 'परमां गुप्तिं' सर्व्वतोभावेन रक्षां, 'कारयेत्' ॥ १७ स० १३ श्लो० ॥ १३ ॥

निर्गच्छेदिति। 'सर्व्वएव' जनः, 'उपलक्षितः' द्वाररक्षकपुरुषैः परिदृष्टः, सन्, 'निर्गच्छेत्' स्कन्धावारात् बहिर्गच्छेत्, 'विशेच्चापि'। 'परदूताश्च', 'राजशासनगोचराः' राजादेशावकाशाः, सन्तः, 'तिष्ठेयुः' ॥ १७ स० १४ श्लो० ॥ १४ ॥

वृथेति। 'जनः' स्कन्धावारस्थितः सर्व्वएव लोकः, 'वृथाकोलाहलात्' अकारणकलहात्, 'हास्यात्' हास्यपरिहासात्, 'द्यूतात्' अक्षक्रीड़नात्, 'पानाच्च' अपरिमितसुरापानाच्च, 'वारितः' निवारितः, सन्, तथा 'सन्नोपकरणः' सर्व्वदा बद्धपरिकरः उद्यतायुधश्च, तथा 'सर्व्वकार्य्योन्मुखः' अचलन्दप्रतीकारकार्य्योन्मुखः, 'तिष्ठेत्' ॥ १७ स० १५ श्लो० ॥ १५ ॥

बहिरिति। 'खातात्' परिखायाः, 'बहिः' बाह्यप्रदेशे, 'स्वसिद्धानां' शोभनखड्गायुधधानां योधपुरुषाणां, 'व्यायत' विस्तृतं, 'सञ्चारं' प्रचारभूमिं, 'मुक्ता' विहाय, 'परसैन्यविनाशार्थं' शत्रुबलोत्सादनार्थं, 'सर्व्वां भूमिं विनाशयेत्', कण्टकशाखादिभिरिति शेषः। विपक्षसमागममार्गे कुत्रापि लौहकीलकं निखनेत्। कुत्रापि तृणाच्छादितकूपं कारयेत्। कुत्रापि कण्टकशाखा दद्यात्। कुत्रापि कूपजलं विषाक्तं कुर्य्यात्। कुत्रापि सैन्यसंहारकयन्त्रविशेषं सुगुप्तं स्थापयेत् इत्यर्थः ॥ स० १६ श्लो० ॥ १६ ॥

समरभूमिविनाशमाह, क्वचिदिति। 'क्वचित्' कुत्रचित्, 'कण्टकशाखाभिः', 'क्वचित्', 'अयोमुखैः' लौहमयाग्रैः, 'कीलैः' दारुमयशङ्कुभिः, 'क्वचित्', 'प्रच्छदप्रदरैरपि' तृणाच्छादितगर्त्तैरपि, 'परितः भूमिं', 'दूषयेत्' विनाशयेत्। 'कीलैः' इत्यत्र 'शूलैः' इति, 'दूषयेत्' इत्यत्र 'भूषयेत्' इति, 'प्रच्छदप्रदरैरपि' इत्यत्र 'विप्रच्छन्नैः समाहितः' इति पाठान्तरं ॥ १७ स० १७ श्लो० ॥ १७ ॥

स्वसैन्यानां युद्धाभ्यासमाह, निरंचेति। 'वृक्षाः' तरवः, 'क्षुपाः'

इसरच्चाः, 'पाटला' पक्षवाः, 'स्थानवः' शालाहीनरच्चाः, 'वल्मीकः' उपीकाकृतमृत्तिकास्तूपः, 'निर्दरः' गर्त्तः, एते न सन्ति यत्र, तत् स्थाने। 'प्रत्यहं' प्रतिदिनं, 'विचैः' यादृच्छैः, 'कारणैः' उपायैः, 'सैन्यव्यायामं कारयेत्'। 'वल्मीकनिर्दरे' इत्यत्र 'वल्मीकनिर्दवैः' इति मुद्रितपुस्तकपाठः न समीचीनः॥ १७ स० १८ श्लो०॥ १८॥

स्वबलानुकूलं देशमाह, दक्षिन् देश इति। सुगमं। 'परस्य विपरीतश्च' इत्यत्र 'परस्य विपरीतश्च' इति मुद्रितपुस्तकपाठः। १७ स० १९ श्लो०॥१९॥

पश्चाद्वयस्याप्यनुकूलं देशमाह, आत्मनश्चेति। स्पष्टं। 'स मध्यमः समुद्दिष्टः' इत्यत्र 'समध्यमः स उद्दिष्टः' इति मुद्रितपुस्तकपाठः। १७ स० २० श्लो०॥ २०॥

स्वबलप्रतिकूलं देशमाह, अरातिसैन्येति। 'अरातिसैन्यानां' विपक्षबलानां, 'व्यायामे' युद्धानुशीलने, 'सुपर्य्याप्तं' यथेष्टं, 'मह्मीतलं' यस्य सः, 'आत्मनः' निजबलस्य, 'विपरीतश्च' सैन्यव्यायामस्थानशून्य इत्यर्थः। 'यो देशः', 'सः' 'अधमः' निकृष्टः, 'स्मृतः' निर्णीतः। 'अरातिसैन्यव्यायामसुपर्य्याप्त' इत्यत्र "अरातिसैन्यव्यायामसुपर्य्याप्त" इति, "अरातिसैन्यैर्व्यायाममपर्य्याप्त" इति च पाठान्तरं न समीचीनं॥१७ स० २१ श्लो०॥२१॥

अधमदेशं नाश्रयेत् इत्याह, नित्यमिति। प्रथमतः उत्तमदेशं, तदभावे मध्यमदेशं 'आकाङ्क्षेत्'। न तु कदाचिदधमदेशं। यतः बन्धनागारसमोऽयं देशः। अतः 'सिद्धये' जयलाभाय, 'शेषमेवेत' नाश्रयेत्, विजिगीषुरिति शेषः॥ १७ स० २२ श्लो०॥ २२॥

स्कन्धावारस्य दुर्निमित्तमभिधातुमाह, आक्रान्त इति। 'केनापि' अदृश्यमानेन, 'आक्रान्त इव' अवरुद्ध इव, स्कन्धावारः इति यदा विभाव्यते तदा दुर्निमित्तं। तथा 'रोगानीकैरनुद्रुतः' 'रोगानीकैः' व्याधिसैन्यज्वरादिभिः, 'अनुद्रुतः' क्लान्तमदवः, तथा 'अकस्मादुद्वेगः' 'अकस्मात्' कारणं विनैव, 'भवदुद्वेगः' जायमानचित्तक्षोभः, तथा 'राजनीहारसङ्गतः' 'राजभिः' केश्चित् भूपतिभिः, 'नीहारेण' धूमिकया च, 'संहतः' मिलितः,

स्कन्धावारश्चेत् तदापि दुर्निमित्तं। 'अकस्माद्भवदुद्वेगः' इत्यत्र 'अकस्मादुद्भवदुद्वेगः' इति मुद्रितपुस्तकपाठः। १७ स० २३ श्लो०॥ २३॥

विधूत इति। यदा स्कन्धावारः 'परुषैः' प्रचण्डैः, 'वातैः' मरुद्भिः, 'विधूतः' कम्पितः, 'अकस्मात्' कारणं विना, 'पतद्रजाः' पतन्ति रजांसि यस्मिन् स तथा। 'परस्परभवद्घोषः' स्वयमेव परस्परभवद्धिंसः। 'भग्नतूर्यनिस्वनः' विस्वरतूर्यध्वनिः। तदा दुर्निमित्तं ज्ञेयं। 'विधूतपरुषैर्वातैः' इत्यत्र 'विधूतः परुषैर्वातैः' इत्ययं पाठः समीचीनः॥ १७ स० २४ श्लो०॥ २४॥

उत्प्रेक्षितेति। यदा स्कन्धावारः 'उत्प्रेक्षितभयत्रासः' 'उत्प्रेक्षितः' सम्भावितः, भयं त्रासश्च यस्मिन् सः। तथा 'निर्घातोल्काभिदूषितः' 'निर्घातेन' अकस्मादुत्पन्नमहाशब्देन, 'उल्काभिः' गगनात् पतद्रेखाकारतेजःपुञ्जैः, 'अभिदूषितः' आभिमुख्येन दूषितः। 'उद्धूमः' उद्गतो धूमो यस्मात् सः। 'प्रज्वलच्छस्त्रः' प्रज्वलन्ति, शस्त्राणि, यत्र सः। 'विदक्षिणाशिवारुतः', 'विदक्षिणं' प्रतिकूलं, शिवारुतं यस्य सः तथाभूतः, तदा दुर्निमित्तं। १७ स० २५ श्लो० ॥ २५॥

मण्डलैरिति। यदा स्कन्धावारः। 'काक-गृध्राणां मण्डलैः' 'काकानां' वायसानां, 'गृध्राणां' शकुनिविशेषाणां, 'मण्डलैः' समूहैः, 'आकीर्णः' व्याप्तः। 'मण्डलैः' किम्भूतैः 'वज्रवाशिभिः' कर्कशं शब्दायमानैः। 'मुहुः' सर्व्वदा, 'अत्युग्रतादीप्तः' 'अत्युग्रतया' अतिभयानकतया, 'दीप्तः' प्रकाशितः, स्वपक्षेतिशेषः। 'संसिक्तः रक्तवृष्टिभिः' आकाशात् पतिताभिरितिशेषः। तथा च आकाशात् पतिताभिः 'रक्तवृष्टिभिः', 'संसिक्तः' उक्षितः, तदा दुर्निमित्तं॥ १७ स० २६ श्लो० ॥ २६॥

परीतेति। 'क्रूरैः' अशुभसूचकैः, 'औत्पातिकैः' उत्पातजनकैः, 'ग्रहैः' राहुकेत्वादिभिः, 'परीतराजनक्षत्रः' 'परीतं' आक्रान्तं, 'राजनक्षत्रं' स्कन्धावाराधिपतिजन्मनक्षत्रं, यस्य सः। 'सूर्य्यदृष्टकबन्धादिः' 'सूर्य्ये' सूर्य्यमण्डले, 'दृष्टानि' अवलोकितानि, 'कबन्धादीनि' अपमूर्द्धकलेवराणि, यत्र सः।

'अकस्मान्मूढवाहनः' 'अकस्मात्' कारणं विना, 'मूढं' मोहयुक्तं, 'वाहनं', यत्र एवम्भूतः 'स्कन्धावारः', यदा तदा दुर्निमित्तं ॥ १७स०२७श्लो० ।२७।

अकस्मादिति । 'अकस्मात्', 'मत्तमातङ्गप्रशुष्यद्दानशीकरः' 'मत्तमातङ्गानां' मत्तगजानां, 'प्रशुष्यन्तः' शोषं प्राप्नुवन्तः, 'दानशीकराः' मदजलकणाः, यत्र सः । 'इत्यादिविकृतोपेतः' इत्यादिदुर्निमित्तयुक्तः, 'स्कन्धावारः', 'न शस्यते' न प्रशंसनीयः ॥ १७ स० २८ श्लो० ॥ २८ ॥

इदानीं शुभनिमित्तोदयात् शुभं स्कन्धावारं, शुभं युद्धाय कालञ्च दर्शयन्नाह, प्रहृष्टेति। 'प्रहृष्टनरनारीकः' 'प्रहृष्टाः' प्रफुल्लचित्ताः, नरा नार्यश्च यत्र स तथाभूतः । 'प्रशस्तस्वनदुन्दुभिः' 'प्रशस्तस्वनाः' श्रवणमधुरध्वनयः, 'दुन्दुभयः' भेर्य्यः, यत्र स तथाभूतः । 'गम्भीरहेषितहयः' 'गम्भीरहेषिताः' गम्भीरं शब्दायमानाः, 'हयाः' अश्वाः, यत्र स तथाभूतः । शस्तबृंहितकुञ्जरः' 'शस्तबृंहिताः' श्रुतिसुखकरध्वनयः, 'कुञ्जराः' गजाः, यत्र स तथाभूतः । स्कन्धावारः प्रशस्यत इति परेणान्वयः । 'भूजिह्मेद्धबृंहितद्विपः' इति पाठे तु उक्त एवार्थः।'शस्तबृंहितकुञ्जरः' इति मुद्रितपुस्तकपाठस्तु न समीचीनः। १७ स० २९ श्लो० ॥ २९ ॥

पुण्याहेति । 'पुण्याहब्रह्मघोषाढ्यः' 'पुण्याहे' पुण्यतिथौ, यः 'ब्रह्मघोषः' वेदध्वनिः, तेन 'आढ्यः' युक्तः । 'नृत्यगीतसमस्वनः' 'नृत्यगीतानां', 'समाः' तुल्याः, 'स्वनाः' ध्वनयः, यत्र स तथाभूतः । 'निर्भीतिकः' नास्ति 'भीतिः' भयं, स्कन्धावारस्थजनानां यत्र स तथाभूतः। 'महोत्साहः' 'महान्' अतिशयः, 'उत्साहः' कार्य्यार्थेषु स्थेयान् प्रयत्नः, स्कन्धावारस्थितजनानां यत्र स तथाभूतः। 'आकाङ्क्षितजयोदयः' 'आकाङ्क्षितः' स्कन्धावारस्थजनैरभिलषितः, 'जयोदयः' विजयप्राप्तिः, यत्र एवम्भूतः स्कन्धावारः प्रशस्यत इति परेणान्वयः । एवमुत्तरत्र योज्यं ॥ १७ स० ३० श्लो० ॥ ३० ॥

नीरजस्क इति । 'अभिरत्नः' अनुकूलवृष्टियुक्तः । अत एव 'नीरजस्कः' धूलिरहितः । 'प्रादक्षिण्यस्थितग्रहः' 'प्रादक्षिण्येन' अनुकूलतया, 'स्थिताः', स्कन्धावाराधिपतेर्ग्रहाः यत्र स तथाभूतः । 'दिव्यान्तरीक्षभौमैः

पार्थिवैश्चाप्यदूषितः' 'दिव्यैः' धूमकेत्वादिभिः, 'आन्तरीक्षैः' उल्कादिभिः, 'पार्थिवैः' तस्करादिभिः, 'अदूषितः' अनाक्रान्तः ॥ १७ स० ३१ श्लो० ॥३१॥

नीचैरिति। 'नीचैःप्रवृत्तानुलोममारुतसूतमङ्गलः' 'नीचैः' मान्द्येन, 'प्रवृत्तः', 'अनुलोमः' अनुकूलः, यः 'मारुतः' वायुः, तेन 'सूतं' सूचितं, 'मङ्गलं' सिद्धिः, यत्र स तथाभूतः। 'छत्रपुष्पबलः' 'छत्राणि' प्रफुल्लविकानि, 'पुष्पाणि' सफलानि, 'बलानि' सैन्यानि यस्य स तथाभूतः। 'साधुः' लोभादिदोषरहितः, 'सुगन्धिज्वलितानलः' 'सुगन्धिः' धूमादिभिः सुरभिगन्धयुक्तः, 'ज्वलितः' प्रदीप्तः, निर्धूम इति यावत्, 'अनलः' वह्निः, यत्र स तथाभूतः ॥ १७ स० ३२ श्लो० ॥ ३२ ॥

अमदेति। 'अमदमाद्यन्मातङ्गः' 'अमदेन' मदकारणाभावेनापि, 'माद्यन्तः' मत्ततां प्राप्नुवन्तः, 'मातङ्गाः' गजाः, यत्र स तथा। 'आसाराभ्युदयान्वितः' 'आसारः' शुभवृष्टिः, तेन सूचितः 'अभ्युदयः' समुन्नतिः युद्धे जयलाभ इति यावत्, तेन 'अन्वितः' युक्तः। अथवा 'आसारः' सुहृद्बलं, तस्य यः 'अभ्युदयः' प्राशस्त्यं, तेन 'अन्वितः'। 'इत्यादिलक्षणोपेतः' पूर्वोक्तलक्षणयुक्तः,'स्कन्धावारः', 'प्रशस्यते' विजयाय भवतीत्यर्थः। 'तस्मिन्' स्कन्धावारे,'शस्ते' पूर्वोक्तशुभलक्षणान्विते, सति 'द्विषः' यातव्यस्य, 'भङ्गः' पराजयः, 'तस्मिन्', 'अशस्ते' अशुभलक्षणान्विते, सति 'विपर्ययः' यातव्यस्य जयः विजिगीषोश्च पराजयः, 'ज्ञेयः' बोध्यः ॥ १७ स० ३३ श्लो० ॥३३॥

निमित्तेति। 'निमित्तान्येव' शुभाशुभसूचकलक्षणान्येव, 'शुभाशुभफलोदयं' जय-पराजयरूपफलप्राप्तिं, 'शंसन्ति' सूचयन्ति। 'तस्मात्' पूर्वोक्तकारणात्, 'शास्त्रज्ञः' नीतिशास्त्रतत्त्ववित्, 'राजा' विजिगीषुः, 'समुपलक्षयेत्' कार्यसिद्धिं स्थिरीकुर्यात ॥ १७ स० ३४ श्लो० ॥ ३४ ॥

प्रशस्तेति। 'प्रशस्तेन' शुभसूचकेन, 'निमित्तेन' पूर्वोक्तलक्षणेन, 'विशुद्धेन' मोहादिदोषरहितेन, 'अन्तरात्मना' अन्तःकरणेन, च 'व्यक्तं' सम्यक्, 'आरभ्यमाणं' क्रियमाणं, 'समीहितं' चेष्टितं, 'सिद्धिं' विजयलक्षणं फलं, 'याति' प्राप्नोति ॥ १७ स० ३५ श्लो० ॥ ३५ ॥

सहायेति। 'सहायसम्पत्' यैः सहायैः कार्य्यसिद्धिर्भवति तेषां 'सम्पत्' उत्कर्षः, 'विश्रामं' तस्मिन्काले विश्रिष्टस्थानं, 'सत्त्वं' बलं, 'दैवानुकूलता' 'दैवस्य' भाग्यस्य, 'अनुकूलता' सहकारिता, 'उद्योगः' मनसि उत्साहः, 'व्यवसायः' निश्चयः, 'यस्य' विजिगीषोः, 'एते' सहायसम्पदादयः, सन्तीति शेषः। 'तस्य' विजिगीषोः, 'सिद्धयः' युद्धे जयलाभादयः, भवन्तीति शेषः। १७ स० ३६ श्लो० ॥ ३६ ॥

स्कन्धावारशब्दं व्याख्यातुमाह, तन्मूलत्वादिति। 'तन्मूलत्वात्' 'सः' एव राजैव, मूलं यासां तासां भावः तत्त्वात्। 'प्रजानां', 'राजा', 'स्कन्धः' वृक्षशाखा-समूहस्य वृक्षमूलमिव राजा मूलकारणमित्यर्थः। राज्ञा रक्षिताः प्रजा जीवन्तीति भावः। 'अमात्यदण्डादिः' चतुरङ्गबलं, 'आवारः' आवरणं तस्य मूलभूतस्य राज्ञः आवरणमिति यावत्। यथा आवरणेन वृक्षमूलं शाखादिकं कण्टकादिभ्यो रक्षति तथा मूलभूतो राजापि अमात्यदण्डादि-रूपावरणेन शत्रुभ्यः प्रजा रक्षतीति भावः। आवारशब्दप्रतिपाद्यमाह, 'वृतिरावार उच्यते' इति। 'वृतिः' वेष्टनं, (बेड़ा इति प्रसिद्धिः) 'आवारः' आवारपदप्रतिपाद्यः। 'वृत्तिरावार उच्यते' इति मुद्रितपुस्तकपाठो न समीचीनः। 'वृतिरावार उच्यते' इत्येव पाठः समीचीनत्वेन प्रतिभाति॥ १७ स० ३७ श्लो० ॥ ३७॥

एतदेव स्पष्टयमाह, भूतानामिति। 'यतः' यस्मात् कारणात, 'महीयसा' अतिमहता, 'आवारेण' अमात्यदण्डादिरूपेण, 'आवृतः' वेष्टितः, 'स्कन्धः' मूलभूतो राजा, 'भूतानां' प्राणिनां, प्रजानामिति यावत्। 'भूतिनिष्पत्तेः' 'भूतिः' सम्भूतिः, सम्पत्तिर्वा तस्याः 'निष्पत्तेः', कारणं भवतीति वाक्यशेषः। 'अतः' तस्मात् कारणात्, सपरीवारो राजा 'स्कन्धावारः', स्मृतः। चतुस्त्रिंशश्लोकावधि षट्त्रिंशश्लोकपर्य्यन्तानां प्रतीकधारणं न मुद्रितपुस्तकानुसारेण किन्तु हस्तलिखितपुस्तकानुसारेणैव यतः मुद्रितपुस्तके अनियमेन श्लोका अङ्किताः॥ १७ स० ३८ श्लो० ॥ ३८॥

स्कन्धावारविनाशकारणप्रतीकारार्थमाह, समेति। 'समवरन्द-वासाम्बु-

वीवधासार-निग्रहाः' 'समवस्कन्दः' मणिभिः, 'वासः' सैन्यानामवस्थानयोग्य-स्थानं, 'घम्बु' सैन्यपेयजलं, 'वीवधासारौ' इतव्याख्यौ, तेषां 'निग्रहा' निरोधाः, प्रत्येकं 'स्कन्धावारस्य व्यसनः', भवन्तीति शेषः। यतः घन्नपाना-दिभिर्विना प्राणिनो न जीवन्ति अतएव 'एते' समवस्कन्दादयः, 'यत्नतः', रक्ष्याः। प्रतीकारद्वारेण एते चरन्तिवायेत् तदा स्कन्धावारस्य व्यसनो भवन्तीति भावः॥ १७ स० ३६ श्लो०॥ ३६॥

उपसंहरन्नाह, इतीति। 'इति' उक्तप्रकारेण, 'प्रयत्नेन', 'बलं' मौला-दिकं, 'निवेशयेत्' स्थापयेत्। 'तदा' निवेशकाले, 'शुभाशुभं वा' शुभा-शुभञ्च, वाकारः समुच्चये। 'उपलक्षयेत्' संपश्येत्॥ 'परस्य' यातव्यस्य, च 'एतत्' शुभाशुभं, 'निपुणं' सम्यक्, 'विलोकयेत्' पश्येत्। 'अशुभदर्शने' अशुभाभावदर्शने, शुभदर्शनेति शेषः। 'समारभेत' संग्रामोद्योगं कुर्यात्, विजिगीषुरिति शेषः। अशुभदर्शने तु न किञ्चिदारब्धव्यमिति भावः॥ १७ स० ४० श्लो०॥ ४०॥

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानु-सारिण्यां सप्तदशः सर्गः।

मुद्रितपुस्तकानुसारेण षोड़शः सर्गः॥

---

अथाष्टादशः सर्गः ॥

मुद्रितपुस्तकानुसारेण सप्तदशः सर्गः ॥

वैरपुराभ्यासे स्कन्धावारनिवेशं कृत्वा सहसा न युध्येत किन्तु मायप्रयोग-पूर्व्वकं मन्त्रयुद्धारम्भः कर्त्तव्य इति दर्शयन्नाह, महेति। 'महाप्रज्ञान-सम्पन्नः' 'महाप्रज्ञानं' गुणाष्टकयुक्ता प्रज्ञा, गुणाष्टकन्तु शुश्रूषा-श्रवण-ग्रहण-धारण-विज्ञानोहापोह-तत्त्वाभिनिवेशरूपं। तेन 'सम्पन्नः' युक्तः। 'सत्त्वदैवे' बलभाग्ये। ताभ्यामुपबृंहितः' वर्द्धितः। 'उद्योगाध्यवसायाभ्यां' उक्तस्वरूपाभ्यां कारणभूताभ्यां, 'उपायान्' साम-दान-विग्रह-भेदादीन्, 'निक्षिपेत्' प्रयुञ्ज्यात्, 'परे' शत्रौ॥ १८ स० १ श्लो० ॥ १ ॥

कस्मात् प्रकारात् युद्धं मुक्त्वा उपायप्रक्षेपोऽभिधीयत इति चेदाह, बलु-दिति। यतः 'साधुमन्त्रः' सम्यक्मन्त्रणासम्पन्नः, विजिगीषुरिति शेषः। मन्त्रेण कोषेण च 'अरीन्' शत्रव्यमनून्, 'जयेत्', 'तत्' तस्मात्, 'चतुरङ्ग-बलं' हस्त्यश्व-रथ-पदातिरूपं 'मुक्त्वा' त्यक्त्वा, 'कोशः', 'मन्त्रः' मन्त्रिभिः सह निर्णीता बुद्धिः, च 'युध्यते' युद्धं करोतीति ॥ १८ स० २ श्लो० ॥ २ ।

उपायानभिधातुमाह, सामेति। सुगमः श्लोकार्थः ॥ १८ स० ३श्लो० ॥३॥

सामस्वरूपमाख्यातुमाह, परस्परेति। 'परस्परोपकाराणां कीर्त्तनं' भवद्भिरस्माकं अस्माभिश्च भवतां इत्थं अन्योन्योपकारकथनं। 'गुणकर्म्मसु' वंश-रूप-विद्या-वित्त-चरित्रादिषु, 'कीर्त्तनं' श्लाघनं। कर्म्मस्विति सप्तम्यर्थो विषयत्वं। गुणकर्मविषयककीर्त्तनमिति यावत्। 'सम्बन्धस्य समाख्यानं' 'सम्बन्धस्य' वंशपारम्पर्य्यस्य मित्रतारूपस्य वा 'समाख्यानं' कथनं, 'आयत्याः सम्प्रकाशनं' 'आयतिः' उत्तरपक्षं, तस्याः 'सम्प्रकाशनं' प्रकटनं, 'तवाह-मिति', 'पेशलया वाचा' मृदुवचनेन, 'साधु' सम्यक्, 'अर्पणं' आत्म-समर्पणं। 'इति' उक्तप्रकारेण, अन्यत् स्पष्टम् ॥ १८ स० ४-५ श्लो० ॥ ४-५॥

दानमपि पञ्चविधमभिधातुमाह, य इति। 'सम्यग्धनोत्सर्गः' सम्यग्धनवितरणं, स सम्यक्त्वविशेषणेन 'उत्तमाधम-मध्यमः स्मृतः'। इति-दानसामान्यलक्षणं। 'प्रतिदानं' न्यस्तवस्तुनः प्रत्यर्पणं। 'गृहीतस्यानुमोदनं' 'गृहीतस्य' दानं विना नीतस्य, 'अनुमोदनं' यन्नीतं तत्साधुकृतं इत्यनेन कार्य्यवशात् सम्मतिदानं॥ १८ स० ६ श्लो०॥ ६॥

द्रव्यादानमिति। 'द्रव्यादानमपूर्व्वं' द्रव्यं यदभिनवं दीयते तत्। 'स्वयं ग्राहप्रवर्त्तनं' ग्रहीतुरभिलाषानुसारेण दानं। 'देयस्य प्रतिमोक्षश्च' 'देयस्य' प्रतिवर्पदातव्यस्य, 'प्रतिमोक्षः', एतदपि दानं, इत्येवं दानं पञ्चविधं स्मृतं॥ १८ स० ७ श्लो०॥ ७॥

त्रिविधं भेदमभिधातुमाह, स्नेहेति। 'स्नेहरागापनयनं' 'स्नेहः' सौहार्द्देन प्रीतिः, 'रागः' अनुरागः, तयोः 'अपनयनं' दूरीकरणं भङ्ग इति यावत्। 'संहर्षोत्पादनं' 'संहर्षः' स्पर्द्धा, तस्य 'उत्पादनं', 'सन्तर्जनं' सम्यक्तर्ज्जनेन भर्त्सनं, इत्येवं त्रिविधो भेदः भेदज्ञैः स्मृतः॥ १८ स० ८ श्लो०॥८॥

दण्डमभिधातुमाह, वध इति। 'वधः' विनाशः, 'अर्थहरणं' अर्थपरिग्रहः, 'परिक्लेशः' यातना, इत्येवं त्रिविधदण्डः दण्डविधानज्ञैः स्मृतः॥ १८ स० ९ श्लो०॥९॥

वधरूपदण्डस्य द्वैविध्यमाह, प्रकाशेति। 'पूर्व्वः' वधरूपो दण्डः, 'प्रकाशः' सर्व्वजनविदितः, 'अप्रकाशः' न केनापि विदितः, इत्येवं द्विविधः। 'लोकद्विष्टान्' चौर-पारदारिकादीन, तथा 'रिपूंश्च' शत्रूंश्च, प्रकाशदण्डान् कुर्व्वीत॥ १८ स० १० श्लो०॥१०॥

अप्रकाशदण्डार्हानाह, यैरिति। यैः लोकः 'उद्विजेत' उद्वेगं याति, ये च 'स्नेहलोभात्' स्नेहाभिलाषात्, 'नृपवल्लभाः' राजप्रियाः। ये च नृपवल्लभा भूत्वा प्रजाः अधिकं 'बाधन्ते' पीडयन्ति, तेषु 'उपांशु' विजने, वधदण्डः प्रवर्त्तते॥ १८ स० ११ श्लो०॥ ११॥

उपांशुवधस्वरूपमभिधातुमाह, विषेणेति। 'विषेण' अग्निमेणाग्निना वा। 'उपनिषद्योगैः' अभिचारादिदूष्यार्थादिभिः, शस्त्रेण' गूढप्रयुक्ता-

युधेन, 'उद्वर्त्तनेन' विलेपनविशेषेण, 'यथा' तेन प्रकारेण, 'उपांशु' विजने, 'दण्डं' वधरूपं 'नयेत्' प्रयुञ्ज्यात्, 'यथा' येन प्रकारेण, अन्यः 'न विभावयेत्' न जानीयात् ॥ १८ स० १२ श्लो० ॥ १२ ॥

यत्र दण्डो न प्रयोज्यस्तदाह । ब्राह्मण इति । 'विद्वान्' धीमान्, 'धर्म्मोन्निनीषया' धर्म्मं उन्नतिं नेतुमिच्छया, 'ब्राह्मणे जातिमात्रेऽपि' जात्या ब्राह्मणमात्रेऽपि, 'अन्त्यजेऽपि' नीचजातावपि, 'धार्म्मिके' धर्म्माचरणशीले, वधरूपं दण्डं 'न आदिशेत्' न प्रयुञ्ज्यात् ॥ १८ स० १३ श्लो० ॥ १३ ॥

उपांशुप्रकारमभिधातुमाह, उपेक्षयेति । 'येषु' दण्ड्येषु, 'उपांशु प्रशस्यते' उपांशुवधो युज्यते । ते 'उपेक्षया' औदासीन्येन, 'हन्तव्याः' विनाशयितव्याः । 'निपुणः' नीतिज्ञः, 'प्रत्यक्षं' साक्षात्, 'उपेक्षां' औदासीन्यं, 'परिवर्जयेत्', त्यजेत्, साक्षात् अन्यैर्हन्यमाना अनुग्राह्या इति भावः । प्रत्यक्षोपेक्षया तु गर्हणीयः स्यात् ॥ १८ स० १४ श्लो० ॥ १४ ॥

कया रीत्या साम प्रयोक्तव्यमित्याह, प्रविशन्निवेति । 'चेतांसि' अन्तःकरणानि, 'प्रविशन्निव', 'दृष्ट्या' दर्शनेन, 'साधु' सम्यक्, 'पिबन्निव' अत्यादरेण पश्यन्निव, 'स्रवत्' क्षरत्, 'अमृतमिव' सुधेव, 'प्रियं वचः साम' प्रियवाक्यरूपं साम, 'प्रयुञ्जीत', विजिगीषुरिति शेषः । 'दृष्ट्या' इत्यत्र दृष्टेति मुद्रितपुस्तकपाठः न समीचीनः ॥ १८ स० १५ श्लो० ॥ १५ ॥

साम्नोलक्षणमाह, वागिति । 'अनुद्वेगजननी वाक्' चित्तक्षोभाजननी वाक्, 'साम', इति 'परिकीर्त्त्यते' उच्यते । तत् साम यदा 'सत्यं' यथार्थं, तदा सामाख्यं सूक्तमुच्यते । यदा 'प्रियं' प्रीतिजनकं, तदा सामाख्यं स्तोत्रमुच्यते ॥ १८ स० १६ श्लो० ॥ १६ ॥

साम्नः प्रकारान्तरमाह, आत्मन इति । आदौ 'समीहितं' शत्रुचेष्टितं, कार्य्यमिति यावत्, 'आत्मनः' स्वस्य, 'निजकार्य्यमिव' कार्य्यमिव, 'कुर्व्वन्' सम्पादयन्, 'दद्यात्' गच्छेत्, निजकार्य्येष्विव शत्रुकार्य्येषु प्रयत्नं प्रदर्शयेदिति भावः । पश्चात् विजिगीषुः 'अनुपलक्षितः' अप्रकटितः सन्, 'पर्व्वतान्' पर्व्वतसदृशदुर्भेद्यान्, 'शत्रून्' रिपून्, 'जलवत्' जलमिव, 'भिन्द्यात्' भेदं प्रापयेत् । १८ स० १७ श्लो० ॥ १७ ॥

साम्नां गुणमाह, क्षीरेति। 'अमरदानवैः' देवासुरैः, 'फलाय' अमृतादिरूपफलप्राप्त्यै, 'साम्ना' उक्तलक्षणेन प्रियवचनेन, 'क्षीराब्धिः' क्षीरसमुद्रः, 'मथितः' आलोडितः। सामप्रद्वेषे दोषमाह निजघ्निरेइति। 'सामप्रद्वेषिणः' सामावज्ञायिनः, 'धार्त्तराष्ट्रान्' दुर्य्योधनादीन्, 'अचिरात्' शीघ्रं, 'निजघ्निरे' विनाशितवन्तः, पाण्डवा इति शेषः॥ १८ स०। १८ श्लो०॥ १८॥

दानमाहात्म्यमाह, दातव्यमिति। 'विद्वान्' नीतिनिपुणः, 'दातव्यं' उपायान्तरेणाप्रतिविधेयं, 'विग्रहं' विरोधं, 'प्रशमं' शान्तिं, 'नयेत्' प्रापयेत्। एतदेव दृष्टान्तेन द्रढ़यति इन्द्रेति, 'इन्द्रः' देवराजः, 'अपचारे' मारणोच्चाटन-विद्वेषणादिभिः देवानामुपद्रवे, मृतदैत्यसंजीवनादिभिः कृतमहापकारे च 'शुक्रस्य दानेन,' 'शमं' शान्तिं 'ईयिवान्' प्राप्तः। 'शमं' इत्यत्र 'समं' इति दन्त्यसकारादिः पाठः मुद्रितपुस्तके वर्त्तते स न समीचीनः॥ १८ स०॥ १९ श्लो०॥ १९॥

अपराधेनेति। 'दुहितुः' दानवेन्द्रस्य वृषपर्व्वणः सुतायाः शर्म्मिष्ठाभिधायाः, 'अपराधेन' कूपनिक्षेपणरूपदोषेण, 'भृगुनन्दने' शुक्राचार्य्ये, 'कुपिते' स्वदुहितुर्देवयान्याः कूपनिक्षेपजनितक्रोधयुक्ते, सति 'वृषपर्व्वा', 'दानवेन्द्रः' असुरराजः, 'प्रदानेन' स्वदुहितुः शर्म्मिष्ठायाः देवयानीशुश्रूषार्थ-समर्पणेन, 'सखी अभवत्'। तद्यथा वृषपर्व्वसुतायाः शर्म्मिष्ठायाः शुक्रदुहितुर्देवयान्याश्च परस्परं संजाते कलहे शर्म्मिष्ठया देवयानी कूपे निक्षिप्ता एतदपराधेन भृगुनन्दनेन वृषपर्व्वणः मन्त्रित्वं परित्यक्तं इति वृषपर्व्वणा स्वसुतां देवयान्यै दासीं दत्त्वा भृगुनन्दनः अनुग्राहितः इति पौराणिकी कथात्रानुसन्धेया। १८ स०। २० श्लो०॥ २०॥

उपगम्येति। 'शान्तिमिच्छता' आत्मनोऽभ्युदयमिच्छता, जनेनेति शेषः। 'बलिने' अधिकबलयुक्ताय, 'उपगम्यापि' समीपं गत्वापि, 'दातव्यं'। 'गान्धार्य्याः' सुबलतनयायाः, अपत्यमिति शेषः। दुर्य्योधनः 'अप्रयच्छन्' पञ्चापि ग्रामान् अददत्, 'समूल एव' मूलसहित एव, 'क्षयं' विनाशं, 'गतः' प्राप्तः। १८ स०॥ २१ श्लो०॥ २१॥

भेदप्रयोगमभिधातुमाह। किञ्चिदिति। 'किञ्चित्' स्वल्पं प्रयच्छन्, ददत्, अधिकदानेन शत्रुरुद्धिजेद्द्येति शेषः। 'भूयसा' तृष्णया प्रलोभयन्' बहुतरां आशां जनयन्। 'उभयवेतनैः' विजिगीषु-यातव्योभयपक्षवेतनग्राहिभिः चरैः, 'प्रविश्य' अन्तरङ्गतां गत्वा, 'चतुर्विधान्' चतुःप्रकारान् क्रुद्ध-लुब्ध-भीतावमानितानिति यावत्। 'भेद्यान्' भेदयोग्यान्, 'भिन्द्यात्' विश्लेषयेत्, विजिगीषुरिति शेषः॥ १८ स०॥ २२ श्लो०॥ २२॥

एतमेव व्याख्यातुमाह, अलब्धेति। 'लुब्धः' लोभपरतन्त्रः, 'अलब्धलपयः' अप्राप्तवेतनः, तथा 'मानी' मानधनः, 'अवमानितः' हतमानः, तथा 'क्रुद्धः' कोपनस्वभावः, 'कस्मात्' कुतश्चित्कारणात्, 'कोपितः' कोपवशतां नीतः, तथा 'भीतः' भयशीलः, कुतश्चित् कारणात् 'भीषितः' त्रासितः, एतान् चतुर्विधान्, 'परपक्षे' परपक्षस्थितान्, 'यथाभिलषितैः कामैः', 'भिन्द्यात्' विश्लेषयेत्। 'स्वपक्षे' स्वपक्षस्थितान् लुब्धादीन् चतुर्विधान्, यथाभिलषितैः कामैः 'प्रशमं' शान्तिं, 'नयेत्' प्रापयेत्॥ १८ स०॥ २३-२४ श्लो०॥ २३-२४॥

युवराजस्य भेदोपायमाह। भेदमिति। 'मन्त्र्यमात्य-पुरोधसां' 'मन्त्रिणः' परामर्शदातुः, 'अमात्यस्य' सचिवस्य, 'पुरोधसः' पुरोहितस्य, 'भेदं', 'यत्नेन' प्रयासेन, 'कुर्व्वीत', विजिगीषुरिति शेषः। तेषां भेदस्य प्रयोजनमाह, तेष्विति। 'हि' यतः, 'तेषु' मन्त्र्यमात्य-पुरोधःसु, 'भिन्नेषु' भेदं प्राप्तेषु, 'ऊर्जिते' बलवति, 'युवराजे,' 'भेदः', सुकर इति शेषः॥ १८ स०॥ २५ श्लो०॥ २५॥

अमात्यादीनां एकस्मिन् भिन्ने अन्यस्य भेदः सुकर इत्यभिधातुमाह, अमात्य इति। 'हि' यतः, 'महीपतेः' राज्ञः, 'अमात्यः युवराजश्च' 'एतौ', 'भुजौ' बाहुभूतौ। 'मन्त्री', 'नेत्रं' चक्षुस्वरूपः। तस्मात् 'अस्मिन्नेकस्मिन्नपि' अमात्यादीनां यस्मिन् कस्मिन्नपि, 'भिन्ने' भेदं प्राप्ते, 'तद्विधः' तत्सदृशः अन्यः, भेद्यो भवतीति शेषः। १८ स०॥ २६ श्लो०॥ २६॥

यातव्यस्य कुलस्थितादीनां भेदत्वमभिधातुमाह, सर्व्वेति। 'मेधावी'

धीमान्, 'सर्व्वावस्थं हि' सर्व्वावस्थमेव, 'तत्कुलीनं' 'तस्य' यातव्यस्य, 'कुलीनं' कुलस्थितं, 'विकारयेत्' विकारं प्रापयेत, 'विकृतस्तु' प्राप्तविकारः पुनः, 'कुलीनः' कुलस्थितः, 'अग्निवत्' अग्निरिव 'स्वयोनिं' 'स्वस्य' आत्मनः, 'योनिं' आश्रयं, 'ग्रसते' नाशं प्रापयति, । १८ स० ॥ २७ श्लो० ॥ २७ ॥

मर्द्दिति । 'अभ्यन्तरोषितः' यातव्यपुराभ्यन्तरे कृतवासः, 'पुमान्' पुरुषः, 'तत्कुलीनेन' यातव्यकुलस्थितेन, 'तुल्यः' सदृशः, 'तस्मात्' कारणात्, 'स्तौ' कुलीनाभ्यन्तरोषितपुरुषौ, 'मदं' अभिप्रायं, 'भिन्द्यात्' भेदं प्रापयेत्, 'आत्मनि' स्वपक्षे, 'एतौ', 'भ्रमं' भ्रान्तिं, 'सन्धयेत्' प्रापयेत् ॥ १८ स० ॥ २८ श्लो० ॥ २८ ॥

तत्रेति । 'यः' पुरुषः, 'कोपानुग्रहक्षमः' कोपे अनुग्रहे च शक्तः, 'तत्र' तस्मिन् पुरुषे, 'उपजापः' भेदः, 'कर्त्तव्यः', 'सः' पुरुषः, 'कल्याणः' शुभाकाङ्क्षी, 'शठो वा' धूर्त्तो वा, 'इति', 'सूक्ष्मया' निर्म्मलया, 'धिया' बुद्ध्या, 'परीक्ष्यः' परीक्षणीयः ॥ १८ स० ॥ २९ श्लो० ॥ २९ ॥

कल्याणस्त्विति । 'कल्याणः', शुभाकाङ्क्षी, 'यथाशक्ति' शक्तिमनतिक्रम्य, 'वचः' प्रभुवाक्यं, 'सफलं' फलयुक्तं, 'करोति,' । 'अथ', 'शठः' धूर्त्तः,'अर्थोपलिप्सया' धनलाभेच्छया, 'द्वावपि पक्षौ' यातव्य-विजिगीषुपक्षौ, 'चलयति' चाञ्चल्ययुक्तौ करोति । यातव्यमन्त्रणां विजिगीषुपक्षे, विजिगीषुमन्त्रणां यातव्यपक्षे च प्रकाशयतीति भावः ॥ १८ स० ॥ ३० श्लो० ॥ ३० ॥

सप्तभिः श्लोकैरन्यान् भेद्यानाह । पूर्व्वेति । 'नीचः' कुतश्चिदपराधात् पदच्युतः, 'कालयापनमाश्रितः' जीविकानिर्व्वाहार्थं यथाकथञ्चिन्निर्दिष्टवृत्तिकः, 'पूर्व्वसेनापतिः' भूतपूर्व्वसैन्याध्यक्षः, तथा 'मिथ्याभिशस्तः' मिथ्यापवादग्रस्तः, राजपुरुष इति शेषः । 'श्रीकामः' राज्यलक्ष्मीलोलुपः, 'आहूयाप्रतिमानितः' आह्वानानन्तरं तिरस्कृतः, एतान् भिन्द्यादिति परेणान्वयः एवमुत्तरत्रापि । १८ स० ॥ ३१ श्लो० ॥ ३१ ॥

राजेति । 'राजद्वेषी' राजविरागी, 'तत्कुलीनः' राजकुलस्थितः, पुरुषः इति शेषः । 'यस्य' पुरुषः, 'भूभुजा' राज्ञा, 'दूष्यते' दोषास्पदीक्रियते,

'व्यावृत्तव्यवसायः', प्रहीतजीविकोपायः, 'कारनिवेशितः' निष्कारः सकरीकृतः, । १८ स० । ३२ श्लो० । ३२ ।

रणेति। 'रणप्रियः', युद्धप्रियः, 'साहसिकः' अविमृश्यकारी, 'आत्मसम्भावितः, आत्मनैव आत्मानं सम्भावयति विद्याशौर्यादिभिः यत्समानोऽन्यो नास्तीति मन्यते यः सः। 'विच्छिन्नधर्म्मकामार्थः' उन्मूलितधर्मादित्रिवर्गः, अन्यत् स्पष्टं । १८ स० । ३३ श्लो० । ३३ ।

भीत इति। 'भीतः' सञ्जातभयः। 'स्वदोषाभियुक्तः', स्वकृतापराधेन सञ्जातत्रासः। 'कृतवैरोऽभिसान्त्वितः' आदौ 'कृतवैरः' कृतद्वेषः, पश्चात् 'अभिसान्त्वितः कृतसान्त्वनः। 'अभिशान्त्वितः' इति मुद्रितपुस्तकपाठः न समीचीनः। 'अतुल्येन सहादिष्टः','अतुल्येन' अयोग्येन, सह 'आदिष्टः' कर्म्मणि नियुक्तः। 'अतुल्येन सहाज्ञप्तः' इति मुद्रितपुस्तकपाठः न सम्यक्। 'तुल्यमानान्निराकृतः' 'तुल्यमानात्' उपयुक्तसम्मानात्, 'निराकृतः' प्रत्यादिष्टः, यः यादृक्सम्मानयोग्यः स तादृक्सम्मानवञ्चित इति भावः। 'तुल्यमानो निराकृतः' इति मुद्रितपुस्तकपाठो न सम्यक्। १८ स० । ३४ श्लो० । ३४ ।

अकारणेति। 'अकारणात्' कारणं विना, 'निरुद्धः' कृतनिरोधः, 'कारणाच्च' उभयोः तुल्यापराधरूपकारणाच्च, 'विशेषितः' कृतविशेषः एकतरः, उभयोः तुल्यापराधे पक्षपातेन एकः सापराधः कृतः अपरः परित्यक्तश्चेत् तदा यः सापराधः कृतः स भेद्यो भवतीति भावः। अन्यत् स्पष्टं। १८ स० । ३५ श्लो० । ३५ ।

हृतेति। 'हृतद्रव्यकलत्रः' अपहृतधनदारः, 'महाभोगाभिकाङ्क्षी' महाभोगाभिलाषी, 'परिक्षीणः' अल्पवित्तः, 'वहिर्बन्धुः' वहिष्कृतबन्धुः, 'वहिर्द्रव्यः' वहिष्कृतविषयः, 'वहिष्कृतः' पुरान्निःसारितः। एतत्त्रितयस्य वहिर्भावात् भेदार्हं। 'महाभोगाभिकाङ्क्षितः', इति मुद्रितपुस्तकपाठः। तत्र महाभोगे अभिकाङ्क्षितं अभिकाङ्क्षा यस्येति विग्रहः। भावे निष्ठाप्रत्ययः। १८ स० । ३६ श्लो० ३६ ।

इतीति । 'इति' पूर्व्वोक्ताः, 'भेद्याः' भेदार्हाः, 'समाख्याताः' कथिताः, 'परस्थितान्' यातव्यपक्षस्थितान्, एतान् 'भिन्द्यात्' विश्लेषयेत् । 'आगतान्' उपजापक्रियया उपस्थितान्, 'कामैः' ये यस्य कामाः तैः, 'पूजयेत्' सम्मानयेत् । 'निजांश्च' स्वपक्षस्थितांश्च, प्रागुक्तभेद्यान्, 'परिसाधयेत्' प्रशमं नयेत् । १८ स० ॥ २७ श्लो० ॥ २७ ॥

क्रोधादीनामपनयनेन भेदोपायमभिधातुमाह, सामेति । 'साम' प्रियवाक्यं, भेदोपायोभवति । प्रियम्बदे अनुरागोयुक्तः । 'कृत्यानुसन्धानं' भेद्यानां विषयाभिलाषानुसन्धानं भेदोपायो भवति । भेद्यकृत्यायां अनुसंहितायां तद्विषयाशाप्रदर्शनेन भेद्यत्वं सुकरमिति भावः । 'समन्युभयदर्शनं' क्रोधपूर्व्वकं भयप्रदर्शनं, भेदोपायः भवति । 'प्रधानं' भेदोपायानां मध्ये श्रेष्ठं, 'दानमानञ्च' 'दानं' अर्थार्पणं, 'मानं' गौरवं । 'भेदोपायाः' प्रागुक्तभेदसाधनानि । १८ स० ॥ २८ श्लो० ॥ २८ ॥

भेदविषयमभिधातुमाह, भेदमिति । 'मतिमान्' नीतिज्ञो विजीगीषुः, 'ज्यायसा' अभ्युदितशक्तिना, 'विग्रहीतः' विप्रकृतः, सन् 'भेदं', 'कुर्व्वीत,' । तमेवार्थं दृष्टान्तेन द्रढ़यति यथेति । 'सुरैः' देवैः, 'बलवन्तौ' अतिप्रबलौ, 'षण्डामर्कौ' षण्डामर्काभिधानौ, 'भित्त्वा' भेदं प्रापय्य, 'पराजितौ' । १८ स० ॥ २९ श्लो० ॥ २९ ॥

'भेदफलमभिधातुमाह, दण्डेनेति । 'अरेः' यातव्यस्य, 'संहतं' मिलितं, 'बलं' सैन्यं, 'भित्त्वा' भेदोपायैः भिन्नं कृत्वा, 'दण्डेन' दण्डविधिना, 'समाहन्यात्' नाशं प्रापयेत् । 'हि' तथाहि । 'इव' यथा, 'घुणदग्धं' घुणप्रमाथ्यं, 'काष्ठं' इन्धनं, 'विशीर्य्यते' खण्डशो भवति, तथा 'सत्' सैन्यं, भिन्नं सत् विशीर्य्यते । 'घुणदग्ध' इत्यत्र 'घुणजग्धं' इति पाठे 'घुणजग्धं' घुणाख्येन कीटविशेषेण, 'जग्धं' भक्षितं, इत्यर्थः । १८ स० ॥ ३० श्लो० ॥ ३० ॥

दण्डप्रयोगकालमभिधातुमाह, उत्साहेति । 'उत्साह-देश-कालैस्तु' 'उत्साहः' कर्त्तव्यार्थेषु स्थेयान् प्रयत्नः, 'देशः' युद्धोपयोगि स्थानं, 'कालः' अनुकूलसमयः, शरत्काल इति यावत् । एतैः 'संयुक्तः' समन्वितः,'सुसहाय

वान्' उत्साहसहकारिसम्पन्नः, विजिगीषुरिति शेषः। 'युधिष्ठिर इव', 'दण्डेन' दण्डविधिना, 'धरीन्' शत्रून्, 'धन्त' विनाशं, 'नयेत्' प्रापयेत्। उत्साहेत्यादिविशेषणद्वयं युधिष्ठिरेऽपि योज्यं। युधिष्ठिरपक्षे 'सुसहायवान्' इत्यस्य वासुदेवादिसहायसम्पन्न इत्यर्थः॥ १८ स०॥ ४१ श्लो०॥ ४१॥

आत्मन इति। 'आत्मनः' स्वस्य, 'शक्तिं' उत्साहशक्तिं, 'उद्वीक्ष्य' समीक्ष्य, 'सत्त्वसम्पन्नः' उत्साहशक्तिसम्पन्नः, 'अधिकमपि' अधिकबलशालिनमपि शत्रूं 'दण्ड', 'नयेत्' प्रापयेत्। तमेवार्थं दृष्टान्तेन द्रढ़यति, एकाकीति 'एकाकी' प्रभुशक्तिरहितः, 'रामः' परशुरामः, 'पुरा' पूर्व्वं, 'क्षत्रं' क्षत्रियकुलं, 'अवधीत्' एकविंशतिवारं विनाशितवान्। 'दण्डमप्यधिकं' इत्यत्र 'दण्डमभ्यधिकं' इति मुद्रितपुस्तकपाठो न समीचीनः॥ १८ स०॥ ४२ श्लो०॥ ४२॥

इदानीं विषयविभागेनोपायानां प्रयोगमभिधातुं सामप्रयोगविषयानेव तावदाह, अलसमिति। 'अलसं' निरुत्साहं, 'विक्रमे' युद्धादौ, 'श्रान्तं' निर्व्विण्णं, 'शान्तमितिपाठे निर्व्यापारमित्यर्थः। 'विहितोपायचेष्टितं' 'विहिताः', 'उपायाः' सामादयः, 'चेष्टितं' शरीरव्यापारो येन तं। 'क्षयै-व्ययप्रवासैः' 'क्षयः' सैन्यादिविनाशः, 'व्ययः' अर्थनाशः, 'प्रवासः' युद्धार्थं चिरप्रोषितं, एतैः 'सन्तप्तं' प्राप्तविरागं, 'परिविद्रुतं' संग्रामं त्यक्त्वा पलायितं, 'भीतं' प्रतापादेव भक्तं, 'मूर्खं' अविज्ञातनीतिशास्त्रं, 'धार्म्मिकं' प्राणिहिंसाभीतं, 'दुर्ज्जनं' दोषयुक्तं, 'पशुं' पशुकल्पं, 'मैत्रीप्रधानं' स्वभावत एव कृतवैरं, 'कल्याणबुद्धिं' सर्व्वत्राहितबुद्धिरहितं, एतान् 'साम्नेन' ह्रासलक्षणेन सामविशेषेण, 'साधयेत्' प्रशमं नयेत्। विनोपद्रवं सुखसाध्यत्वात्तेषामिति भावः। 'क्षय-व्यय-प्रसारैः' इति मुद्रितपुस्तकपाठात् 'क्षय-व्यय-प्रवासैः' इति हस्तलिखितपाठः समीचीनः॥ १८ स०॥ ४३-४४ श्लो०॥ ४३-४४॥

दानोपायसाध्यानभिधातुमाह, लुब्धमिति। 'लुब्धं' अर्थगृध्नुं, 'क्षीणं' क्षीणकोषं, 'अन्योन्यशङ्कयोद्विग्नान्' परस्परशङ्कया उद्विग्नान्, 'दण्डस्य

कारणात्' स्वपक्षे विपक्षे च अनुचितदण्डकारणात्, 'दुष्टान्' जातवैरान्, 'दानेन' अर्थदानेन, 'वशं' स्वायत्ततां, 'आनयेत्' ॥ १८ स० ॥ ३५ श्लो० ॥ ३५ ॥

साम-दानोभयसाध्यानाह, पुत्रेति । 'पुत्रान् भ्रातॄन् बन्धूंश्च', 'साम्नार्थेन च' 'साम्ना' सान्त्वलक्षणेन, 'अर्थेन' धनेन, दानेनेति यावत् । 'एतैः' पुत्रादिभिः, 'सदृशः' तुल्यः, 'कश्चित्' कोऽरिपुः, 'लोके' जगति, वर्त्तते इति शेषः । न कोऽपीति भावः । 'अपिः' सम्भावनायां । पुत्रादिः केनचित् कारणेन जातवैरः चेत् तदा अवश्यम्भावी पराजय इति भावः । 'साम्नार्थेन च' इत्यत्र 'सामर्थ्येन च' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ १८ स० ॥ ३६ श्लो० ॥ ३६ ॥

सामेति । 'दैवात्' अकस्मात्, 'प्रस्खलितेषु' प्राप्तविकारेषु, 'एतेषु' पुत्रादिषु, 'अपि' निश्चितं, 'साम' उक्तलक्षणं प्रियवचनं, 'प्रयुञ्जीत', अन्यथा एते 'स्पर्द्धाधीननिबन्धनात्' स्पर्द्धास्वभावकारणात्, 'दुष्कराः' दुरपनेयाः, 'विकृतिं' वैरूप्यं, 'यान्ति' प्राप्नुवन्ति । 'दुष्कर' इत्यत्र 'दुष्कराः', 'विकृति' इत्यत्र च 'विकृतिं' इत्येवपाठः समीचीनः ॥ १८ स० ॥ ३७ श्लो० ॥ ३७ ॥

नीतिशिक्षोपयोगिनः आचार्य्यस्य लक्षणमाह, कुलमिति । 'कुलं' सद्वंशः, 'शीलं' सत्स्वभावः, 'दया' निरुपधिपरदुःखप्रहरणेच्छा, 'दानं' वदान्यता, 'धर्म्मः' पुण्यकर्म्मानुष्ठानं, 'सत्यं' ऋतवाक्यं, 'कृतज्ञता' उपकाराङ्गीकारः, 'अद्रोहः' अनिष्टचिन्ताराहित्यं, 'इत्येतत्' सर्व्वं, 'येषु' पुरुषेषु, वर्तते इति शेषः । 'तान्', 'आचार्य्यान्' उपदेशगुरून्, 'प्रचक्षते' वदन्ति ॥ १८ स० ॥ ३८ श्लो० ॥ ३८ ॥

दानभेदोभयसाध्यान् अभिधातुमाह, पौरेति । 'दण्डमुख्यः' दण्डप्रधानः, 'दान-भेदविचक्षणः' दान-भेदप्रयोगनिपुणः, 'दण्डवित्' दण्डविधानज्ञः, 'पौरजानपदांश्च' 'पौरान्' पुरवासिनः, 'जानपदान्' जनपदवासिनश्च, 'दान-भेदाभ्यां', 'साधयेत्' वशमानयेत् ॥ १८ स० ॥ ३९ श्लो० ॥ ३९ ॥

अपराद्धेति । 'सन्निधान्' कोषकान्तःकरणान्, 'अपराद्धान्' कृताप-

राधान्, 'स्वेच्छोक्त्या' स्वेच्छवचनेन, 'मानदानतः' सम्मानपूर्व्वकार्थदानतः, 'साधयेत्' वशमानयेत्, 'अपरान्' स्त्रियेतरान, 'यथायोगेन' यत्र यः प्रभविष्यति तत्र तादृशोपायावलम्बनेन, 'भेद-दण्डाभ्यां', 'साधयेत्' ॥ १८ स० ॥ ५० श्लो० ॥ ५० ॥

मानुषीं मायां दर्शयन्नाह, देवतेति। 'देवताप्रतिमास्तम्भसुषिरान्तर्गतैर्नरैः' देवताप्रतिमूर्त्ति-स्तम्भ-विवराभ्यन्तरगतैर्मनुष्यैः, लोका विस्मिताः क्रियन्ते इति शेषः। इत्थं यत् विस्मापनं सा माया इति भावः। 'स्त्रीवस्त्रसंवीतः पुमान्' स्त्रीवेशधारी पुरुषः, 'निशि' रात्रौ, 'अद्भुतदर्शनञ्च' आश्चर्यदर्शनञ्च, 'वेतालानां पिशाचानां देवानाञ्च', 'सरूपता' तुल्यरूपता, 'इत्यादिमाया मानुषी विज्ञेया', 'मानुषचरन्' मानुषः तया मायया चरन् सन्, लोकान् विस्मापयतीति शेषः। 'सुरूपता' इति 'मानुषैश्चरन्' इति च मुद्रितपुस्तकपाठो न सम्यक् ॥ १८ स० ॥ ५१-५२ श्लो० ॥ ५१-५२ ॥

कामत इति। 'कामतः' स्वेच्छया, 'रूपधारित्वं' यस्य कस्यचित् रूपधारणं, 'शस्त्राश्माग्न्यम्बुवर्षणं' मायया शस्त्रास्त्रपाषाणजलानां वर्षणं, 'तमोनिलीनता' मायया अन्धकारं प्रसार्य्य तत्र लयः। अन्यत् स्पष्टम् ॥ १८ स० ॥ ५३ श्लो० ॥ ५३ ॥

. मायाया उदाहरणमाह, जघानेति। श्लोकार्थः सुगमः ॥ १८ स० ॥ ५४ श्लो० ॥ ५४ ॥

उपेक्षालक्षणमाह, अन्याय इति। 'अन्याये' न्यायविरुद्धे कार्य्ये, 'व्यसने' कामजे कोपजे च दोषे, 'युद्धे च', 'प्रसक्तस्य' प्रवृत्तिमतः, 'अनिवारणं' अप्रतिषेधः, उपेक्षा। अन्यत् स्पष्टं ॥ १८ स० ॥ ५५ श्लो० ॥ ५५ ॥

उपेक्षाया उदाहरणमाह, अकार्य्ये इत्यादि श्लोकद्वयेन। श्लोकद्वयं स्पष्टं। १८ स० ॥ ५६-५७ श्लो० ॥ ५६-५७ ॥

इन्द्रजाललक्षणमाह, मेघेत्यादिश्लोकद्वयेन। 'इति' उक्तप्रकारेण, 'इन्द्रजालं' ऐन्द्रजालिकविद्यां, 'द्विषतः' शत्रवस्य, 'भीत्यर्थं' त्रासार्थं, 'उपकल्पयेत्' प्रदर्शयेत्। अन्यत् स्पष्टं ॥ १८ स० ॥ ५८-५९ श्लो० ५८-५९ ॥

उपसंहरन्नाह, इतीति। अर्थः सुगमः॥ १८ स० ॥ ६० श्लो० ॥ ६० ॥

दानातिरिक्तोपायप्रयोगस्य दानपूर्व्वकत्वेनैव साफल्यं दानापूर्व्वकत्वेन वैफल्यञ्चाह, सामभेदावित्यादिश्लोकद्वयेन। अर्थः प्रतीतः॥ १८ स० ॥ ६१-६२ श्लो० ॥ ६१-६२ ॥

उपायावलम्बने दोषमाह, इत्येति। 'नयज्ञः' नीतिज्ञः, 'प्रभुबले' धनसैन्यबले, 'निजबले वा' स्वकीयबले च, 'इत्याद्युपायान्' प्रागुक्तान् सामादीन्, निपुणं यथा स्यात् तथा 'विनिक्षिपेत्' प्रयुञ्ज्यात्। 'निरुपायः' उपायविहीनः, विजिगीषुरिति शेषः। 'विचेष्टमानः अन्धइव', 'नियतं' सदा, 'प्रयाणं' गमनं, 'अभ्युपैति' प्राप्नोति। यथा अन्धः सयत्नोऽपि गच्छन् अभीष्टफलं न प्राप्नोति तथा उपायविहीनो विजिगीषुः युद्धयात्रादिकं कुर्व्वन्नपि विजयफलं न प्राप्नोति इति भावः। १८ स० ६३ श्लो० । ६३ ।

अथवसेति। 'विपश्चितां' नीतिपण्डितानां, 'उपायसन्दंशबलेन' 'उपायाः' सामादयः, तएव 'सन्दंशः' लोहकारोपकरणं, स एव 'बलं', तेन 'सम्पदः' विभूतयः, 'अवशाः', 'वशं' स्वायत्ततां, 'आयान्ति' प्राप्नुवन्ति, यथा सन्दंशेन सुवर्णादिकं बलादाहृत्य वशीक्रियते, तथैवोपायसन्दंशबलेन सम्पदः वशीक्रियन्त इति भावः। 'हि' यस्मात्, 'राज्ञां' विजिगीषूणां, 'उदारं' उत्कृष्टं, 'विधिवत्' यथाशास्त्रं, 'प्रयोजितं' कृतप्रयोगं, 'फलं' उपायजातं, 'क्वचित्' स्थानविशेषे, 'अर्थसिद्धये' कार्य्यसाधनाय, 'भवति'। 'उपायसन्दंशबलेन' इत्यत्र 'उपायसन्दर्शबलेन' इति, 'भवत्युदारं विधिवत् प्रयोजितं' इत्यत्र 'भवन्त्युदारा विधिवत् प्रयोक्ष्यते' इति च मुद्रितपुस्तकपाठो न समीचीनः। 'पुन्नाग् आद्यं श्लोकादयः' 'इत्याद्युपायान्निपुणमित्यन्ताः श्लोकाः हस्तलिखितपुस्तके न सन्ति। १८ स० ६४ श्लो० । ६४ ।

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानुसारिण्यां अष्टादशः सर्गः।

मुद्रितपुस्तकानुसारेण सप्तदशः सर्गः ।

## अथोनविंशः सर्गः ॥

### मुद्रितपुस्तकानुसारेणाष्टादशः सर्गः।

चतुर्थोपायकालमभिधातुमाह, सामेति। 'समादीनां' उक्तलक्षणानां, 'त्रयाणामुपायानां', 'नये' प्रयोगे, 'विफले' निष्फले, सति, 'नयसम्पन्नः' नीतिमान्, 'दण्डवित्' दण्डविधानज्ञः, विजिगीषुरिति शेषः। 'दण्डयेषु' कृतापराधेषु, 'नयं' नीतिशास्त्रोक्तं, 'दण्डं', 'विनयेत्' प्रयुञ्जीत। १९ स० १ श्लो०। १।

दण्डोऽत्र यातव्यलक्षणोऽरिः तं प्रति दण्डप्रणयनं संग्रामाख्यमभिधातुं पूर्वविधेयं तावदाह, देवेति। यातव्यलक्षणोपेते दण्ड्ये शत्रौ संग्रामकर्तुकामो विजिगीषुः, 'देवान्' इष्टान्, 'विप्रांश्च' ब्राह्मणांश्च, 'अभ्यर्च्य' सम्पूज्य, 'प्रशस्तग्रहतारके' 'प्रशस्ताः' अनुकूलाः, 'ग्रहाः', 'तारकाश्च' नक्षत्राणि च, यस्मिन् कर्म्मणि तत् यथा स्यात् तथा। 'षड्विधं' वक्ष्यमाणलक्षणं षट्-प्रकारं, 'बलं' सैन्यं, 'व्यूह्य' रचनाविशेषेण रचयित्वा, 'द्विषतः' यातव्यस्य, 'अभिमुखं' सम्मुखं, 'व्रजेत्' गच्छेत्। १९ स० २ श्लो०। २।

बलस्वरूपं गुरुलाघवञ्चाभिधातुमाह, मौलमिति। मूले भवं मूलभूतपुरुषसम्बन्धादागतं वा 'मौलं'। भरणेनोपगृहीतं 'भृतं'। 'श्रेणि' समानधर्म्मेण व्यवस्थितं, कुविन्दपट्टिकाकारसमूहः। 'सुहृद्बलं' साहाय्यागतं मित्रबलं, 'द्विषद्बलं' दण्डोपादानं शत्रुबलं, 'आटविकबलं' समग्रलाटवीभोक्तृबलं। 'बलानां' उद्दिष्टानां षड्विधसैन्यानां मध्ये, 'पूर्वं पूर्वं' प्रथमं प्रथमं, 'गरीयः' गुणैरधिकं, बलानां मध्ये भृतात् मौलं, श्रेणिबलात् भृतं गरीय इति सर्व्वत्र योज्यम्। 'व्यसनं तथा' पूर्व्वस्मिन् जायमानं व्यसनं गुणप्राप्तिलोभ्यादिकं व्यसनञ्च, 'गरीयः'। एतत्श्लोकावधि सर्व्वत्र 'भृत'पाठस्थाने मुद्रितपुस्तके 'भूतेति' पाठो न सम्यक्। अयमेव श्लोकः तृतीयः, हस्तलिखितपुस्तके तथैव दृश्यते। मुद्रितपुस्तके यदस्य चतुर्थत्वं तन्न समीचीनं। १९ स० ३ श्लो०। ३॥

एतदेव समर्थयन्नाह, सत्कारेति। 'सत्कारात्' पितृ-पैतामहसम्बन्धेन सत्कारार्हत्वात्। 'अनुरागात्' परिचयादनुरक्तत्वात्। 'सहसङ्गधनासनात्' सहालापसमीपोपवेशनात्। 'नित्यं तद्भावभावित्वात्' सहदृढ़िचयत्वात्। 'मौलं', 'मतबलात्', 'गुरु' गुणाधिकमित्यर्थः। 'सहसङ्गधनासनात्' इत्यत्र 'सह सङ्घटनाशनादिति मुद्रितपुस्तकपाठो न सङ्गतः, श्लोकोयं चतुर्थः हस्तलिखितपुस्तके तथैव दृश्यते मुद्रितपुस्तके यदस्य तृतीयत्वं तत् न सङ्गतं॥ १९ स० ४ श्लो०॥ ४॥

सन्निकृष्टतयेति। 'नित्यं सन्निकृष्टतया' नियतं समीपावस्थिततया, 'क्षिप्रोत्थानतया' पतितोत्थापकतया, 'वृत्तेश्च' जीविकायाश्च, 'स्वाम्यधीनत्वात्' स्वाम्यायत्तत्वात्, 'भृतं' उक्तलक्षणं भृतबलं, 'श्रेणिबलात्', 'गुरु' गुणाधिकं। अस्य श्लोकस्य पूर्व्वार्द्धं मुद्रितपुस्तके पतितं। श्लोकार्द्धन्तु 'सन्निकृष्टतया नित्यं क्षिप्रोत्थानतया तथा' इति। अतएव इतः प्रभृति श्लोका न यथा नियमेनाङ्किताः॥ १९ स० ५ श्लो०॥ ५॥

तुल्येति। 'तुल्यसंहर्षामर्षात्' समसुखदुःखत्वात्, 'सिद्धिलाभात्' 'सिद्धौ' विजये, सत्यां 'लाभात्' तुल्यलाभात्, 'जानपदत्वाच्च' एकजनपदवासित्वाच्च, 'मैत्राद्बलात्', 'श्रेणिबलं', 'गुरु'। 'सिद्धिलाभादित्यत्र 'सिद्धलाभादित्ययं मुद्रितपुस्तकपाठो न समीचीनः॥ १९ स० ६ श्लो०॥ ६॥

'सङ्ख्यातेति। 'सङ्ख्यातदेशकालत्वात्' निर्णीतदेशकालत्वात्, 'तथा', 'एकार्थसमागमात्' एकार्थलाभप्रयत्नात्, 'स्नेहनयोगाच्च' अनुरागसम्पर्काच्च, 'श्रेणीबलात्', 'मित्रबलं', 'गुरु', 'बलात् स्नेहनयोगाच्च' इत्यत्र 'बलादमत्तयोगाच्चेत्ययं मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० ७ श्लो०॥ ७॥

प्रकृत्येति। यतः 'आरण्यकतया' अरण्यवासितया, 'आटविकाः', 'प्रकृत्या' स्वभावेन, 'अधार्म्मिकाः' पापमतयः, 'लुब्धाः' अर्थलोलुपाः, 'अनार्य्याः' असदाचाराः, 'सत्यभेदिनः' असत्यप्रतिज्ञाः, 'तस्मात्' कारणात्, 'तेभ्यः' आटविकेभ्यः, 'शत्रुबलं' 'गुरु'॥ १९ स० ८ श्लो०॥ ८॥

शत्रुबलं आटविकबलञ्च, यात्राविषयविलोपार्थे भवतीत्याह, उभय-

मिति। 'कालापेक्षायवस्थितं' 'कालस्य' समयविशेषस्य, 'अपेक्षया' अनुरोधेन, 'व्यवस्थितं' कृतावस्थानं, 'उभयं' मूलबलं आटविकबलञ्च, 'तद्विलोपार्थं, 'तस्य' यातव्यस्य, 'विलोपार्थं' प्रभुशक्तिक्षयार्थं, भवतीति शेषः। 'विलोपे' प्रभुशक्तिक्षये, 'व्यसने च' विपदि च, यातव्यस्येति शेषः। 'अस्य' विजिगीषोः, 'परिजयः', 'ध्रुवः' निश्चितः। 'विलोपे व्यसने चैव' इत्यत्र 'विलोपव्यसने चैवेति मुद्रितपुस्तकपाठः॥ १९ स० ९ श्लो० ॥ ९॥

सावधानो विजिगीषुः उपजापं विघटयेदित्याह, उपजापेति। 'ताभ्यां' द्विषदाटविकबलाभ्यां, 'उपजापकृतात्' भेदकृतात्, 'भयात्', 'विशेषतः' विशेषेण, 'रक्षेत्' त्रासं प्राप्नुयात्, विजिगीषुरिति शेषः। विजिगीषुः स्वपक्षीयाभ्यां द्विषदाटविकबलाभ्यां कृतं उपजापं विघटयेदिति भावः। 'परस्य वा' यातव्यस्यैव, 'उपजपेत्' द्विषद्बलं आटविकबलञ्च भेदं प्रापयेत्। 'उपजापात्' यातव्यपक्षीयद्विषदाटविकबलभेदात्, 'जयः', 'ध्रुवः' निश्चितः। 'भयादाभ्यां' इत्यत्र 'भयादन्यां' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० १० श्लो० ॥ १०॥

यद्बलं यस्मिन् समये उपादेयं तद्बलोपादानमभिधातुमाह, स्फीतेति। 'स्फीतसारानुरक्तेन' 'स्फीतसारेण' अधिकबलेन, 'अनुरक्तेन' अनुरागान्वितेन, प्रागुक्तलक्षणेन बलेन, 'उपचितः' समृद्धिङ्गतः, 'परः' यातव्यः, 'संयव्ययसहिष्णुणा' 'क्षयः' मुख्यपुरुषक्षयः, 'व्ययः' हिरण्यधान्यापचयः; तान् सहते यः ताडशेन। 'तत्तुल्येनैव' परतुल्येनैव, विजिगीषुणेति शेषः। 'यातव्यः' संग्रामार्थं गन्तव्यः। यदा यातव्यः यादृग्बलेनोपचितः तदा विजिगीषुणापि तादृग्बलेनोपचितेन भवितव्यमिति भावः॥ १९ स० ११ श्लो० ॥ ११॥

प्रकृष्ट इति। 'अध्वनि' यातव्यदेशगमनमार्गे, 'प्रकृष्टे' पर्वताद्यनावृते सति। 'काले वा' युद्धयात्रासमये च, 'प्रकृष्टे' युद्धोपयोगिनि, प्रशस्तेभि इति यावत्, सति। 'सुसमाहृतैः' यथायोग्यसम्मानेन आयत्तीकृतैः, 'मौलैः' प्रागुक्तलक्षणैः बलैः, सह, 'गच्छेत्' यातव्यदेशं यायात्, विजिगीषु-

रिति शेषः । यतः 'मौलाः', 'दीर्घकालत्वात्' दिग्विजययात्रायाः दीर्घकालसाध्यत्वात्, 'व्यय-व्ययसहिष्णवः' व्ययव्ययसहनशीलाः, भवन्तीति शेषः । ॥ १८ स० १२ श्लो० ॥ १२ ॥

एष्विति । 'एषु', 'वस्तुषु' कार्य्यादिषु, 'मेधावी' प्राज्ञः, 'भृतादीनि' भृत-श्रेणि-सुहृत्-द्विषदाटविकानि षड्बलानि, 'विवर्जयेत्' सङ्गं न नयेत् । यतः 'तेषु' भृतादिषु, 'दीर्घकालाध्वखिन्नेषु' दीर्घेण विग्रहकालेन अध्वना च श्रान्तेषु, सत्सु, 'भेदभयं' उपजापभीतिः, 'भवेत्' सम्भवेत् ॥ १८ स० । १३ श्लो० ॥ १३ ॥

एतदेव समर्थयन्नाह, बहुत्वादिति । 'परसैन्यानां' यातव्यसैन्यानां, 'बहुत्वात्' प्राचुर्य्यात्, 'दीर्घकालाध्वखेदतः' दीर्घेण विग्रहकालेन अध्वना च श्रमात्, 'नित्यप्रवासयानाभ्यां' 'नित्यं' प्रतिदिनं, 'प्रवासः' प्रातिकूल्येन यासः, 'यानं' गमनं, ताभ्यां,'भेदः' चित्तविश्लेषः, 'अवश्यं जायते' । स्वबलानामिति शेषः । 'नित्यप्रवासायासाभ्यां' इति मुद्रितपुस्तकपाठे 'आयासः' अतिप्रयत्नः अन्यत् समानं । 'दीर्घकालाध्वखेदतः' इत्यत्र 'दीर्घकालाच्च खेदतः' इति मुद्रितपुस्तकपाठो न सम्यक् ॥ १८ स० १४ श्लो० ॥ १४ ॥

मौलबलोपादानकालमभिधातुमाह, प्रभूतमिति । 'मे' मम, 'भृतबलं' वेतनोपगृहीतं बलं, 'प्रभूतं' बहुतरं, विद्यत इति शेषः । 'मौलं' 'पितृ-पितामहसञ्चितेनागतं बलं, 'अल्पं' न्यूनं, तदपि 'असारवत्' सारवर्जितं, 'अरेः' यातव्यस्य, 'मौलं', 'अल्पं', 'विरक्तं' अननुरक्तञ्च,'प्रायोऽल्पसारवत्' 'प्रायः' बाहुल्येन, 'अल्पसारवत्' स्तोकसारयुक्तं, एवम्भूते काले विजिगीषुः मौलबलैः सह यातव्यसमीपं यायादिति वाक्यशेषः ॥ १८ स० १५ श्लो० ॥ १५ ॥

कूटयुद्धस्य अल्पायाससाध्यत्वमाह, प्राय इति । 'प्रायः' बाहुल्येन, 'मन्त्रेण' कूटयुद्धेन, 'योऽरयं', यतः 'अल्पायासेन' अल्पपरिश्रमेण, 'जयः' भवतीति शेषः । 'अल्पः', 'देशः' यथाधिकारस्थानं, 'अल्पः', 'कालः' युद्धोपयोगिसमयः, 'अक्षयोदये' बलाविनाशपूर्व्वकविजयलाभे, 'प्रभूव'

समर्थो बभूव। कूटयुद्धे तु अधिकसैन्यस्य अधिककालस्य वा नापेक्षणीयत्व-मिति भावः। 'अल्पोदेशस्तु कालो वा प्रभूतावत्ययोदये' इत्यत्र 'अल्पो-देशस्तु कालो वा प्रभूतौ चात्ययव्ययौ' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० ॥ १६ श्लो० ॥१६॥

भृतबलोपादानकालमभिधातुमाह, श्रान्तेति। 'श्रान्तोपजापविश्वस्तं' 'श्रान्तं' युद्धक्लेशादिभिरपसारितं, 'उपजापविश्वस्तं' 'उपजापेन' विजिगीषु-कृतभेदेन, 'विश्वस्तं' आत्मसात्कृतत्वात् विश्वासयोग्यं, 'परस्य सैन्यं' यातव्यस्य बलं, 'भृतैर्बलैः' वेतनोपगतैर्भृतैर्बलैः सह, यायादिति शेषः। 'अल्पप्रसारः' 'अल्पः' स्तोकः, 'प्रसारः' सर्वतः सैन्याभियानिर्गमस्य स तथा-भूतः यातव्यः, 'हन्तव्यः' अनायासेन विनाशयितव्यः, 'इत्युपेक्ष्य' इत्युपेक्षां कृत्वा, भृतैर्बलैर्यायादिति सम्बन्धः। यत्र यातव्यसैन्यं श्रान्तोपजापविश्वस्तं तत्र यत्र च यातव्यः अल्पप्रसारः तत्रापि भृतैर्बलैर्यायादिति भावः। 'श्रा-न्तोपजापविश्वस्तं' इत्यत्र 'श्रान्तोपजापादिश्वस्तमिति, 'इत्युपेक्ष्य' इत्यत्र 'इत्युपेक्षा' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० १७ श्लो० ॥१७॥

श्रेणिबलोपादानकालमभिधातुमाह, स्फीतमिति। 'क्षवप्रवासव्यायामात्' 'क्षवात्' अल्पात्, 'प्रवासात्' यातव्यदेशवासात्, 'व्यायामात्' युद्धक्लेशात्, 'स्फीतं' समृद्धं, 'श्रेणिबलं' सङ्घधर्मेण व्यवस्थितं सैन्यं, 'यानवर्त्मनि' प्रयाण-पथि, 'आधातुं' संस्थापयितुं, 'शक्यं' योग्यं, 'इति' इतिविविच्य, 'सैन्यं' श्रेणिबलं, 'समुत्पतेत्' समुपादाय गच्छेदित्यर्थः। 'श्रेणि' इत्यत्र 'श्रीणि' इति 'यानवर्त्मनि' इत्यत्र 'पानवर्त्मनि' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० १८ श्लो० ॥ १८॥

सुहृद्बलोपादानकालमभिधातुमाह, सुप्रभूतमिति। 'सुप्रभूतं' सुसमृद्धं, 'सुहृत्सैन्यं' मित्रबलं, 'आत्मनि' आत्मकार्य्यसम्पादने, 'आधातुं' स्थापयितुं, निर्वेढुं कर्तुमिति यावत्। 'शक्यं', 'मन्त्रेण' कूटयुद्धेन, 'अल्पयुद्धं' अल्प-प्रयाससाध्यं युद्धं, चेत् तदा 'काल्यमेव' स्तोकमेव, 'सुहृत्सैन्यं', 'आत्मनि आधातुं शक्यं', 'इति' एवम्भूते काले, 'सुहृद्बलैः' मित्रबलैः सह, याया-

दिति यावदर्थः। यत्र युद्धस्य भङ्गप्रयाससाध्यत्वेऽपि सुहृत्सैन्यस्य सुसम्बद्धत्वं तत्र यत्र सुहृत्सैन्यस्य चाल्पत्वेऽपि मन्त्रेण युद्धसाध्यत्वं तत्र च सुहृद्बलोपादानं कर्त्तव्यमिति भावः॥ १६ स० १६ श्लो०॥ १६॥

मित्रेति। 'मित्रसाधारणे' मित्रस्य चात्मनश्च समानफलोदये, 'कार्ये' कर्त्तव्ये, तथा 'मित्रायत्ते' मित्राधीने, 'फलोदये' फलप्राप्तौ, तथा 'अनुग्राह्ये च' अनुग्रहयोग्ये मित्रान्तरे च, 'पीडे' शत्रौ, 'मित्रेणैव सह', 'व्रजेत्' गच्छेत्, विजिगीषुरिति शेषः। 'पीडे च' इत्यत्र 'पार्ष्णिग्रे' इति मुद्रितपुस्तकपाठो न साधुः॥ १६ स० २० श्लो०॥ २०॥

द्विषद्बलोपादानकालमभिधातुमाह, प्रभूतेनेति। 'श्वसूकरवधापेक्षी' 'श्वभिः' कुक्कुरैः, सूकरवधं अपेक्षते यः स इव विजिगीषुः, 'प्रभूतेन' सम्बद्धेन, 'अरिसैन्येन' द्विषद्बलेन, सह 'महतः' बलवतः, 'रिपून्' शत्रून्, 'प्रेषयेत्' युद्धे नियोजयेत्। 'वा' अथवा, 'नयं वचनं' नीतियुक्तं वाक्यं, 'महतो रिपून्', 'नयेत्' प्रापयेत्। यथा चाण्डालाः श्वभिः सूकरान् विनाशयन्ति तथा मह्यन्तः रिपवः अरिसैन्येनैव जेतव्या इति भावः॥ १६ स० २१ श्लो०॥ २१॥

अभ्युत्थितमिति। 'कोपभयात्' अपराधेन प्रभोः क्रोधभयात्, 'अभ्यासे' निकटे, 'अभ्युत्थितं' उपस्थितं, 'रिपोः' शत्रुस्य, 'बलं' सैन्यं, 'वासयेत्' सदाध्ये निवासयेत् 'दुर्गकण्टकशोधनैः' शत्रुदुर्गकण्टकमर्दनैः, 'रलं' रिपुं, 'कर्षयेच्च' आकर्षयेच्च। 'अभ्युत्थितं' इत्यत्र 'अविचित्तं' इति मुद्रितपुस्तकपाठः, तादृशपाठे तु उपस्थितक्रियाध्याहारेण 'अविचित्तं' अविरुद्धचित्तं, सत् उपस्थितं इत्यर्थः। 'अभ्यासे तु' इत्यत्र 'अभ्यासेन' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १६ स० २२ श्लो०॥ २२॥

आटविकबलोपादानकालमभिधातुमाह, नित्यमिति। 'पण्डितः' नीतिज्ञः, 'दुर्गकण्टकशोधने' शत्रुदुर्गकण्टकमर्दने, 'परदेशप्रवेशे च' शत्रुजनदेशप्रवेशे च, 'नित्यं' सदा, 'आटविकं सैन्यं' प्रागुक्तलक्षणं बलं, 'पुरः' अग्रतः, 'कुर्वीत'। मुद्रितपुस्तके 'दुर्गकण्टकशोधने' इत्यत्र 'दुर्गकण्टक-

योधनैः' इतिपाठः, 'पुरः' इत्यत्र 'पुरा' इति पाठश्च न समीचीनः॥ १९ स० २३ श्लो०॥२३॥

उपसंहरन्नाह, एतन्मौलादीति। 'एतत्' प्रागुक्तं, 'मौलादिषड्वर्गं' मौल-भृत-श्रेणि-सुहृत्-द्विषदाटविकाख्यं षड्विधं बलं, 'पदात्यश्वरथद्विपैः', 'चतुरङ्गबलं'। 'मन्त्र-कोषाभ्यां', 'षडङ्गञ्च', 'विदुः'॥१९ स० २४ श्लो०॥२४॥

इतीति। 'बली' महाबलसम्पन्नो विजिगीषुः, 'इत्येतत् षड्विधं बलं', 'यथायोगं' यस्य बलस्य येन बलेन सह योगो युज्यते तेन बलेन सह तद्बलं संयोज्य इत्यर्थः। 'सुनिश्छिद्रं' रन्ध्ररहितं, निर्दोषमिति यावत्, यथा स्यात् तथा 'प्रतियुह्य' परर्चितव्यूहस्य प्रत्यनीकभूतव्यूहं विरचय्य, 'प्रति बलं' परबलं, 'प्रति', 'यायात्' गच्छेत्। 'प्रतिबलमित्यत्र 'व्यायोबलमिति मुद्रितपुस्तकपाठः। 'यथायोगं बलं' इत्यत्र 'यथायागबलं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० २५ श्लो०॥ २५॥

योगेति। 'नृपः' विजिगीषुः, 'बलस्य' प्रागुक्तस्य षड्विधस्य, 'योगं' स्वकीयैः परकीयैर्वा सह सम्बन्धं, 'सर्व्वं' अशेषं, 'मन्त्रादिना' गूढपुरुषप्रणिधानादिना, 'विजानीयात्'। तथा 'हताहतप्रचारं' सेनाभिः हतमहतं वा प्रचारं कः कुत्र प्रचरतीति गत्यागत्यादिकं, 'विजानीयात्'। तथा 'सेनापतेरपि' 'सेना' सकलबलसमुदायः, तस्याः पतिः, तस्य हताहतप्रचारादिकं विजानीयादिति सर्व्वत्र सम्बन्धः॥ १९ स० २६ श्लो०॥ २६॥

सेनायालक्षणमभिधाय सेनापतेरपि सप्तदशश्लोकपरिकल्पितकुलकेन लक्षणमभिधातुमाह, कुलोद्गतमिति। 'कुलोद्गतं' विशुद्धोभयकुलोत्पन्नं, 'जानपदं' स्वजनपदभवं, 'मन्त्रज्ञं' षषाड्गमन्त्राभिज्ञं, 'मन्त्रिसम्मतं' मन्त्रिणामभिमतं, 'यत्नतः', 'दण्डनीतेः' दण्डनीतिशास्त्रस्य, 'प्रयोक्तारं' प्रयोगनिपुणं, 'अध्येतारञ्च' अध्ययनशीलञ्च एवम्भूतं जनं 'ध्वजिनीपतिं कुर्वीत' इति परेणान्वयः एवमुत्तरत्रापि 'मन्त्रिसम्मतं' इत्यत्र 'मन्त्रसम्मितमिति मुद्रितपुस्तकपाठः॥ १९ स० २७ श्लो०॥ २७॥

सत्त्वेति। 'सत्त्व-शौर्य्य-क्षमा-स्थैर्य्य-माधुर्य्यार्य्यगुणान्वितं' 'सत्त्वं' बलं, 'शौर्य्यं'

पराक्रमः, 'क्षमा' सहिष्णुता, 'स्थैर्य्यं' स्थिरता, 'माधुर्य्यं' सौन्दर्य्यं, 'अर्य-गुणाः' धैर्य्य—गाम्भीर्य्यादयः, तैः 'अन्वितं' युक्तं । 'प्रभावोत्साहसम्पन्नं' 'प्रभावः' प्रतापः, 'उत्साहः', ताभ्यां 'सम्पन्नं' युक्तं । 'आजीव्यमनुजीविनां' 'अनुजीविनां' आश्रितानां, 'आजीव्यं' आश्रयस्वरूपं ॥ १९ स० २८ श्लो० ॥२८॥

मित्रवन्तमिति॥ 'मित्रवन्तं' 'मित्रं' सुहृत्, तत् विद्यते अस्य असौ मित्रवान् तं । 'उदारास्यं' विशालवदनं, 'बहुस्वजनबान्धवं' बहवः स्वजना बान्धवाश्च यस्य तं । 'व्यावहारिकं' व्यवहारज्ञं । 'अक्षुद्रं' महान्तं । 'पौर-प्रकृतिसङ्गतं' 'पौरा' अमात्या, 'प्रकृतिः' स्वभावः, तया 'सङ्गतं' युक्तं । अथवा 'पौरप्रकृतिषु' पुरस्थितप्रजासु, 'सङ्गतं' मिलितं ॥ १९ स० २९ श्लो० ॥ २९ ॥

नित्येति । 'नित्याकारणवैराणामकर्त्तारं' चिरकालीनाकारणवैरकरणा-प्रवृत्तं । 'अनाविलं' निर्म्मलं, निर्दोषमिति यावत् । 'श्रुतानुबन्धिकर्म्माणं' शास्त्रानुगतकर्म्मकारिणं । 'कल्याणमित्रं' अल्पप्रज्ञं, 'बहुश्रुतं' बहुशास्त्रज्ञं ॥ १९ स० ३० श्लो० ॥ ३० ॥

आरोग्यमिति । 'आरोग्यं' अनामयं, अरोग एव आरोग्यः स्वार्थे ष्यञ्-प्रत्ययः । 'आयतं' प्रांशुं । 'शूरं' शौर्य्यसम्पन्नं । 'त्यागिनं' दातारं । 'कालवे-दिनं' कालज्ञं । 'कल्याणाकृतिसम्पन्नं' मनोज्ञाकारयुक्तं । 'स्वसंम्भाव्यपरा-क्रमं' स्वानुभवनीयविक्रमं ॥ १९ स० ३१ श्लो० ॥ ३१ ॥

गजाश्वेति । 'गजाश्वरथचर्य्यासु शिक्षितं' गजाश्वरथानां, 'चर्य्यासु' गतिषु, 'शिक्षितं' प्राप्तशिक्षं । 'सुजितश्रमं' पराभूतपरिश्रमं । 'खड्गयुद्ध-नियुद्धेषु' खड्गयुद्ध-मल्लयुद्धेषु, 'शीघ्रचङ्क्रमणक्षमं' शीघ्रपुनःपुनर्भ्रमणशक्तं ॥ १९ स० ३२ श्लो० ॥ ३२ ॥

युद्धभूमीति । 'युद्धभूमिविभागज्ञं' युद्धोपयोगिस्थानविभागविदं, 'सिंहवद्गूढविक्रमं' सिंहवदन्तर्लीनपराक्रमं । 'अदीर्घसूत्रं' अचिरक्रियं, 'निस्तन्द्रं' 'तन्द्रा' आलस्यं, तद्रहितं, 'अमर्षणं' अपमानासहिष्णुं, 'अनुद्धतं' अधृष्टं ॥ १९ स० ३३ श्लो० ॥ ३३ ॥

हस्त्यश्वेति । 'हस्त्यश्व-रथ-शस्त्राणां', 'सम्यग्लक्षणवेदिनं' सम्यक्चिह्नज्ञं ।

'चर-स्थिरविवेकज्ञं' 'चरस्य' गमनशीलगुप्तदूतस्य, 'स्थिरस्य' निश्चलगुप्तदूतस्य 'विवेकज्ञं' प्रभेदज्ञं, 'कृतज्ञं' उपकाराङ्गीकर्त्तारं, 'अनुकम्पकं' दयालुं ॥ १९ स० २४ श्लो० ॥ २४ ॥

धर्म्मेति। 'धर्म्मकर्म्मसमायोगं' धर्म्मोपयोगिकर्म्मणा 'समायोगः' सम्बन्धः, यस्य तं। 'कुशलं' निपुणं, 'कुशलानुगं' निपुणानुगामिनं, 'सर्व्वयुद्धक्रियोपेतं' सर्व्वप्रकारयुद्धक्रियायुक्तं, 'सर्व्वशुद्धक्रियोपेतं' इतिपाठे सकलविशुद्धक्रियान्वितमित्यर्थः। 'तत्परिकर्म्मणि' 'तस्य' सर्व्वप्रकारयुद्धस्य, 'परिकर्म्मणि' प्रसाधनक्रियायां, 'शक्तं' समर्थं ॥ १९ स० २५ श्लो० ॥ २५ ॥

स्वभावेति। 'अश्व-रथ-दन्तिनां' 'अश्वानां' हयानां, 'रथानां' सैनिकपुरुषाणां, 'दन्तिनां' गजानां, 'स्वभावचिन्तकतया युक्तं' स्वभावं चिन्तयन् जानाति यः तस्य भावः तया युक्तं। 'तन्नामशास्त्राणि' 'तेषां' अश्व-रथ-दन्तिनां, 'नामशास्त्राणि', 'वेत्तारं' ज्ञातारं, 'तद्विधानोपपादकं' 'तेषां' अश्वरथदन्तिनां, 'विधानं' नियमः, तस्य 'उपपादकं' सम्पादकं॥ १९ स० २६ श्लो० । २६ ॥

देशेति। 'देशभाषास्वभावज्ञं' नानादेशीयभाषास्वभावज्ञानसम्पन्नम्। 'लिपिज्ञं' नानादेशीयलिपिज्ञानसम्पन्नम्। 'सुदृढस्मृतिं' दृढ़तरस्मरणम्। 'निशाप्रचारकुशलं' रात्रिसञ्चारनिपुणम्। 'शकुनज्ञाननिश्चितं' निमित्तज्ञं, शुभाशुभचिह्नज्ञमिति यावत्। 'शकुनज्ञाननिश्चितं' इत्यत्र 'कुशलज्ञाननिश्चितं' इति मुद्रितपुस्तकपाठे तु बहूनां मध्ये 'कुशलस्य' निपुणस्य, ज्ञानयुक्तमित्यर्थः॥ १९ स० २७ श्लो० । २७ ॥

उदयास्तेति। 'तन्निषेवितं' 'तेषां' दिग्देशमार्गाणां, 'निषेवितं' निषेवणं यस्य तं। भावे क्तप्रत्ययः। अन्यत् प्रतीतम् ॥ १९ स० २८ श्लो० ॥२८॥

क्षुत्पिपासेति। 'अनाहितभयग्लानिं' 'अनाहिता' अनुत्पन्ना, 'भयं' त्रासः, 'ग्लानिः' क्लान्तिश्च, यस्य तं। अन्यत् प्रतीतम्॥ १९ स० २९ श्लो० ॥ २९ ॥

भेत्तारमिति। 'परसैन्यानां' शत्रुसैन्यानां, 'भेत्तारं' भेदकर्त्तारं। 'दुःसाध्याहितनिश्चयं' 'दुःसाध्यस्य' साधयितुमशक्यस्य, 'आहितनिश्चयं'

कृतोपायनिश्चयं। 'भयानाञ्च' भयेन पराजितानाञ्च, 'भयानाञ्च' इति पाठे भीतानाञ्च। 'सम्यग्विष्टम्भसत्त्वम्' सम्यक्प्रतिरोधकम् ॥ १९स०४०श्लो०॥४०॥

अवस्कन्देति। 'अवस्कन्दस्य' शिविरस्य, 'अभिगोप्तारं' सम्यग्रक्षितारं। 'वेत्तारं सैन्यकर्म्मणां' सैन्यकर्म्माभिज्ञं। 'वेत्तारं' इत्यत्र 'भेत्तारं' इति मुद्रितपुस्तकपाठो न सम्यक्। 'चरदूतप्रचारज्ञ' 'चरस्य' गुप्तदूतस्य, 'दूतस्य' सामान्यतोवार्त्तावाहकस्य, 'प्रचारज्ञं' सञ्चारज्ञं। 'महारम्भफलोपगं' 'महारम्भफलं' महता उद्योगेन लभ्यं, फलं, 'उपगच्छति' स्वीकरोति यस्तं। बह्वायाससाध्यफलप्राप्तावपि कृतोद्योगमिति भावः ॥ १९ स० ४१ श्लो० ॥ ४१ ॥

शश्वदिति। 'शश्वत्' सदा, 'संसिद्धकर्म्माणं' संसिद्धं 'कर्म्म' अनुष्ठानं, यस्य तं। 'सिद्धकर्म्मनिषेवितं' सिद्धं कर्म्म येषां तैः निषेवितं। 'पराभवेष्वनिर्व्विण्णं' 'पराभवेषु' पराजयेषु, 'अनिर्व्विण्णं' निर्व्वेदरहितं, 'परापरेषु निर्व्विण्णमिति मुद्रितपुस्तकपाठे तु 'परापरेषु' प्रधानाप्रधानेषु, 'निर्व्विण्णं' खिन्नं, यथा प्रधानेषु बलेषु निर्व्विण्णेषु निर्व्विण्णं तथा अप्रधानेष्वपि बलेषु निर्व्विण्णेषु निर्व्विण्णं इति यावत्। 'श्रीमद्राज्यार्थतत्परं' 'श्रीमतः' राज्ञः, विजिगीषोरिति यावत्,'राज्यार्थे' राज्यरूपविषये, 'तत्परं' व्यग्रं ॥ १९ स० ४२ श्लो० ॥ ४२ ॥

इत्यादीति। 'इत्यादिलक्षणोपेतं' प्रागुक्तलक्षणाक्रान्तं, 'ध्वजिनीपतिं' सेनापतिं, 'कुर्व्वीत'। 'सः' ध्वजिनीपतिः, 'सदा' सर्व्वदा, 'उद्युक्तः' कृतोद्योगः, सन्, 'दिवानिशं' दिवारात्रं, 'ध्वजिनीं' सेनां, 'गोपयेत्' रक्षेत्। 'स गोपयेदित्यत्र 'सङ्गोपयेत्' इति मुद्रितपुस्तकपाठः ॥ १९ स० ४३ श्लो० ॥ ४३ ॥

नयन्नीति। 'व्यूहीकृतैर्बलैः' व्यूहरचितैर्बलैः। अन्यत् प्रतीतं ॥ १९ स० ४४ श्लो० ॥ ४४ ॥

स्कन्धावारप्रयाणमभिधातुमाह, नायक इति। आलापैकवचनं। 'नायकः' सहस्रबलनेता, 'प्रवीरपुरुषावृतः' प्रवीराः पुरुषाः तैरावृतः, सन्। 'प्रवीर-

एतनाहतः' इति मुद्रितपुस्तकपाठे तु प्रहता वीरा यत्र सा तथा भूतया 'एतनया' सेनया, आहतः, सन्। 'पुरतः' अग्रतः, 'यायात्' गच्छेत्। 'मध्ये' स्कन्धावारस्य मध्ये, 'कलत्रं' अन्तःपुरादिकं, सकलपुत्रदारमिति यावत्, 'स्वामी' विजिगीषुः, 'कोषः' धनसमुदायः, 'फल्गु', 'फल्गु' असारं, तच्च बलं, यायादिति पूर्व्वेणान्वयः। 'फल्गु च फल्गु' इत्यत्र 'फल्गु महद्धन' मिति मुद्रितपुस्तकपाठो न सम्यक्॥ १९ स० ४५ श्लो०॥ ४५॥

पार्श्वयोरिति। सर्व्वत्र यायादिति अनुसन्धानीयम्। श्लोकार्थः सुगमः॥ १९ स० ४६ श्लो०॥ ४६॥

पश्चादिति। 'कृती' निपुणः, 'सेनापतिः' उक्तलक्षणः पुरुषः, 'सर्व्वं' सकलसैन्यं, 'पुरस्कृत्य' अग्रेकृत्य, 'सम्बद्धसैन्यौघः' सम्यग्व्यूहीकृतसेनासमूहः, तथा 'खिन्नान्' श्रमखेदान्, 'शनैः' मन्दं यथा स्यात् तथा, 'आश्वासयन्' आश्वासं प्रापयन्, सन् 'स्वयं', 'पश्चात् यायात्'॥ १९ स० ४७ श्लो०॥ ४७॥

प्रयाणक्रममभिधातुमाह, यायादिति। 'पुरः' अग्रतः, 'भये' आक्रमणाशङ्कायां, सति, 'मकरेण' वक्ष्यमाणलक्षणेन, 'महता व्यूहेन', 'वा' अथवा, 'उद्धतपक्षेण' बलवत्पक्षानीकेन, 'श्येनेन' वक्ष्यमाणलक्षणेन व्यूहेण, तथा, 'धीरवक्त्रया' धीरा वक्त्रे सेनामुखे अग्रे इति यावत् यस्याः तथाभूतया, 'सूच्या' सूच्याकारवक्ष्यमाणलक्षणव्यूहेन, 'यायात्', इत्यर्थः। 'उद्धतपक्षेण' इत्यत्र 'उभयपक्षेण' इति, 'धीरवक्त्रया' इत्यत्र 'धीरचक्रया' इति च पाठद्वयं न समीचीनं॥ १९ स० ४८ श्लो०॥ ४८॥

पश्चाद्भये इति। 'पश्चाद् भये', सति, 'शकटं' शकटाख्यं वक्ष्यमाणलक्षणं व्यूहं 'प्रकल्पयेदित्यनेन सम्बन्धः एवं सर्व्वत्र। 'पार्श्वयोर्भये' सति, 'वज्रसंज्ञितं' वज्राख्यं वक्ष्यमाणलक्षणं व्यूहं, 'सर्व्वतः' समन्ताद्भये, 'सर्व्वतोभद्रं' वक्ष्यमाणलक्षणं व्यूहं। 'भये व्यूहमित्यत्र 'भयव्यूहमिति मुद्रितपुस्तकपाठो न समीचीनः॥ १९ स० ४९ श्लो०॥ ४९॥

कन्दरेति, 'कन्दराशैलगहनविषमगावसङ्कटे' 'कन्दरा' पर्व्वतदरी,

'शैलाः' पर्व्वताः, 'गहनानि' दुर्गमाणि, 'निम्नगाः' नद्यः, 'वनानि' वृक्षगुल्मादीनि, एतैः 'सङ्कटे' सङ्कीर्णे, 'दीर्घे' दूरे, 'अध्वनि' प्रयाणमार्गे, 'परिश्रान्तं' क्लान्तं, 'क्षुत्पिपासाहिमक्लमं' क्षुत्पिपासाहिमैः 'क्लमः' क्लान्तिः, यस्य तत्,। 'व्याधि-दुर्भिक्ष-मरकैः पीड़ितं' 'व्याधयः' ज्वरादयः, 'दुर्भिक्षं' देशे भक्ष्याभावः, 'मरकं' मारीभयं, एतैः 'पीड़ितं' उपद्रुतं, 'दस्युविद्रुतं' 'दस्युभिः,' 'विद्रुतं' उत्पीड़ितं,'पङ्क-पांशु जलस्कन्नं' 'पङ्काः' कर्दमाः,'पांशवः' रजांसि, 'जलानि,' एतैः 'स्कन्नं' समाकुलं, 'व्यस्तं' पृथक्भूतं, 'पुञ्जीकृतं' सङ्कीर्णं, 'प्रसुप्तं' निद्रितं, 'भोजनव्यग्रं' भक्षणोत्कण्ठं, 'अभूमिष्ठं' युद्धानुपयोगिभूमिस्थितं, 'असंस्थितं' विशृङ्खलं, 'एवमादिषु,' 'व्यसनेषु' विपत्सु, 'जातेषु,' 'समाकुलं' व्याकुलं, 'स्वसैन्यं' निजबलं, 'साधु' सम्यक्, 'रक्षेत,' 'परसैन्यञ्च' शत्रुबलञ्च, 'घातयेत्' विनाशयेत् ॥ १९ स० ॥ ५०-५१-५२-५३ श्लो० ॥ ५०-५१-५२-५३ ॥

कूटयुद्धविकल्पानभिधातुमाह, विशिष्ट इति । 'विशिष्टो देशकालाभ्यां' उत्कृष्टदेशकालावस्थितः, 'भिन्नारिप्रकृतिः' 'भिन्नाः' विश्लेषिताः, 'अरेः' यातव्यस्य, 'प्रकृतयः' अमात्यादिराज्याङ्गानि, येन स तथाभूतः, 'बली' उत्कृष्टबलसम्पन्नः, विजिगीषुरितिशेषः। 'प्रकाशयुद्धं,' 'कुर्य्यात्,' 'विपर्य्यये' देशकालवैशिष्ट्याद्यभावे, 'कूटयुद्धं' अप्रकाशयुद्धं, 'कुर्य्यात्' ॥ १९ स० ॥ ५४ श्लो० ॥ ५४ ॥

तेष्विति । 'तेषु' अनन्तरोक्तेषु, 'अवस्कन्दकालेषु' बलव्यसनकालेषु, 'अभूमिष्ठं' अयोग्यभूमिस्थितं, 'समाकुलं' व्याकुलं, 'परं' शत्रुं, 'हन्यात्' कूटयुद्धेन विनाशयेत् । 'स्वभूमिष्ठं' योग्यभूमिस्थितं, 'परं', 'तद्भूमौ चोपजापतः' 'तस्य' यातव्यस्य, 'भूमौ' अनुकूलभूमौ, 'उपजापतः' प्रकृतिभेदतः, हन्यादिति पूर्व्वेण सम्बन्धः। 'अभूमिष्ठं स्वभूमिष्ठं तद्भूमौ चोपजापतः'इत्यत्र 'अभूमिष्ठं स भूमिष्ठः स्वभूमौ चोपजायते' इति मुद्रितपुस्तकपाठो न समीचीनः। १९ स० ॥ ५५ श्लो० ॥ ५५ ॥

प्रकृतीति । 'प्रकृतिप्रग्रहाद्दष्टं' 'प्रकृतेः' राज्याङ्गस्य, 'प्रग्रहेण' आक्र-

मयेन, 'श्वभ्रं' चुभ्रं। 'स्पशैः' गुप्तचरैः। 'स्पशैः' इत्यत्र 'स्पर्शैः' इति मुद्रितपुस्तकपाठो न समीचीनः अन्यत् प्रतीतं ॥ १९ स० ॥ ५६ श्लो० ॥ ५६ ॥

पुरस्तादिति। 'पुरस्तात्' अग्रतः, योद्धुं 'दर्शनं,' 'दत्त्वा' सन्दर्श्य, 'तत्सच्चकृतनिश्चयं' येन विजिगीषुबलेन दर्शनं दत्तं तत्सच्चकृतो निश्चयो येन यातव्येन तं। 'प्रवीरेण' प्रकृष्टवीरान्वितेन, 'वेगिना' वेगवता, 'बलेन' सैन्येन, 'पश्चात्' पृष्ठतः, 'उत्पात्य' आक्रम्य, 'हन्यात्' विनाशयेत्। 'पुरस्तात्' इत्यत्र 'पुरस्तु' इति मुद्रितपुस्तकपाठः। 'तत्सच्चकृतनिश्चयं' इत्यत्र तत्सच्चकृतनिश्चयात्' इति,'उत्पात्य' इत्यत्र 'उत्पद्य' इति च मुद्रितपुस्तकपाठो न समीचीनः। 'प्रवीरेण' इत्यत्र 'सवीरेण' इति मुद्रितपुस्तकपाठः॥ १९ स० ॥ ५७ श्लो० ॥ ५७ ॥

पश्चादेति। 'वा' अथवा, 'पश्चात्' पृष्ठतः, 'संकुलीकृत्य' समाकुलं कृत्वा, अरिसैन्यमिति शेषः। 'पूर्व्वतः' अग्रतः,'सारेण' बलेन, 'हन्यात्' विनाशयेत्। 'आभ्यां प्रागुक्तपश्चाद्घाताभ्यां, 'कूटयोधने,' 'पार्श्वाभिघातौ,' 'आख्यातौ' कथितौ ॥ १९ स० ॥ ५८ श्लो० ॥ ५८ ॥

पुरस्तादिति। 'पुरस्तात्' अग्रतः, 'विषमे' दुर्गमे, 'देशे,' 'वेगवान् विजिगीषुः,' 'पश्चाद् हन्यात्'। 'पश्चाद् विषमे,' 'पुरः' अग्रतः, हन्यात्, 'एवमेव तु पार्श्वयोः' वामतो विषमे, दक्षिणतो हन्यात्। दक्षिणतो विषमे, वामतो हन्यादित्यर्थः। मुद्रितपुस्तके श्लोकस्यास्य शेषार्द्धस्थाने श्लोकान्तरस्य शेषार्द्धं मुद्रितं। शेषार्द्धन्तु "पुरःपश्चाच्च विषमे एवमेव तु पार्श्वयोः" इति ॥ १९ स० ॥ ५९ श्लो० ॥ ५९ ॥

"प्रथमं योधयित्वा वा दूष्यमैत्राटवीबलैः। श्रान्तं सन्तं निराक्रन्दं हन्याद-श्रान्तवाहनः" इति। 'प्रथमं' पूर्व्वमेव, 'दूष्यमैत्राटवीबलैः', 'योधयित्वा' युद्धं कारयित्वा, 'श्रान्तं' प्राप्तश्रमं, 'सन्तं' भवन्तं, 'निराक्रन्दं' मित्रबल-रहितं शत्रुमिति शेषः। 'अश्रान्तवाहनः', सन् 'हन्यात्'। ... मुद्रितपुस्तके पतितः ॥ १९ स० ॥ ६० श्लो०

"दूष्यमित्रबलैर्वापि भङ्गं दत्त्वा प्रयत्नवा

व्यपाश्रयः" इति। 'हृष्टामित्रबलैः', कारणभूतैः, 'भङ्गं दत्त्वा,' 'प्रयत्नवान्', विजिगीषुरितिशेषः। 'जितमेवेति विश्वस्तं शत्रुं,' 'व्यपाश्रयः' वनादिच्छन्नः, सन्, 'हन्यात्'। अयमपि श्लोकः मुद्रितपुस्तके पतितः॥ १९ स॰॥ ६१ श्लो॰॥ ६१॥

स्कन्धावारेति। 'अप्रमत्तः' सावधानो विजिगीषुः, 'स्कन्धावार-पुर-ग्राम-सस्यसार्थप्रजादिषु', 'विक्षोभ्य' क्षोभं प्रापय्य, 'परानीकं' शत्रुसैन्यं, 'विनाशयेत्'। 'स्कन्दावार-पुर-ग्राम-सस्यसार्थ-प्रजादिषु' इत्यत्र 'स्कन्धावार-पुर-ग्राममासमानं प्रजादिषु' इति मुद्रितपुस्तकपाठो न सम्यक्।१९ स॰॥ ६२ श्लो॰। ६२॥

फल्गुसैन्येति। 'सारवद्बलं', सारयुक्तं स्वसैन्यं, 'फल्गुसैन्यप्रतिच्छन्नं' असारसैन्यवेष्टितं, 'कृत्वा', 'तद्विलोपे' फल्गुबलविनाशे, 'समासक्तं' व्यापृतं, अरिसैन्यमिति शेषः। 'सिंहवत्', 'उत्पत्य' आक्रम्य, 'ग्रसेत्' विनाशयेत्, विजिगीषुरिति शेषः। 'समासक्तं' इत्यत्र 'मर्द्दयन्तं' इति मुद्रितपुस्तकपाठः। १९स॰॥ ६३ श्लो॰॥ ६३॥

मृगयेति। विजिगीषुः 'व्यपाश्रयः' वनादिसंलीनः, सन्, 'मृगयासंप्रयुक्तं' मृगयाव्यापारासक्तं, अथ वा 'गोग्रहाकृष्टं', 'अप्रबन्धनात्', 'तत्सक्तं' गोगणकृतदृष्टिं, 'शत्रुं' हन्यात्'। १९ स॰॥ ६४ श्लो॰॥ ६४॥

अवस्कन्देति। 'अवस्कन्दभयात्' आक्रमणभयात्, 'रात्रौ', 'प्रजागरकृतश्रमं' जागरणेन क्लान्तं, अतएव 'दिवासुप्तं','निद्राव्याकुलं' निद्राविकलं, च 'सैनिकं', 'हन्यात्'। अस्य श्लोकस्य शेषार्द्धं मुद्रितपुस्तके पतितं। शेषार्द्धन्तु "दिवा प्रसुप्तं वा हन्यात् निद्राव्याकुलसैनिकं" इति। १९ स॰॥ ६५ श्लो॰॥ ६५॥

पूर्व्वाह्ण इति। 'सौप्तिकविधानवित्' वक्ष्यमाणलक्षणसौप्तिकविधानज्ञः, अन्यत् प्रतीतं। 'पूर्व्वाह्ण आहतं श्रान्तं' इत्यत्र 'अहसमाहतश्रान्तं' इति मुद्रितपुस्तकपाठो न साधुः। १९ स॰॥ ६६ श्लो॰॥ ६६॥

सपादेति। 'सपादकोषावरणैः' पादानां चर्म्ममयाः 'कोषाः', 'आवरणानि'

सन्नाहाः, तद्युक्तैः 'नागैः' गजैः, 'अतिजवोपेतैः' अत्यन्तवेगिभिः, 'अश्वैः', 'वा' अथवा, 'खड्गपाणिभिः', 'नरैः', 'सैनिकं' सम्बलविनाशं, 'कुर्य्यात्'। 'नागैः' इत्यत्र 'भागैः' इति मुद्रितपुस्तकपाठस्त्वसंगतः। 'अश्वैरतिजवोपेतैः' इत्यत्र 'कोपादुग्रजवोपेतैः' इति मुद्रितपुस्तकपाठः न समीचीनः॥ १९ स०॥ ६७ श्लो०॥ ६७॥

प्रतिसूर्य्येति। 'प्रतिसूर्य्य-महावातं' प्रतिकूलौ सूर्य्य-महावातौ यस्य तथाभूतं, अतएव 'सम्मीलितेक्षणं' मुद्रितनेत्रं, 'शत्रुं', 'लघु' शीघ्रं, 'उत्थितः', सन् विजिगीषुः 'इत्येवं कूटयुद्धेन हन्यात्'। 'प्रतिसूर्य्यमहावातं' इत्यत्र 'प्रतिसूर्य्यं महावातं' इति मुद्रितपुस्तकपाठो न सम्यक्। १९ स०॥ ६८ श्लो०॥ ६८॥

नीहारेति। यतः, 'नीहारः', धूमिका, 'तिमिरं' अन्धकारः, 'गावः' गोसमूहः, 'श्वभ्रं' विवरं, 'अद्रिः' पर्व्वतः, 'निम्नगाः' नद्यः, एताः, 'शत्रुं', 'अवन्ति' रक्षन्ति, अतः 'इत्यादि' नीहारादिकं, 'सत्त्वं' 'सत्त्वं' विद्यमानं, त्रायते छादयति यत् एवम्भूतं, 'सद्म' आश्रयस्थानं, 'प्रकीर्त्तितं' कथितं, बुधैरिति शेषः। 'अवन्ति शत्रुमित्यादि सत्त्वं सद्म प्रकीर्त्तितं' इत्यत्र 'वदन्ति शत्रुमित्यादि छत्रं सद्म प्रकीर्त्तितं' इति मुद्रितपुस्तकपाठो न सम्यक्। १९ स०॥ ६९ श्लो०॥ ६९॥

उपसंहरन्नाह, साध्वेति। 'अप्रमत्तः' अवहितः, 'व्यवसायवर्त्ती' व्यवसायेस्थितः, विजिगीषुः, 'साधु' यथा भवति तथा, 'येन प्रकारेण' कूटयुद्धादिना, 'परं' शत्रुं, 'निहन्यात्' विनाशयेत्। 'अप्रमत्तः', विजिगीषुः 'परैः' प्रणिधिभिः, 'समावेदिततत्प्रचारः' सम्यक्विज्ञापितशत्रुप्रचारः, सन्, 'तेनैव' तेन प्रकारेणैव, कूटयुद्धादिनेति यावत्, 'ततः' यातव्यात्, 'शङ्केत' शङ्कां कुर्व्वीत। 'साध्वप्रमत्तः' इत्यत्र 'साधु प्रवृत्तः' इति मुद्रितपुस्तकपाठः, 'येन प्रकारेण' इत्यत्र 'यानप्रकारेण' इति मुद्रितपुस्तकपाठश्च न समीचीनः। १९ स०॥ ७० श्लो०॥ ७०॥

कूटयुद्धैः शत्रुवधे पापमाशङ्क्याह, नियतेति। विजिगीषुः 'नियतं'

निश्चयेन, 'कूटयुद्धेन', 'शत्रून्', 'उपनिहन्यात्' उपेत्य विनाशयेत्। 'हि' यतः, 'छद्मना' छलेन, 'शत्रुनाशः', 'धर्म्मं', 'न', 'तिरयति' आच्छादयति, विनाशयतीति यावत्। तदेव दृष्टान्तेन द्रढ़यति 'अचकितेति, 'सुनिशित-शस्त्रः' सुतीक्ष्णायुधः, 'द्रोणसूनुः' अश्वत्थामा, 'इव' यथा, 'अचकितं', 'निशि', 'सुप्तं' निद्रितं, 'पाण्डवानां', 'अनीकं' सैन्यं, 'जघान' विनाशितवान्। 'नियतमुपनिहन्यात् कूटयुद्धेन' इत्यत्र 'नियतमिति निहन्यात् कूटयुद्धेषु' इति, 'तिरयति धर्म्मं छद्मना' इत्यत्र 'निरयति धर्म्मच्छद्मना' इति च मुद्रितपुस्तकपाठो न समीचीनः॥ १८ स०॥ ७९ श्लो०॥ ७९॥

इति कामन्दकीयनीतिसारटीकायां उपाध्यायनिरपेक्षानुसारिण्यां ऊनविंशः सर्गः॥

मुद्रितपुस्तकानुसारेण अष्टादशः सर्गः॥

---

## अथ विंशः सर्गः।

मुद्रितपुस्तकानुसारेण ऊनविंशः सर्गः।

कूटयुद्धमभिधायाथ प्रकाशयुद्धं सम्पादयितुं बलाङ्गानां कर्म्माणि, तत्र हस्तिकर्म्म श्लोकत्रयेण दर्शयति, प्रयाण इति। 'प्रयाणे' युद्धयात्रायां, 'पूर्व्वयायित्वं', 'वनदुर्गप्रवेशनं', परेषां त्रासजननार्थमिति शेषः। 'अक्षतानां' अक्षतपूर्व्वाणां, 'मार्गाणां' पथां, 'तीर्थानां' जलावतरणिकानां, च 'प्रवर्त्तनम्', महाकायत्वादिति भावः। 'क्षतानाञ्च प्रवर्त्तनं' इति पाठान्तरं। २० स०। १ श्लो०। १।

तोयेति। 'तोयावतार-सन्तारौ', 'तथा', 'एकाङ्गविजयः' एकेनैव हस्त्यङ्गेन परसैन्यविजयः, 'अभिन्नानां' मिलितानां, 'अनीकानां' परसैन्यानां, 'भेदनं' पृथक्करणं, हस्तिसमूहप्रेरणादिति भावः। 'भिन्नानां' विच्छिन्नानां, स्वसैन्यानां, 'सङ्ग्रहः' एकीकरणं। २० स०। २ श्लो०। २।

विभीषिकेति। 'विभीषिका' प्रभुत्तु भयप्रदर्शनं, 'विघातः' प्रभूणां व्याघातकरणं, 'पुरप्राकारभञ्जनं' 'पुरस्य' नगरस्य, 'प्राकारभञ्जनं' प्राचीरभङ्गः, 'प्राकारद्वारभञ्जनं' इति मुद्रितपुस्तकपाठः। 'कोषनीतिः' कोषानयनं, 'भयत्राणं' भयात् रक्षणं, एतानि 'हस्तिकर्म्म', 'प्रचक्षते' वदन्ति, पूर्व्वाचार्य्या इति शेषः। 'कोषनीतिर्भयत्राणं' इत्यत्र 'कोषनीतिभयत्राणमिति मुद्रितपुस्तकपाठो न सम्यक्। २० स०। ३ श्लो०। ३।

रथकर्म्माभिधातुमाह, तुरङ्गस्येति। तुरङ्गस्य सैन्यस्य निषेधो रक्षणं, 'भेदस्य' भिन्नस्य, 'सन्धानं', 'रथकर्म्म', 'चतुरङ्गस्य' परानीकस्य, 'निषेधः' प्रतिषेधः, 'बलरक्षणं' स्वकीयबलरक्षणं, 'अभिन्नसन्धानं', हस्तिकर्म्मैवत् प्रष्टव्यं इति रथकर्म्मैव सत्। हस्तिकर्म्माभिधायकश्लोकानन्तरं रथकर्म्माभिधायकश्लोकाः मुद्रितपुस्तके हस्तलिखितपुस्तकेषु च पतिताः, परन्तु हस्तलिखितपुस्तकेषु हस्तिकर्म्माभिधायकश्लोकव्याख्यानानन्तरं रथकर्म्मा-

भिधायकश्लोकस्य व्याख्यानं वर्त्तते तच्च व्याख्यानं ऽस्माभिर्यथा दृष्टमुद्धृतं, मूलादर्शनात् अपरिशोधितमेव ॥ २० स० ४ श्लो० ॥ ४ ॥

वनेति। वनानां दिशां मार्गाणां 'विषयः' निरूपणं, अश्वकर्म्मेति सम्बन्धः, 'वीवधासाररक्षणं' 'वीवधः' तण्डुलादिसंग्रहः, 'आसारः' सैन्यानां सर्व्वतोव्याप्तिः, तयोः रक्षणं, 'अनुयानापसरणे' परसैन्यस्य त्रासोत्पादनार्थं 'अनु' पश्चात्, 'यानं' गमनं, भङ्गदर्शनेन परबलान्याह्वय. दूरतरमसरणं, 'शीघ्रकार्य्योपपादनं' शीघ्रं सम्पादनीयानां कार्य्याणामुपपादनं, 'दीनानुसरणं' 'दीनानां' अनुकम्पनीयानां स्वबलानां, भयापसरणार्थं पश्चाद्गमनं अनुसरणं'। 'कोटीनां' उभयपक्षस्थितबलानां, 'जघनस्य' अवशिष्टपृष्ठभागस्थितबलस्य, च अनुसरणमिति शेषः, 'इत्यश्वकर्म्म'। 'पत्तेः' पदातिकबलस्य, च 'सर्व्वदा शस्त्रधारणं', पदातिकर्म्मेति शेषः। 'वनदिङ्मार्गप्रचयः' इति मुद्रितपुस्तकपाठः ॥ २० स० ५-६ श्लो० ॥ ५-६ ॥

शोधनमिति। 'कूपतीर्थानां' कूपजलावतरणस्थानानां, 'शोधनं' खननक्रिया, 'शिविरस्य' कन्धावारस्थानस्य, 'मार्गाणां', 'यवसादिषु' घासादिषु, आदिग्रहणात् वीरुद्गुल्मकण्टकशाखादिषु च यत् किञ्चित् कर्म्म तत् 'विष्टकर्म्म' विश्वेषां सकलबलानां, 'कर्म्म', 'विशेयं', 'यवसादि च यत्किञ्चित्' इत्यत्र 'यवसादिषु यत्किञ्चित्' इति टीकोद्धृतपाठः। 'विश्वकर्म्म तत्' इत्यत्र 'विश्वकर्म्मवत्' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० ७ श्लो० ॥ ७ ॥

बलवद्ध्यान्यभिधातुमाह, जातिरिति। 'जातिः' विशुद्धजातिमत्त्वं, 'सत्त्वं' उत्तमत्वं, 'वयः' तरुणत्वं, 'स्थानं' उत्पत्तिस्थानस्य उत्तमत्वं, 'प्राणिता' बलवत्त्वं, 'मर्म्म' जीवनस्थान-सन्धिस्थानादीनां विशुद्धत्वं, 'वेगिता' वेगवत्त्वं, 'तेजः' तैक्ष्ण्यं, 'शिल्पं' स्वे स्वे विषये कृतविद्यत्वं, 'उदग्रत्वं' उन्नतत्वं, 'स्थैर्य्यं' स्थितेरचलत्वं, 'धैर्य्यं' इति पाठान्तरं। 'साधु विधेयिता' साधु यथा भवति तथा यथोक्तकारिता, 'इति' एतत्, 'सद्यञ्जनाचारवतां' स्वकीयलक्षणाचारयुक्तानां, 'पत्त्यश्व-रथ-दन्तिनां', 'सद्यां' असाधारणचिह्नं, 'एतेन' उक्तलक्षणेन, 'युक्तान्' विशिष्टान्, पत्त्यश्व-रथ-दन्तिनः इति

शेषः । 'कर्म्मसु' युद्धकर्म्मसु, 'योजयेत्' प्रेरयेत् । 'जातिः सत्त्वं' इत्यत्र 'जातिस्थानं' इति, 'प्राजिता' इत्यत्र 'प्राजिनां' इति, 'उदयस्' इत्यत्र 'शीघ्रगत्वं' इति, पत्त्यश्व-रथ-दन्तिनां' इत्यत्र 'पत्त्यश्व-रथ-वाजिनां' इति च मुद्रितपुस्तकपाठा न समीचीनाः ॥ २० स० ८-६ श्लो० ॥ ८-६ ॥

पदातीनां युद्धानुकूलां भूमिमभिधातुमाह, सस्थूलेति । 'सापसारा' अपसरणप्रदेशसहिता, 'नातिविषमा' नातिबन्धुरा, या भूमिः सा पदातीनां युद्धानुकूला इति शेषः । अन्यत् स्पष्टं ॥ २० स० १० श्लो० ॥ १० ॥

अश्वानां युद्धानुकूलां भूमिमभिधातुमाह, अल्पेति । 'अल्पवृक्षोपला' अल्पा वृक्षाः उपलाश्च यस्यां सा तथाभूता । 'अपङ्का' गर्त्तरहिता, 'अलतिका' लतारहिता, 'अविदरा' स्फोटनरहिता, 'स्थिरा' दृढ़ा, 'निःश-र्करा' सूक्ष्मपाषाणरहिता, 'निम्नद्रु', 'सापसारा', एवम्भूता या भूमिः सा 'वाजिभूः' अश्वानां युद्धानुकूला भूमिरित्यर्थः ॥ २० स० ११ श्लो० ॥ ११ ॥

रथयुद्धानुकूलां भूमिमभिधातुमाह, निःस्थाणिवति । श्लोकद्वयं प्रतीतं । मुद्रितपुस्तके त्रयोदशसंख्यकः श्लोकः असङ्गतत्वात् हस्तलिखितपुस्तकेऽवि-द्यमानत्वाच्च न व्याख्यातः ॥ २० स० १२-१३ श्लो० ॥ १२-१३ ॥

गजानुकूलां भूमिमभिधातुमाह, मर्द्दनीयेति । श्लोकार्थः सुगमः ॥ २० स० १४ श्लो० ॥ १४ ॥

युद्धे राजस्थानमभिधातुमाह, जयेति । 'अप्रतिग्रहः' अनाक्रमणीयः; 'मतिमान्' नीतिशास्त्रनिपुणः, 'जयार्थी' विजिगीषुः, 'नैव युध्येत' स्वयं युद्धं न कुर्व्वीत । 'वा' यदि, 'आवश्यकत्वात्', 'युध्येत', 'तदा', 'अतिबल-वेष्टितः', सन् युध्येत इत्यर्थः । हस्तलिखितपुस्तके तु श्लोकोऽयं भिन्नक्रमेण लिखितः स च क्रमः, "जयार्थी स्थपतिस्तिष्ठेत् दूरं गत्वाप्रतिग्रहे । भिन्नञ्च प्रतिसन्दधीयात् न हि युध्येत तं विना" इति । व्याख्यानन्तु 'जयार्थी' विजिगीषुः राजा, 'दूरं' युद्धक्षेत्रात् इति शेषः, 'गत्वा तिष्ठेत्', अप्रतिग्रहे स्थाने स्थितः 'भिन्नं' परैरपहृतं प्रतिग्रहविकलमिति यावत्, स्वसैन्यमिति शेषः 'प्रतिसन्दधीयात्' रक्षेदित्यर्थः, 'हि' यतः, 'तं' राजानं, 'विना न युध्येत', सैन्यमिति शेषः ॥ २० स० १५ श्लो० ॥ १५ ॥

कोषस्थानमभिधातुमाह, गजेष्वेति। कोषः गजेषु आरोपितः कार्य्यः, तथा च सुरक्षो भवतीति। 'शीघ्रयानैः' तुरङ्गोष्ट्रादिभिः यानैः, 'अधिष्ठितः' सन्निधापितः, रक्षासौकार्य्यार्थमेवेति भावः। 'यत्र', 'राजा' विजिगीषुः, 'तत्र', 'कोषः', 'हि' यस्मात्, 'राजता', 'कोषाधीना', यस्य कोषः स एव राजा भवतीत्यर्थः॥ २० स० १६ श्लो०॥ १६॥

कोषप्रयोजनमभिधातुमाह, प्रत्यय इति। 'प्रत्यये' अभिनवे, 'कर्म्मणि' अनुवधादौ, 'कृते' निर्वर्त्तिते सति, 'श्लाघमानः' वर्णयन्, 'कृतादरः' कृतसम्मानः, 'योधेभ्यः', 'ततः' तस्मात्, 'दद्यात्' स्वकोषं प्रयच्छेत्, 'हि' यस्मात्, 'कः' कोनाम पुरुषः, 'दातुः' दानशीलस्य विजिगीषोः, 'न युध्येत', अपि तु सर्व्व एव युध्येत॥ २० स० १७ श्लो०॥ १७॥

दानसंख्यामभिधातुमाह, दद्यादिति। विजिगीषुः 'प्रहृष्टः' आह्लादितः, सन्, 'राजघातिने' शत्रुबलेषु यो राजा तद्घातिने, 'वर्णानां' आह्मिणक्षत्रियविशेषाणां, 'नियुतं' लक्षं, 'दद्यात्',। 'तत्सुतवधे' तस्य राज्ञः सुतवधे, 'तथा सेनापतिवधे', 'तदर्द्धं' नियुतार्द्धं, पञ्चाशत्सहस्राणीत्यर्थः। दद्यादिति पूर्व्वेणानान्वयः एवमुत्तरत्रापि॥ २० स० १८ श्लो०॥ १८॥

प्रवीरायामिति। 'प्रवीरायां' प्रकृष्टवीरायां, यः 'मुख्यः' प्रधानं, तस्य 'वधे' 'शतगुणं शतं' दशसहस्रं, 'कुञ्जरवधे' हस्तिवधे, 'तदर्द्धं' शतगुणशतार्द्धं, पञ्चसहस्रमिति यावत्। 'प्रधानस्यन्दनस्य' प्रधानरथस्य, 'वधे' विनाशे, च तदर्द्धमिति सम्बन्धः। 'प्रधानस्यन्दनस्य च', इत्यत्र 'प्रदानं स्यन्दनस्य च', इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० १९ श्लो०॥ १९॥

सहस्रस्येति। 'चापिवधे' धन्विवधे, 'सहस्रं' दशशतं, 'पत्तिमुख्यवधे' पदातिप्रधानविनाशे, 'गवां विंशतिकं', 'सर्व्वं' समस्तं सैन्यं, 'भोगद्वैगुण्यं' 'भोगः' उपजीविका, तस्य द्वैगुण्यं यत्र तत् तथाभूतं कुर्य्यादिति शेषः। 'पत्तिमुख्यवधे' इत्यत्र 'पतिमुख्यवधे' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० २० श्लो०॥ २०॥

रूप्यमिति। 'रूप्यं' रजतं, 'हेम' सुवर्णं, 'कुप्यं' स्वर्णरौप्यभिन्नधातुः, 'यो',

'यत्नजयति', 'तस्य मत्'। 'वा' अथवा, 'हृष्टः' आकारादितः, 'नराधिपः' राजा, 'योधान्', 'वस्त्वनुरूपं' कार्य्यानुरूपं, 'दद्यात्'। 'वस्त्वनुरूपं वा' इत्यत्र 'वस्त्वनुरूपं हि' इति मुद्रितपुस्तकपाठः, 'योधान् नराधिपः' इत्यत्र 'योधान् प्रहर्षयन्' इति पाठान्तरं, 'रूप्यं' इत्यत्र 'गुण्यं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० २१ श्लो० ॥ २१ ॥

व्यूहरचनायां बलानां व्यवस्थानभूमिमभिधातुमाह, पञ्चेति। 'अरत्निः' विस्तृतकनिष्ठः बद्धमुष्टिहस्तः, तैः पञ्चभिः कल्पितं देशमानं 'धनुः', 'तस्मिन्' धनुषि, पञ्चारत्निप्रमाणभूभाग इति यावत्। 'धन्विनं' धनुर्धरं, 'युधि' संग्रामे, 'स्थापयेत्'। 'त्रिगुणे' धनुस्त्रयपरिमितस्थाने, पञ्चदशारत्नि-भूभागे इति यावत्। 'अश्वः', योज्यः' इति शेषः। 'पञ्चसु पञ्चसु' पञ्च-गुणितेषु पञ्चधनुःषु, पञ्चविंशत्यरत्निप्रमाणभूभागेष्विति यावत्। 'रथ-गजौ', 'योज्यौ' स्थापनीयौ। 'पञ्चारत्निर्धनुस्तस्मिन् स्थापयेद् धन्विनं' इत्यत्र 'पञ्चाशद्विधमुत्सर्पेण् स्थापयेद्बलिनं' इति मुद्रितपुस्तकपाठो न सम्यक्। 'त्रिगुणेऽश्वः' इत्यत्र 'त्रिगुणाश्वो' इति मुद्रितपुस्तकपाठोऽपि न सम्यक्॥ २० स० २२ श्लो० ॥ २२ ॥

व्यूहरचनायां बलानां असङ्कुलार्थं परस्परान्तरमभिधातुमाह, समेति। 'समः' चतुर्दशाङ्गुलप्रमाणं, सः 'अन्तरं' अन्तरालं, यस्य स तथाभूतः, 'पुरुषः' पदातिपुरुषः, एकपदातिपुरुषात् अपरपदातिपुरुषस्यान्तरं चतुर्दशाङ्गुलप्रमाणमितिभावः। 'तुरङ्गः' अश्वः, 'त्रिसमान्तरः' द्विचत्वारिंशदङ्गुलप्रमाणान्तरः, एकतुरङ्गात् अपरतुरङ्गः उक्तप्रमाणान्तरः इति भावः। 'कुञ्जरः' हस्ती, 'स्यन्दनः' रथश्च, 'पञ्चसमान्तरः' सप्तत्यङ्गुलप्रमाणान्तरः, एककुञ्जरात् अपरकुञ्जरः एकस्यन्दनात् अपरस्यन्दनश्च उक्तप्रमाणान्तर इति भावः॥ २० स० २३ श्लो० ॥ २३ ॥

तथेति। 'व्यायामे' युद्धार्थप्रसरणे, तथा 'विनिवर्त्तने' विश्रामार्थापसरणे, 'यथा' येनप्रकारेण, 'असंबाधो भवेत्' सङ्कीर्णता न भवेत्, 'तथा' तेन प्रकारेण, 'मत्त्यश्व-रथ-दन्तिनः', 'युध्येरन्'। विस्तीर्णायां रणभूमौ पूर्व्वोक्त-

प्रमाणादधिकमप्यन्तरालं कार्य्यमितिभावः। 'व्यायामे' इत्यत्र 'व्यायामः' इति मुद्रितपुस्तकपाठो न साधुः ॥ २० स० २४ श्लो० ॥ २४ ॥

असङ्करेणेति। 'असङ्करेण' भिन्नजातीयामिश्रणेन, 'युद्धेरन्', यतः 'सङ्करः' भिन्नजातीयमिश्रणं, 'सङ्कुलावहः' सङ्कीर्णताप्रापकः। 'तु' पुनः, 'महासङ्कुलयुद्धे', 'महागजान्', 'संश्रयेरन्', व्याकुलत्वापनोदनार्थमिति-भावः। 'असङ्करेण' इत्यत्र 'सङ्करेण च' इति 'महागजान्' इत्यत्र 'महा-कुलान्' इति च मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० २५ श्लो० ॥ २५ ॥

बलविशेषस्य प्रतियोद्धृनभिधातुमाह, अश्वस्येति। 'अश्वस्य' अश्वा-रोहिणः पुरुषस्य, 'त्रयः' त्रिसंख्यकाः, 'पुरुषाः' पदातयः, 'प्रतियोद्धारो-भवेयुः', 'कुञ्जरस्य' हस्त्यारोहिणः पुरुषस्य, 'पञ्चाश्वाः' पञ्चसंख्यका अश्वा-रोहिणः पुरुषाः, प्रतियोद्धारो भवेयुरिति पूर्व्वेणान्वयः। 'इतिकल्प्याः' एवं प्रणाल्याः, 'विधेयाः' विधातव्याः। 'अश्वस्य' इत्यत्र 'अश्वश्च' इति मुद्रित-पुस्तकपाठो न सम्यक् ॥ २० स० २६ श्लो० ॥ २६ ॥

कुञ्जरस्य प्रतियोद्धृन्तरमभिधातुमाह, पादचारा इति। 'दशपञ्च च पादचाराः पुरुषाः' पञ्चदशसंख्यकाः पदातिपुरुषाः, कुञ्जरस्य प्रतियोद्धारो भवेयुरितिशेषः। 'नागस्य' हस्तिनः, 'कथितं' उक्तं, 'इति' एवं, 'विधानं', 'स्यन्दनस्य' रथस्य, विज्ञेयमितिशेषः। 'पादचारा भवेयुश्च' इत्यत्र 'पादश्चो भावयेदश्व' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० २७ श्लो० ॥ २७॥

अनीकानां परस्परान्तरमभिधातुमाह, अनीकेति। 'अनीकं' व्यूहाङ्गं, 'इति' उक्तक्रमेण, अश्वपदातियुक्ताः 'नवद्विपाः', अनीकमपि 'कल्प्याः' कल्पनीयाः, तथाच 'तस्यानीकस्य', 'रन्ध्रं' अन्तरालं, 'पञ्चचापं' पञ्चविं-शत्यरत्निप्रमाणं, भवतीतिशेषः। अस्य श्लोकस्य पूर्व्वार्द्धं मुद्रितपुस्तके नास्ति, पूर्व्वार्द्धन्तु "अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः"। 'तस्या-नीकस्य' इत्यत्र 'तथानीकस्य' इति मुद्रितपुस्तकपाठः। यत् शेषार्द्धमुक्तं तत् हस्तलिखितपुस्तके अवर्त्तमानं अतीवासङ्गतञ्च ॥ २० स० २८ श्लो० ॥ २८ ॥

इत्यनीकेति। 'इत्यनीकविभागेन' नवद्विपपरिकल्पितेन, 'व्यूहसम्पदः'

बलज्ञैः, 'स्थापयेत्' । 'उरस्यकक्षपक्षान्' 'उरस्याः' 'उरसि' व्यूहस्य मध्ये, रचितसैन्यानि, 'कक्ष्याः' कक्षस्थितसैन्यानि, 'पक्ष्याः' पक्षस्थितसैन्यानि, 'एतान्', 'तुल्यान्', समद्विपसंस्थान्, 'प्रचक्षते' । अयं श्लोको मुद्रित-पुस्तके नास्ति । श्लोकस्तु "द्व्यनीकविभागेन स्थापयेद् व्यूहसम्पदः । उरस्यकक्षपक्षांश्च तुल्यानेतान् प्रचक्षते" इति । १० स० २९ श्लो० ॥ २९ ॥

व्यूहस्य अङ्गान्यभिधातुमाह, उर इति । 'उरः' व्यूहमध्यस्थमनीकं, 'कक्षौ' उरस्यस्य सन्निहितपार्श्वद्वयस्थमनीकं, 'पक्षौ' कक्षाधःपार्श्वद्वयस्थम-नीकं, 'मध्यं' पक्षयोर्बहिःस्थितमनीकं, 'पृष्ठं' मध्यस्य पृष्ठतोऽवस्थितमनीकं, 'प्रतिग्रहः' पृष्ठाख्यादनीकात् द्विशतधनुर्व्यवहितमनीकं, 'कोटिः' एकपक्ष-स्थितमनीकं, 'व्यूहशास्त्रज्ञैः' व्यूहशास्त्रनिपुणैः, 'सप्ताङ्गः' उरःप्रभृति-सप्तविधाङ्गसम्पन्नः, 'व्यूहः', 'इष्यते' । १० स० ३० श्लो० ॥ ३० ॥

आचार्य्यमतमभिधातुमाह, उरस्येति । 'उरस्यकक्षपक्षैस्तु' उरःस्थित-कक्षस्थित-पक्षस्थितानीकैः, 'प्रतिग्रहैश्च' प्रतिग्रहस्थितानीकैश्च, 'अयं व्यूहः', 'गुरोः' बृहस्पतेः । 'पक्षाभ्यां परिवर्जितः' पक्षस्थितानीकविरहितः, 'एषः' व्यूहः, 'शुक्रस्य' शुक्राचार्य्यस्य, अभिमतः इति शेषः । 'कक्षाभ्यां परिवर्जितः' इति मुद्रितपुस्तकपाठः । 'उरस्यकक्षपक्षैस्तु व्यूहोऽयञ्च प्रतिग्रहैः' इत्यत्र 'उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः' इति मुद्रितपुस्तकपाठः । १० स० ३१ श्लो० ॥ ३१ ॥

सेनाङ्गपतिलक्षणमभिधातुमाह, अभेद्या इति । 'अभेद्याः' भेदेनावध्याः, 'कुलजाः' सद्वंशोत्पन्नाः, 'मौलाः' मूलपुरुषसम्बन्धादागताः, 'लब्धलक्ष्याः' लब्धो लक्ष्यो यैः [illegible] तथाभूताः, 'प्रहारिणः' प्रहरणशीलाः, 'दृष्टयुद्धप्रति-क्रियाः' दृष्टा 'युद्धप्रतिक्रिया' युद्धप्रतिकारः, [illegible]ः ते तथाभूताः, एवंभूता जनाः 'सेनाङ्गपतयः' 'सेनाङ्गानां' हस्त्यश्व-रथ-पदातिरूपचतुरङ्गबलानां, 'पतयः' अधिष्ठातारः, 'कार्य्याः' । 'मौलाः' इत्यत्र 'मेध्याः' इति मुद्रित-पुस्तकपाठः । १० स० ३२ श्लो० ॥ ३२ ॥

सेनाङ्गपतिविशेषमभिधातुमाह, प्रवीरेति । श्लोकार्थः प्रतीतः । १० स० ३३ श्लो० ॥ ३३ ॥

फल्ग्विति। 'फल्गु' असारं, 'यत्किञ्चित् सैन्यं', 'तत्', 'व्यूहस्य' सप्राङ्ग-व्यूहस्य, 'मध्ये भवेत्'। 'यत्किञ्चित्', 'युद्धवस्तु' युद्धोपकरणादिकं, 'तत्' 'जघने' व्यूहस्य जघनप्रदेशे, 'भवेत्'। 'फल्गुसैन्यञ्च' इत्यत्र 'फल्गुसैन्यस्य' इति मुद्रितपुस्तकपाठो न सम्यक् ॥ २० स० २४ श्लो० ॥ २४ ॥

प्रतिग्रहानीकस्यैव विशेषमभिधातुमाह, युद्धार्थमिति। 'युद्धकुशलः' युद्धशास्त्रनिपुणः, विजिगीषुरितिशेषः। 'युद्धार्थं' संग्रामार्थं, 'मुख्यानीकं', छत्रचामरादिराजचिह्नरहितं सैन्यं, 'नियोजयेत्'। स्वयन्तु युद्धस्थले न यायादितिभावः। तेनैव राजा रक्षितो भवति। 'हि' यतः, 'युद्धं' 'नायकप्राणं' विजिगीषुप्राणं। 'तत्' युद्धं, 'अनायकं' विजिगीषुरहितं, सत् 'हन्यते' विपक्षं भवति। 'युद्धकुशलः' इत्यत्र 'युद्धकुशलं' इति मुद्रितपुस्तकपाठो न साधुः। 'मुख्यानीकं' इत्यत्र 'चयद्धानीकं' इति मुद्रितपुस्तकपाठः ॥ २० स० २५ श्लो० ॥ २५ ॥

अचलव्यूहं अप्रतिहतव्यूहञ्चाभिधातुमाह, व्यूह इति। 'अनुपृष्ठमिति वीप्सा द्वयोः। तथाच अनुपृष्ठं अनुपृष्ठं विन्यस्तैः 'पत्त्यश्व-रथ-दन्तिभिः' 'अचलः' अचलनामकः, 'व्यूहः', भवतीतिशेषः। तद्यथा पत्तीनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः दन्तिनः। 'तथा' अनुपृष्ठं अनुपृष्ठं विन्यस्तैः, 'हस्त्यश्व रथ-पत्तिभिः', 'अप्रतिहतः' अप्रतिहताख्यः, 'व्यूहः', 'ज्ञेयः'। तद्यथा हस्तिनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः पत्तयः इति ॥ २० स० २६ श्लो० ॥ २६ ॥

अन्तभिदं व्यूहमभिधातुमाह, मध्येति। यस्य व्यूहस्य 'मध्यदेशे', 'हयानीकं' अश्वसैन्यं, 'कक्षयोः', 'रथानीकं' रथारूढसैन्यं, 'पक्षयोः', 'गजानीकं' गजारूढसैन्यं, सोयं 'व्यूहः', 'अन्तभित्' 'अन्तं' शत्रुबलस्य मध्यं, भिनत्ति यः स तथाभूतः, 'स्मृतः', ॥ २० स० २७ श्लो० ॥ २७ ॥

बलानां कस्यचिदभावे व्यूहविधौ विधेयमाह, रथेति। श्लोकार्थः सुगमः ॥ २० स० २८ श्लो० ॥ २८ ॥

बलानां बाहुल्ये विधेयमाह, विभज्येति। 'पत्त्यश्व-रथ-कुञ्जरान्',

'विभज्य', 'व्यूहे' साकारे व्यूहे, 'प्रक्षिपेत्' । 'यदि', 'दण्डबाहुल्यं' बलप्राचुर्य्यं, 'स्यात्', 'तदा', व्यूहः 'आवापः', 'प्रकीर्त्तितः', अधिकबलानां आवपनात् । अस्य श्लोकस्य उत्तरार्द्धस्थाने अपरार्द्धं मुद्रितपुस्तके मुद्रितं, तदर्द्धन्तु अत्र न सङ्गतं । अस्य शेषार्द्धन्तु एकचत्वारिंशदद्वितश्लोकस्य पूर्व्वार्द्धस्थाने मुद्रितं । तत्तु । "यदि स्याद्दण्डबाहुल्यं तदावापः प्रकीर्त्तितः", इति 'व्यूहे' इत्यत्र 'मध्ये' इति मुद्रितपुस्तकपाठः ॥ २० स० ३९ श्लो० ॥ ३९ ॥

महाव्यूहस्य भेदाननभिधातुमाह, धनुरिति । श्लोकार्थः सुगमः । अयं श्लोकः हस्तलिखितपुस्तकद्वये नास्ति ॥ २० स० ४० श्लो० ॥ ४० ॥

साकारव्यूहानां तद्भेदानाञ्च उद्देशमभिधातुमाह, मण्डलेति । मण्डलञ्च असंहतस्य 'मण्डलासंहतौ' वक्ष्यमाणलक्षणौ, 'भोगो दण्डश्च' एतावपि वक्ष्यमाणलक्षणौ । एते चत्वारः एव 'मनीषिभिः', 'प्रकृतिव्यूहाः' विकृतिरहिताः व्यूहाः, 'प्रकीर्त्तिताः' । 'मण्डलासंहतौ' इत्यत्र 'मण्डलोऽसंहतः' इति मुद्रितपुस्तकपाठः ॥ २० स० ४१ श्लो० ॥ ४१ ॥

दण्डादिव्यूहानां लक्षणमभिधातुमाह, तिर्य्यगिति । 'तिर्य्यक्', 'वृत्तिः' अवस्थितिः, यस्यासौ 'दण्डः' दण्डाख्यः व्यूहः, सैन्यानां दण्डवत्तिर्य्यगवस्थितिर्दण्ड इति भावः । 'भोगः' भोगाख्यः व्यूहः, 'अन्वावृत्तिः' 'अनु' पश्चाद्भावेनावृत्तिर्यस्यासावन्वावृत्तिः । 'भोगोऽन्वावृत्तिरेव च' इत्यत्र 'भोगत्वाद् वृत्तिरेव च' इति मुद्रितपुस्तकपाठो न सम्यक् । 'मण्डलः', 'सर्व्वतोवृत्तिः' सर्व्वतोमुखः, मण्डलाकारे व्यूहे सर्पशरीरवन्मण्डलस्थितानां गजादिसैन्यानामवस्थितिरिति भावः । 'पृथक् वृत्तिः' 'असंहतः' असंहताख्यः व्यूहः, अत्र व्यूहे समस्तसैन्यानां पृथग्भावेनावस्थितिरिति भावः । तद्यथा । क. उ. क. । अस्य श्लोकस्य शेषार्द्धं मुद्रितपुस्तके नास्ति । शेषार्द्धन्तु "मण्डलः सर्व्वतोवृत्तिः पृथक्वृत्तिरसंहतः" इति ॥ २० स० ४२ श्लो० ॥ ४२ ॥

दण्डव्यूहस्य भेदानभिधातुमाह, प्रदर इत्यादिना । दण्डस्य प्रदरेत्यादयः सप्तदश भेदा भवन्ति । अन्यत् प्रतीतं । 'दण्डभेदास्तुदुर्जयः' इत्यत्र

'दण्डभेदाः सुदुर्जयः' इति मुद्रितपुस्तकपाठः ॥ २० स० ४३-४४ श्लो० ॥ ४३-४४ ॥

प्रदरादीनां लक्षणान्याह, अतिक्रान्त इत्यादिना। 'अतिक्रान्तस्तु पक्षाभ्यां', अविपर्य्यये इत्यर्थः। स एव दण्डः पक्षाभ्यां 'अतिक्रान्तः' अतिक्रम्यगतः, प्रदरो भवति। उभयकक्षस्थपरानीकप्रदारणात् प्रदराख्य इतिभावः। तस्याकारो यथा | क क |। 'प्रतिक्रान्तः' पक्षाभ्यां प्रतिक्रान्तः पश्चाद्गतः, दृढ़को भवति। तस्याकारः तद्यथा | क. उ. क. |। 'अतिक्रान्तस्तु पक्षाभ्यां' इति, कक्ष-पक्षाभ्यां अतिक्रान्तः असह्यो व्यूहः, तस्याकारः तद्यथा | प ० प / क उ क / प्र |। 'त्रयोन्यस्येति व्यूहत्रितयस्य विपर्य्ययः चापः, कक्षाभ्यां प्रतिक्रान्तत्वात् चापसंज्ञा। तद्यथा | प उ प / क क / प्र |। 'तद्विपर्य्ययः' दृढ़कविपर्य्ययः, अतिक्रान्तपक्षत्वात्। असह्यविपर्य्ययः 'प्रतिष्ठः', प्रतिक्रान्तपक्षत्वात्। श्येनाकारत्वात् श्येनाख्यः। 'स्थूणापक्षः' पक्षयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणापक्षः। अयं विजयाख्यः व्यूहः। 'धनुःपक्षः' इति चापव्यूहः पक्षयोः-स्थाने यस्यासौ 'धनुःपक्षः', अयं सञ्जयाख्यः व्यूहः। 'द्विस्थूणः' इति द्विगुणितस्थूणः, अयं विशालविजयाख्यः व्यूहः। तस्याकारः तद्यथा | ≡ = ≡ = ≡ |। 'दण्ड ऊर्द्धगः इति, ऊर्द्धगो दण्ड इत्येव सूचीव्यूहो भवति। तद्यथा | ≡ ‑ ‑ ‑ ≡ | कर्णयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणाकर्णः 'अतिक्रान्तपक्ष इति, अयं चमूमुखः व्यूहः। 'अन्योस्य विपर्य्यय इति 'अस्य' चमूमुखस्य व्यूहस्य, 'विपर्य्ययः', उत्तरस्य पक्षाभ्यां प्रतिक्रान्तपक्षत्वात् मुखाख्यो व्यूहो- भवति। तद्यथा | क. प. उ. क. प. |। 'द्विचतुर्दण्ड इति द्विगुणितदण्डो बलयो भवति। चतुर्गुणितदण्डो दुर्जयो भवति। तद्यथा | क. प. उ. क. प. / प्र | ॥ २० स० ४५-४६-४७ श्लो० ॥ ४५-४६ ४७ ॥

भोगभेदानामुद्देशमाह, गोमूत्रिकेत्यादि। 'गोमूत्रिका' गवां मूत्ररेखाकारो विद्यते यस्याः तथाभूता। 'अहिसारी' अहेः सरणस्थानमहिसारीत्यभिधीयते। 'अहिसारी च' इत्यत्र 'अहिसञ्चारी' इति मुद्रितपुस्तकपाठः। अनयोः प्रयोगः तद्यथा | क | उ | क | प | उ | ॥ २० स० ४८ श्लो० ॥ ४८ ॥

दण्डेति। दण्डव्यूहः पक्षस्थाने यस्यासौ 'दण्डपक्षः' 'युगोरस्यः' इति उरस्यं द्विगुणितं विधेयमित्यर्थः अर्थात्पक्षा कक्षानीके विधेयः। 'तद्विपर्य्ययः मकरः' इति सर्व्वप्रकटसंस्थविपर्य्ययमुखो मकरः। तथा 'व्यतिकीर्णो ज्ञेयः कुञ्जरवाजिभिरिति, परितः पताकाकारोयं व्यूहः मध्ये कुञ्जरवाजिभिर्व्यतिकीर्णो भवति, मकर एवेति। 'अवकीर्णः' इति, 'कुञ्जरराजिभिः' इति च मुद्रितपुस्तकपाठः। पूर्व्वश्लोके 'परिपताकका' इत्यत्र 'परिपतन्तकः' इति मुद्रितपुस्तकपाठो न समीचीनः ॥ २० स० ४८ श्लो० ॥ ४९ ॥

मण्डलभेदानभिधातुमाह, मण्डलेति। 'मण्डलव्यूहभेदौ सर्व्वतोभद्रदुर्जयौ'। तत्र प्रथमः सर्व्वतोमुखः, गजानीकोयं दुर्जयः ॥ २० स० ५० श्लो० ॥ ५० ॥

असंहतभेदानभिधातुमाह, अर्द्धचन्द्रक इति। 'अर्द्धचन्द्रकः' अर्द्धचन्द्राकृतिः, तद्यथा | क क | उ |। 'उद्धारः' चतुःसैन्यः, तथा पञ्चसैन्यः, तथा कर्कटाख्यः, तथा काकपादिका, तथा गोधिका, इत्यादयो व्यूहास्त्वाकारभेदेन ज्ञेयाः। कर्कटशृङ्गाद्याकारसदृशरचिततत्तत्सैन्यं व्यूहानां कर्कटशृङ्गादीनि नामधेयानि भवन्तीति फलितार्थः ॥ २० स० ५१-५२ श्लो० ॥ ५१-५२ ॥

एत इति। 'प्रयोकृतिः' व्यूहविधानज्ञैः, 'एते सप्तदश', 'भेदतः' विभागतः, 'प्रोक्ताः' प्रकर्षेण कथिताः। 'तथा', 'मण्डलस्य' मण्डलाख्यस्य व्यूहस्य, 'भेदतः', 'व्यूहद्वयं', प्रोक्तं। 'असंहताः' असंहताख्याः 'व्यूहाः' 'षट्' षड्विधाः। 'भोगव्यूहाः' भोगाख्यव्यूहाः, 'पञ्चधा' पञ्चप्रकाराः।

'युद्धकाल उपस्थिते' युद्धसमये आगते। 'व्यूहैः', 'प्रयोज्याः स्युः' प्रागुक्ता व्यूहाः प्रयोक्तव्या भवेयुः। 'दण्डव्यूहाश्च भेदतः' इत्यत्र, दण्डव्यूहाश्च यथा' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५३-५४ श्लो० ॥५३-५४॥

पक्षादीनामिति। 'पक्षादीनामनीकेन' पक्षादिस्थितसैन्येन, 'हत्वा' विनाश्य, 'ग्रैवैः' अवशिष्टानीकैः, 'परिक्षिपेत्' वेष्टयेत्। 'उरसा' उरःस्थितानीकेन, 'समाहत्य', 'कोटीभ्यां' कोटिद्वयस्थसैन्यैः, 'परिवेष्टयेत्', शत्रुसैन्यानीतिशेषः। 'ग्रैवैः' इत्यत्र 'ग्रैवं' इति, 'परिवेष्टयेत्' इत्यत्र 'परिवेष्टयन्' इति च मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५५ श्लो० ॥५५॥

परकोटीत्यादिश्लोकद्वयं प्रतीतार्थं। 'व्यूहप्रयत्नेन' इत्यत्र 'व्यूहप्रयोगेन' इति पाठान्तरं। 'व्यूहक्लृप्तैः' इत्यत्र 'व्यूहजातं' इति मुद्रितपुस्तकपाठो न सम्यक्॥ २० स० ५६-५७ श्लो० ॥५६-५७॥

यत इति। विजिगीषुः उभयपक्षेपि 'यतः' यत्र, 'फल्गु' असारं सैन्यं, तथा 'यतः' यत्र, 'अभिन्नं' संहतं सैन्यं, एवं 'यतः' यत्र, 'व्यूहैरधिष्ठितं', 'ततः' तत्र, 'रिपुबलं हन्यात्'। 'आत्मानञ्चापि' स्वकीयबलञ्चापि, 'संहयेत्' वर्द्धयेत्। 'व्यूहैरधिष्ठितं' इत्यत्र 'दुर्गैरधिष्ठितं' इति मुद्रितपुस्तकपाठः॥ २० स० ५८ श्लो० ॥५८॥

सारमिति। 'सारं' सारवदरिसैन्यं, 'द्विगुणसारेण' अरिसैन्यसारात् द्विगुणसारवता निजबलेन, 'फल्गु' असारमरिसैन्यं, 'सारेण' सारवता निजबलेन, 'पीडयेत्' हन्यात्। 'संहतं' अभिन्नमरिसैन्यं, 'प्रचण्डैः' भीषणैः, 'गजानीकैः' गजसैन्यैः, 'दारयेत्' पीडयेत्। 'सारं' इत्यत्र 'अरिं' इति मुद्रितपुस्तकपाठो न समीचीनः॥ २० स० ५९ श्लो० ॥५९॥

दुर्जयानिति। 'सिंहवसासिक्तैः' 'सिंहस्य', 'वसया' मेदसा, 'सिक्तैः' उक्षितैः। अन्यत् स्पष्टं॥ २० स० ६० श्लो० ॥६०॥

सलोहेति। 'सलोहजालैः' लोहजालावृतैः, 'दृढबद्धदन्तैः', 'सुकल्पितैः' सुसज्जितैः, 'ऊर्जितपादरक्षैः' सुदृढचर्मसंनद्धपादैः, 'प्रवीरयोधैः' प्रशस्त-